# शार्ङ्गधर संहिता

## पूर्वखण्डे प्रथमोऽध्यायः

मङ्गलाचरणम्

श्रियं स दद्याद्भवतां पुरारिर्यदङ्गतेजःप्रसरे भवानी
विराजते निर्मलचन्द्रिकायां महौषधीव ज्वलिता हिमाद्रौ १

समूलं ग्रन्थप्रयोजनम्

प्रसिद्धयोगा मुनिभिः प्रयुक्ताश्चिकित्सकैर्ये बहुशोऽनुभूताः
विधीयते शार्ङ्गधरेण तेषां सुसंग्रहः सज्जनरञ्जनाय २

रोगनिश्चयपूर्वकं चिकित्सा

हेत्वादिरूपाकृतिसात्म्यजातिभेदैः समीक्ष्यातुरसर्वरोगान्
चिकित्सितं कर्षणबृंहणाख्यं कुर्वीत वैद्यो विधिवत्सुयोगः ३

औषधिप्रभावाः

दिव्यौषधीनां बहवः प्रभेदा वृन्दारकाणामिव विस्फुरन्ति
ज्ञात्वेति संदेहमपास्य धीरैः संभावनीया विविधप्रभावाः ४

ग्रन्थप्रयोजनम्

स्वाभाविकागन्तुककायिकान्तरा रोगा भवेयुः किल कर्मदोषजाः
तच्छेदनार्थं दुरितापहारिणः श्रेयोमयान्योगवरान्नियोजयेत् ५

ग्रन्थमाहात्म्यम्

प्रयोगानागमात्सिद्धान्प्रत्यक्षादनुमानतः
सर्वलोकहितार्थाय वक्ष्याम्यनतिविस्तरात् ६

पूर्वखण्डाध्यायानुक्रमः

प्रथमं परिभाषा स्याद्भैषज्याख्यानकं तथा
नाडीपरीक्षाऽदिविधिस्ततोदीपनपाचनम् ७

ततः कलाऽदिकाख्यानमाहारादिगतिस्तथा
रोगाणां गणना चैव पूर्वखण्डोऽयमीरितः ८

मध्यमखण्डाध्यायानुक्रमः
स्वरसः क्वाथफाण्टौ च हिमः कल्कश्च चूर्णकम्
तथैव गुटिकालेहौ स्नेहाः संधानमेव च
धातुशुद्धी रसाश्चैव खण्डोऽय मध्यमः स्मृतः ९

उत्तरखण्डाध्यायानुक्रमः
स्नेहपानं स्वेदविधिर्वमनं च विरेचनम्
ततस्तु स्नेहबस्तिः स्यात्ततश्चापि निरूहणम् १०

ततश्चाप्युत्तरो बस्तिस्ततो नस्यविधिर्मतः
धूमपानविधिश्चैव गण्डूषादिविधिस्तथा ११

लेपादीनां विधिः ख्यातस्तथा शोणितविस्रुतिः
नेत्रकर्मप्रकारश्च खण्डः स्यादुत्तरस्त्वयम् १२

ग्रन्थसंख्या
द्वात्रिंशत्संमिताध्याययुक्तेयं संहिता स्मृता
षड्विंशतिशतान्यत्र श्लोकानां गणितानि च १३

मानस्यावश्यकता
न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित्
अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया १४

मागधमानपरिभाषा
त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः
त्रसरेणुस्तु पर्यायनाम्ना वंशी निगद्यते १५

परमाणोर्वंश्याश्च लक्षणम्

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः
तस्य त्रिंशत्तमो भागः परमाणुः स कथ्यते १६

जालान्तरगतैः सूर्यकरेर्वंशी विलोक्यते १७

मरीचिप्रभृतिसंज्ञाः
षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिस्तु राजिका
तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः १८

यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम्
षड्भिस्तु रक्तिकाभिः स्यान्माषको हेमधान्यकौ १९

शाणकोलसंज्ञे
माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते
क्षुद्रको वटकश्चैव द्रङ्क्षणः स निगद्यते २०

कर्षस्तत्पर्यायाश्च
कोलद्वयं च कर्षः स्यात्स प्रोक्तः पाणिमानिका २१

अक्षं पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम्
विडालपदकं चैव तथा षोडशिका मता २२

करमध्यो हंसपदं सुवर्णं कवलग्रहः
उदुम्बरं च पर्यायैः कर्ष एव निगद्यते २३

अर्द्धपलपल संज्ञे
स्यात्कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा
शुक्तिभ्यां च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका
प्रकुञ्चः षोडशी बिल्वं पलमेवात्र कीर्त्तर्यते २४

प्रसृतिकुडवादिशरावसंज्ञा
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतश्च निगद्यते
प्रसृतिभ्यामञ्जलि स्यात्कुडवोऽर्द्धशरावकः २५

अष्टमानं च स ज्ञेयः कुडवाभ्यां च मानिका
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः २६

प्रस्थाढकसंज्ञे
शरावाभ्यां भवेत्प्रस्थश्चतुः प्रस्थैस्तथाऽढकम्
भाजनं कंसपात्रं च चतुःषष्टिपलं च तत् २७

द्रोणद्रोणीसंज्ञे
चतुर्भिराढकैर्द्रोणः कलशो नल्वणार्मणौ
उन्मानश्च घटो राशिर्द्रोणपर्यायसंज्ञकाः २८

द्रोणाभ्यां शूर्पकुम्भौ च चतुःषष्टिशरावकः
शूर्पाभ्यां च भवेद् द्रोणी वाही गोणी च सा स्मृता २९

खारीसंज्ञा
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः
चतुःसहस्रपलिका षण्णवत्यधिका च सा ३०

भारतुलासंज्ञे
पलानां द्विसहस्रं च भार एकः प्रकीर्त्तितः
तुला पलशतं ज्ञेया सर्वत्रैवैष निश्चयः ३१

यथोत्तरचतुर्गुणमाषादयः
माषटङ्काक्षबिल्वानि कुडवः प्रस्थमाढकम्
राशिर्गोणीः खारिकेति यथोत्तरचतुर्गुणाः ३२

द्रवार्द्रशुष्कद्रव्याणामनुक्तमानपरिभाषा

गुञ्जाऽदिमानमारभ्य यावत्स्यात्कुडवस्थितिः
द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् ३३

द्रवार्द्रयोर्द्विगुणग्रहणार्थं परिभाषा
प्रस्थादिमानमारभ्य द्विगुणं तत् द्रवार्द्रयोः
मानं तथा तुलायास्तु द्विगुणं न क्वचित्स्मृतम् ३४

द्रवमानार्थकुडवपात्रनिर्माणप्रकारः
मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम्
विस्तीर्णं च तथोच्चं च तन्मानं कुडवं वदेत् ३५

योगपरिभाषा
यदौषधं तु प्रथमं यस्य योगस्य कथ्यते
तन्नाम्नैव स योगो हि कथ्यतेऽत्र विनिश्चयः ३६

मात्रापरिभाषा
स्थितिर्नास्त्येव मात्रायाः कालमग्निं वयो बलम्
प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत् ३७

कालिङ्गमानकल्पनायां हेतवः
यतो मन्दाग्नयो ह्रस्वा हीनसत्त्वा नराः कलौ
अतस्तु मात्रा तद्योग्या प्रोच्यते सुज्ञसंमता ३८

कालिङ्गमानम्
यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः ३९

यवद्वयेन गुञ्जा स्यात् त्रिगुञ्जो वल्ल उच्यते
माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत्क्वचित् ४०

स्याच्चतुर्माषकः शाणः स निष्कष्टङ्क एव च
गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषकः ४१

चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः
चतुष्पलैश्च कुडवं प्रस्थाद्याः पूर्ववन्मताः ४२

मानस्य द्वैविध्यम्
कालिङ्गं मागधं चैव द्विविधं मानमुच्यते
कालिङ्गान्मागधं श्रेष्ठं मानं मानविदो विदुः ४३

औषधपरिभाषौ तत्र द्रव्याणां युक्तायुक्तविचारः
नवान्येव हि योज्यानि द्रव्याण्यखिलकर्मसु
विना विडङ्गकृष्णाभ्यां गुडधान्याज्यमाक्षिकैः ४४

सदार्द्राण्यद्विगुणानि द्रव्याणि
गुडूची कुटजो वासा कूष्माण्डश्च शतावरी
अश्वगन्धा सहचरी शतपुष्पा प्रसारिणी ४५

प्रयोक्तव्या सदैवार्द्रा द्विगुणा नैव कारयेत् ४६

नूतनद्रव्यस्य प्राधान्यम्
शुष्कं नवीनं यद् द्रव्यं योज्यं सकलकर्मसु
आर्द्रं च द्विगुणं युंज्यादेष सर्वत्र निश्चयः ४७

अनुक्तावस्थायां परिभाषाविधिः
कालेऽनुक्ते प्रभातं स्यादङ्गेऽनुक्ते जटा भवेत्
भागेऽनुक्ते तु साम्यं स्यात्पात्रेऽनुक्ते च मृण्मयम्
द्रवेऽनुक्ते जलं ग्राह्यं तैलेऽनुक्ते तिलोद्भवम् ४८

पुनरुक्तद्रव्यमानव्यवस्था
एकमप्यौषधं योगे यस्मिन्यत्पुनरुच्यते
मानतो द्विगुणं प्रोक्तं तद् द्रव्यं तत्त्वदर्शिभिः ४९

रक्तश्वेतचन्दनादिव्यवस्था

चूर्णस्नेहासवा लेहाः प्रायशश्चन्दनान्विताः
कषायलेपयोः प्रायो युज्यते रक्तचन्दनम् ५०

प्रसिद्धद्रव्याणां कालातिक्रमेण हीनगुणत्वम्
गुणहीनं भवेद्वर्षादूर्ध्वं तद्रूपमौषधम्
मासद्वयात्तथा चूर्णं हीनवीर्यत्वमाप्नुयात् ५१

हीनत्वं गुटिकालेहौ लभेते वत्सरात्परम्
हीनाः स्युर्घृततैलाद्याश्चतुर्मासाधिकात्तथा ५२

ओषध्यो लघुपाकाः स्युर्निर्वीर्या वत्सरात्परम्
पुराणाः स्युर्गुणैर्युक्ता आसवा धातवो रसाः ५३

रोगानुसारियुक्तायुक्तद्रव्यविचारः
व्याधेरयुक्तं यद् द्रव्यं गणोक्तमपि तत्त्यजेत्
अनुक्तमपि यद्युक्तं योजयेत्तत्र तद् बुधः ५४

द्रव्येषु स्थानभेदेन गुणभेदः
आग्नेया विन्ध्यशैलाद्याः सौम्यो हिमगिरिर्मतः
अतस्तदौषधानि स्युरनुरूपाणि हेतुभिः
अन्येष्वपि प्ररोहन्ति वनेषूपवनेषु च ५५

द्रव्याणां ग्रहणविधिः
गृह्णीयात्तानि सुमनाः शुचिः प्रातः सुवासरे ५६

आदित्यसंमुखो मौनी नमस्कृत्य शिवं हृदि
साधारणधराद्रव्यं गृह्णीयादुत्तराश्रितम् ५७

कुत्सितस्थानोद्भवद्रव्याणां परित्यागः
वल्मीककुत्सितानूपश्मशानोषरमार्गजाः
जन्तुवह्निहिमव्याप्ता नौषध्यः कार्यसिद्धिदाः ५८

कार्यभेदेन द्रव्यग्रहणे ऋतुविशेषः
शरद्यखिलकार्यार्थं ग्राह्यं सरसमौषधम्
विरेकवमनार्थं च वसन्तान्ते समाहरेत् ५९

अनुक्तावयवद्रव्याणां ग्रहणेऽङ्गविचारः
अतिस्थूलजटा याः स्युस्तासां ग्राह्यास्त्वचो बुधैः
गृह्णीयात्सूक्ष्ममूलानि सकलान्यपि बुद्धिमान् ६०

न्यग्रोधादेस्त्वचो ग्राह्याः सारः स्याद्बीजकादितः
तालीसादेश्च पत्राणि फलं स्यात्त्रिफलादितः
धातक्यादेश्च पुष्पाणि स्नुह्यादेः क्षीरमाहरेत् ६१

इति श्रीशार्ङ्गधरसंहितायां पूर्वखण्डे परिभाषाकथनं नाम प्रथमोऽध्यायः

अथ द्वितीयोऽध्यायः

औषधभक्षणार्हकालस्य सामान्यनिर्देशः
भैषज्यमभ्यवहरेत्प्रभाते प्रायशो बुधः
कषायांश्च विशेषेण तत्र भेदस्तु दर्शितः १

औषधभक्षणे पञ्चविधकालनिर्देशः
ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम्
किंचित्सूर्योदये जाते तथा दिवसभोजने २

सायन्तने भोजने च मुहुश्चापि तथा निशि ३

तत्र प्रथमः कालः
प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः
लेखनार्थं च भैषज्यं प्रभाते तत्समाहरेत्
एवं स्यात् प्रथमः कालो भैषज्यग्रहणे नृणाम् ४

द्वितीयः कालः

भैषज्यं विगुणेऽपाने भोजनाग्रे प्रशस्यते
अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत् ५

समानवाते विगुणे मन्देऽग्नावग्निदीपनम्
दद्याद्भोजनमध्ये च भैषज्यं कुशलो भिषक् ६

व्यानकोपे च भैषज्यं भोजनान्ते समाहरेत्
हिक्काऽऽक्षेपककम्पेषु पूर्वमन्ते च भोजनात् ७

एवं द्वितीयकालश्च प्रोक्तो भैषज्यकर्मणि ८

तृतीयः कालः
उदाने कुपिते वाते स्वरभङ्गादिकारिणि
ग्रासे ग्रासान्तरे देयं भैषज्यं सान्ध्यभोजने
प्राणे प्रदुष्टे सान्ध्यस्य भुक्तस्यान्ते च दीयते
औषधं प्रायशो धीरैः कालोऽय स्यात्तृतीयकः १०

चतुर्थः कालः
मुहुर्मुहुश्च तृट्च्छर्दिहिक्काश्वासगरेषु च
सान्नं च भेषजं दद्यादितिकालश्चतुर्थकः ११

पञ्चमः कालः
ऊर्ध्वजत्रुविकारेषु लेखने बृंहणे तथा
पाचनं शमनं देयमनन्नं भेषजं निशि
इति पञ्चमकालः स्यात् प्रोक्तो भैषज्यकर्मणि १२

द्रव्ये रसादयः पञ्चावस्थाः
द्रव्ये रसो गुणो वीर्यं विपाकः शक्तिरेव च
संबन्धेन क्रमादेताः पञ्चावस्थाः प्रकीर्त्तिताः १३

तत्र रसः

मधुरोऽम्ल पटुश्चैव कटुतिक्तकषायकाः
इत्येते षड्रसाः ख्याता नानाद्रव्यसमाश्रिताः १४

मधुरादिरसोत्पत्तिः
धराऽम्बुद्दमाऽनलजलज्वलनाकाशमारुतैः
वाय्वग्निद्दमाऽनिलैर्भूर्तद्वयै रसभवः क्रमात् १५

गुणाः
गुरुः स्निग्धश्च तीक्ष्णश्च रूक्षो लघुरिति क्रमात्
धराऽम्बुवह्निपवनव्योम्नां प्रायो गुणाः स्मृताः १६

एष्वेवान्तर्भवन्त्यन्ये गुणेषु गुणसंचयाः १७

वीर्यम्
वीर्यमुष्णं तथा शीतं प्रायशो द्रव्यसंश्रयम्
तत्सर्वमग्नीषोमीयं दृश्यते भुवनत्रये
अत्रैवान्तर्भविष्यन्ति वीर्याण्यन्यानि यान्यपि १८

विपाकः
त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः
मिष्टः पटुश्च मधुरमम्लोऽम्ल पच्यते रसः १९

कषायकटुतिक्तानां पाकः स्यात्प्रायशः कटुः
मधुराज्जायते श्लेष्मा पित्तमम्लाच्च जायते २०

कटुकाज्जायते वायुः कर्माणीति विपाकतः २१

प्रभावः
प्रभावस्तु यथा धात्री लकुचस्य रसादिभिः
समाऽपि कुरुते दोषत्रितयस्य विनाशनम् २२

क्वचित्तु केवलं द्रव्यं कर्म कुर्यात्प्रभावतः
ज्वरं हन्ति शिरोबद्धा सहदेवीजटा यथा २३

रसवीर्यादीनां पृथक् पृथक् प्रभावः
क्वचिद्रसो गुणो वीर्यं विपाकः शक्तिरेव च
कर्म स्वं स्वं प्रकुर्वन्ति द्रव्यमाश्रित्य ये स्थिताः २४

ऋतुभेदेन वातादीनां संचयकोपोपशमाः
चयकोपशमा यस्मिन्दोषाणां सम्भवन्ति हि
ऋतुषट्कं तदाख्यातं रवे राशिषु संक्रमात् २५

राशिक्रमेण ऋतुषट्कनिर्देशः
ग्रीष्मो मेषवृषौ प्रोक्तः प्रावृणिमथुनकर्कयोः
सिंहकन्ये स्मृता वर्षास्तुलावृश्चिकयोः शरत्
धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः २६

वातादिदोषत्रयस्य चयकोपशमाः
ग्रीष्मे सञ्चीयते वायुः प्रावृट्काले प्रकुप्यति
वर्षासु चीयते पित्तं शरत्काले प्रकुप्यति २७

हेमन्ते चीयते श्लेष्मा वसन्ते च प्रकुप्यति
प्रायेण प्रशमं याति स्वयमेव समीरणः २८

शरत्काले वसन्ते च पित्तं प्रावृडृतौ कफः २९

यमदंष्ट्रासमयनिर्देशः
कार्त्तिकस्य दिनान्यष्टावष्टावाग्रयणस्य च
यमदंष्ट्रा समाख्याता स्वल्पभुक्तो हि जीवति ३०

दोषाणामकालेऽपि भोजनादिना चयकोपापचयाः
चयकोपशमा दोषा विहाराहारसेवनैः

समानैर्यान्त्यकालेऽपि विपरीतैर्विपर्ययम् ३१

वायोः प्रकोपशमहेतवः
लघुरूक्षमिताहारादतिशीताच्छ्रमात्तथा
प्रदोषे कामशोकाभ्यां भीचिन्तारात्रिजागरैः ३२

अभिघातादपां गाहाज्जीर्णेऽन्ने धातुसंक्षयात्
वायुः प्रकोपं यात्येभिः प्रत्यनीकैश्च शाम्यति ३३

पित्तस्य प्रकोपशमहेतवः
विदाहिकटुकाम्लोष्णभोज्यैरत्युष्णसेवनात्
मध्याह्ने क्षुत्तृषारोधाज्जीर्यत्यन्नेऽर्द्धरात्रके
पित्तं प्रकोपं यात्येभिः प्रत्यनीकैश्च शाम्यति ३४

कफस्य प्रकोपशमहेतवः
मधुरस्निग्धशीतादिभोज्यैर्दिवसनिद्रया
मन्देऽग्नौ च प्रभाते च भुक्तमात्रे तथाऽश्रमात्
श्लेष्मा प्रकोपं यात्येभिः प्रत्यनीकैश्च शाम्यति ३६

इति श्रीशार्ङ्गधरसंहितायां पूर्वखण्डे भैषज्याख्यानकं नाम द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

नाडीपरीक्षाविधिः
करस्याङ्गुष्ठमूले या धमनी जीवसाक्षिणी
तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः १

प्रकुपितवातजनाडीलक्षणम्
नाडी धत्ते मरुत्कोपे जलौकासर्पयोर्गतिम् २

प्रकुपितपित्तजनाडीलक्षणम्
कुलिङ्गकाकमण्डूकगतिं पित्तस्य कोपतः ३

प्रकुपितकफजनाडीलक्षणम्
हंसपारावतगतिं धत्ते श्लेष्मप्रकोपतः ४

सन्निपातजनाडीलक्षणम्
लावतित्तिरवर्त्तीनां गमनं सन्निपाततः ५

द्विदोषजनाडीलक्षणम्
कदाचिन्मन्दगमना कदाचिद्वेगवाहिनी  द्विदोषकोपतो ज्ञेया ६

असाध्यनाडीलक्षणम्
हन्ति च स्थानविच्युता
स्थित्वा स्थित्वा चलति या सा स्मृता प्राणनाशिनी
अतिक्षीणा च शीता च जीवितं हन्त्यसंशयम् ७

ज्वरे नाडीलक्षणम्
ज्वरकोपे तु धमनी सोष्णा वेगवती भवेत् ८

कामक्रोधचिन्ताभययुक्तानां नाडीलक्षणानि
कामक्रोधोद्वेगवहा क्षीणा चिन्ताभयप्लुता ९

मन्दाग्नि धातुक्षयरक्तप्रकोपसामावस्थासु नाडीलक्षणानि
मन्दाग्नेः क्षीणधातोश्च नाडी मन्दतरा भवेत्
असृक्पूर्णा भवेत्कोष्णा गुर्वी सामा गरीयसी १०

दीप्ताग्नि सुखितक्षुधित तृप्तपुरुषाणां नाडीलक्षणानि
लघ्वी वहति दीप्ताग्नेस्तथा वेगवती मता
सुखितस्य स्थिरा ज्ञेया तथा बलवती स्मृता
चपला क्षुधितस्य स्यात्तृप्तस्य वहति स्थिरा ११

दूतपरीक्षा
दूताः स्वजातयोऽव्यङ्गाः पटवो निर्मलाम्बराः

सुखिनोऽश्ववृषारूढाः शुभ्रपुष्पफलैर्युताः
सुजातयः सुचेष्टाश्च सजीवदिशि संश्रिताः
भिषजं समये प्राप्ता रोगिणः सुखहेतवे १२

यस्यां प्राणमरुद्वाति सा नाडी जीवसंयुता
दूतस्य शकुनानि
वैद्याह्वानाय दूतस्य गच्छतो रोगिणः कृते
न शुभं सौम्यशकुनं प्रदीप्तं च सुखावहम् १३

वैद्यस्य शकुनानि
चिकित्सां रोगिणः कर्तुं गच्छतो भिषजः शुभम्
यात्रेयं सौम्यशकुनं प्रोक्तं दीप्तं न शोभनम् १४

चिकित्स्यलक्षणम्
निजप्रकृतिवर्णाभ्यां युक्तः सत्त्वेन संयुतः
चिकित्स्यो भिषजा रोगी वैद्यभक्तो जितेन्द्रियः १५

अथ शुभाशुभस्वप्नपरीक्षा
तत्र दुःस्वप्नलक्षणानि
स्वप्नेषु नग्नान्मुण्डांश्च रक्तकृष्णाम्बरावृतान्
व्यङ्गांश्च विकृतान्कृष्णान्सपाशान्सायुधानपि
बध्नतो निघ्नतश्चापि दक्षिणां दिशमाश्रितान्
महिषोष्ट्रखरारूढान्स्त्रीपुंसो यस्तु पश्यति
स स्वस्थो लभते व्याधिं रोगी यात्येव पञ्चताम् १६

अन्यान्यपि दुःस्वप्नलक्षणानि
अधो यो निपतत्युच्चाज्जलेऽग्नौ वा विलीयते
श्वापदैर्हन्यते योऽपि मत्स्याद्यैर्गिलितो भवेत् १७

यस्य नेत्रे विलीयेते दीपो निर्वाणतां व्रजेत्
तैलं सुरां पिबेद्वाऽपि लोहं वा लभते तिलान् १८

पक्वान्नं लभतेऽश्नाति विशेत्कूपं रसातलम्
स स्वस्थो लभते रोगं रोगी यात्येव पञ्चताम् १९

दुःस्वप्नदर्शने करणीयविधिः
दुःस्वप्नानेवमादींश्च दृष्ट्वा ब्रूयान्न कस्यचित्
स्नानं कुर्यादुषस्येव दद्याद्धेमतिलानयः २०

पठेत्स्तोत्राणि देवानां रात्रौ देवालये वसेत्
कृत्वैवंत्रिदिनं मर्त्यो दुःस्वप्नात्परिमुच्यते २१

शुभस्वप्नलक्षणानि
स्वप्नेषु यः सुरान्भूपाञ्जीवतः सुहृदो द्विजान्
गोसमिद्धाग्नितीर्थानि पश्येत्सुखमवाप्नुयात् २२

अन्यच्च
तीर्त्वा कलुषनीराणि जित्वा शत्रुगणानपि
आरुह्य सौधगोशैलकरिवाहान्सुखी भवेत् २३

अन्यच्च
शुभ्रपुष्पाणि वासांसि मांसमत्स्यफलानि च
प्राप्यातुरः सुखी भूयात्स्वस्थो धनमवाप्नुयात् २४

अन्यच्च
अगम्यागमनं लेपो विष्ठया रुदितं मृतिः
आममांसाशनं स्वप्ने धनारोग्याप्तये विदुः २५

अन्यच्च
जलौका भ्रमरी सर्पो मक्षिका वाऽपि यं दशेत्
रोगी स भूयादुल्लाघः स्वस्थो धनमवाप्नुयात् २६

इति श्रीशार्ङ्गधरसंहितायां पूर्वखण्डे नाडीपरीक्षादिविधिर्नामतृतीयोऽध्यायः

अथ चतुर्थोऽध्यायः
तत्र दीपनपाचनादिकथनम्
तत्र दीपनद्रव्यलक्षणम्
पचेन्नामं वह्निकृच्च दीपनं तद्यथा मिशिः १

पाचनदीपनपाचनद्रव्ययोर्लक्षणे
पचत्यामं न वह्निं च कुर्याद्यत्तद्धि पाचनम्
नागकेशरवद्विद्याच्चित्रो दीपनपाचनः २

संशमनद्रव्यलक्षणम्
न शोधयति न द्वेष्टि समान्दोषांस्तथोद्धतान्
समीकरोति विषमाञ्शमनं तद्यथामृता ३

अनुलोमनद्रव्यलक्षणम्
कृत्वा पाकं मलानां यद्भित्त्वा बन्धमधो नयेत्
तच्चानुलोमनं ज्ञेयं यथा प्रोक्ता हरीतकी ४

स्रंसनद्रव्यलक्षणम्
पक्तव्यं यदपक्त्वैव श्लिष्टं कोष्ठे मलादिकम्
नयत्यधः स्रंसनं तद्यथा स्यात् कृतमालकः ५

भेदनद्रव्यलक्षणम्
मलादिकमबद्धं यद्बद्धं वा पिण्डितं मलैः
भित्त्वाऽध पातयति यद् भेदनं कटुकी यथा ६

रेचनद्रव्यलक्षणम्
विपक्वं यदपक्वं वा मलादि द्रवतां नयेत्
रेचयत्यपि तज्ज्ञेयं रेचनं त्रिवृता यथा ७

वमनद्रव्यलक्षणम्
अपक्वपित्तश्लेष्माणौ बलादूर्ध्वं नयेत्तु यत्

वमनं तद्धि विज्ञेयं मदनस्य फलं यथा ८

शोधनद्रव्यलक्षणम्
स्थानाद् बहिर्नयेदूर्ध्वमधो वा मलसंचयम्
देहसंशोधनं तत्स्याद् देवदालीफलं यथा ९

छेदनद्रव्यलक्षणम्
श्लिष्टान्कफादिकान्दोषानुन्मूलयति यद्बलात्
छेदनं तद्यथा क्षारा मरिचानि शिलाजतु १०

लेखनद्रव्यलक्षणम्
धातून्मलान्वा देहस्य विशोष्योल्लेखयेच्च यत्
लेखनं तद्यथा क्षौद्रं नीरमुष्णं वचा यवाः ११

ग्राहिद्रव्यलक्षणम्
दीपनं पाचनं यत्स्यादुष्णत्वाद् द्रवशोषकम्
ग्राहि तच्च यथा शुण्ठी जीरकं गजपिप्पली १२

स्तम्भनद्रव्यलक्षणम्
रौक्ष्याच्छैत्यात्कषायत्वाल्लघुपाकाच्च यद्भवेत्
वातकृत्स्तम्भनं तत्स्याद्यथा वत्सकटुण्टुकौ १३

रसायनद्रव्यलक्षणम्
रसायनं च तज्ज्ञेयं यज्जराव्याधिनाशनम्
यथाऽमृता रुदन्ती च गुग्गुलुश्च हरीतकी १४

वाजीकरद्रव्यलक्षणम्
यस्माद् द्रव्याद्भवेत्स्त्रीषु हर्षो वाजीकरं च तत्
यथा नागबलाऽद्या स्युर्बीजं च कपिकच्छुजम् १५

वीर्यवर्द्धकद्रव्यलक्षणम्

यस्माच्छुक्रस्य वृद्धिः स्याच्छुकलं हि तदुच्यते
यथाऽश्वगन्धा मुसली शर्करा च शतावरी १६

श्रुकस्य जनकानि रेचकानि च द्रव्याणि
दुग्धं माषाश्च भल्लातफलमज्जाऽमलानि च
प्रवर्त्तकानि कथ्यन्ते जनकानि च रेतसः १७

वाजीकरद्रव्याणां विशेषः
प्रवर्त्तनी स्त्री शुक्रस्य रेचनं बृहतीफलम्
जातीफलं स्तम्भकं च शोषणी च हरीतकी १८

सूक्ष्मद्रव्यलक्षणम्
देहस्य सूक्ष्मच्छिद्रेषु विशेद्यत्सूक्ष्ममुच्यते
तद्यथा सैन्धवं क्षौद्रं निम्बतैलं रुबूद्भवम् १९

व्यवायिद्रव्यलक्षणम्
पूर्वं व्याप्याखिलं कायं ततः पाकं च गच्छति
व्यवायि तद्यथा भङ्गा फेनं चाहिसमुद्भवम् २०

विकाशिद्रव्यलक्षणम्
सन्धिबन्धांस्तु शिथिलान्यत्करोति विकाशि तत्
विश्लेष्यौजश्च धातुभ्यो यथा क्रमुककोद्रवाः २१

मदकारिद्रव्यलक्षणम्
बुद्धिं लुम्पति यद् द्रव्यं मदकारि तदुच्यते
तमोगुणप्रधानं च यथा मद्यसुराऽदिकम् २२

प्राणहरद्रव्यलक्षणम्
व्यवायि च विकाशि स्यात्सूक्ष्मं छेदि मदावहम्
आग्नेयं जीवितहरं योगवाहि स्मृतं विषम् २३

प्रमाथिद्रव्यलक्षणम्
निजवीर्येण यद् द्रव्यं स्त्रोतोभ्यो दोषसञ्चयम्
निरस्यति प्रमाथि स्यात्तद्यथा मरिचं वचा २४

अभिष्यन्दिद्रव्यलक्षणम्
पैच्छिल्याद्गौरवाद् द्रव्यं रुद्ध्वा रसवहाः शिराः
धत्ते यद्गौरवं तत्स्यादभिष्यन्दि यथा दधि २५

इति श्रीशार्ङ्गधरसंहितायां पूर्वखण्डे दीपनपाचनादिकथनं नाम
चतुर्थोऽध्यायः

अथ पञ्चमोऽध्यायः

तत्र कलादिकाख्यानम् शिारीरम्
कलादिकाख्यानम्
कलाः सप्ताशयाः सप्त धातवःसप्त तन्मलाः
सप्तोपधातवः सप्त त्वचः सप्त प्रकीर्त्तिताः १

त्रयो दोषा नवशतं स्नायूनां सन्धयस्तथा
दशाधिकं च द्विशतमस्थ्नां च त्रिशतं तथा २

सप्तोत्तरं मर्मशतं शिराः सप्तशतं तथा
चतुर्विंशतिराख्याता धमन्यो रसवाहिकाः ३

मांसपेश्यः समाख्याता नृणां पञ्चशतं बुधैः
स्त्रीणां च विंशत्यधिकाः कण्डराश्चैव षोडश ४

नृदेहे दश रन्ध्राणि नारीदेहे त्रयोदश
एतत्समासतः प्रोक्तं विस्तरेणाधुनोच्यते ५

अथ सप्त कलाः
मांसासृङ्मेदसां तिस्त्रो यकृत्प्लीह्नोश्चतुर्थिका

पञ्चमी च तथाऽन्त्राणां षष्ठी चाग्निधरा मता
रेतोधरा सप्तमी स्यादिति सप्त कलाः स्मृताः ६

अथ सप्ताशयाः
श्लेष्माशयः स्यादुरसि तस्मादामाशयस्त्वधः ७

ऊर्ध्वमग्न्याशयो नाभेर्वामभागे व्यवस्थितः
तस्योपरि तिलं ज्ञेयं तदधः पवनाशयः ८

मलाशयस्त्वधस्तस्माद् बस्तिर्मूत्राशयस्त्वधः
जीवरक्ताशयमुरो ज्ञेयाः सप्ताशयस्त्वमी ९

नारीणां विशेषाशयाः
पुरुषेभ्योऽधिकाश्चान्ये नारीणामाशयास्त्रयः
धरा गर्भाशयः प्रोक्तः स्तनौ स्तन्याशयौ मतौ १०

अथ सप्तधातूनां नामानि तदुत्पत्तिक्रमश्च
रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः
जायन्तेऽन्योऽन्यतः सर्वे पाचिताः पित्ततेजसा ११

रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते
मेदसोऽस्थि ततो मज्जा मज्जायाः शुक्रसंभवः १२

अथ सप्तधातूनां मलास्तदुत्पत्तिक्रमश्च
जिह्वानेत्रकपोलानां जलं पित्तं च रञ्जकम्
कर्णविड्रसनादन्तकक्षामेढ्रादिजं मलम् १३

नखनेत्रमलं वक्त्रे स्निग्धत्वं पिटिकास्तथा
जायन्ते सप्तधातूनां मलान्येतान्यनुक्रमात् १४

मतान्तरेण धातुमलाः

कफः पित्तं मलं खेषु प्रस्वेदो नखरोम च
नेत्रविट् त्वक्षु च स्नेहो धातूनां क्रमशो मलाः १५

अथोपधातवः
स्तन्यं रजश्च नारीणां काले भवति गच्छति
शुद्धमांसभवः स्नेहः सा वसा परिकीर्त्तिता १६

स्वेदो दन्तास्तथा केशास्तथैवौजश्च सप्तमम्
इति धातुभवा ज्ञेया एते सप्तोपधातवः १७

अथौजोलक्षणम्
ओजः सर्वशरीरस्थं शीतं स्निग्धं स्थिरं मतम्
सोमात्मकं शरीरस्य बलपुष्टिकरं मतम् १८

अथ सप्त त्वचः
ज्ञेयाऽवभासिनी पूर्वं सिध्मस्थानं च सा मता
द्वितीया लोहिता ज्ञेया तिलकालकजन्मभूः १९

श्वेता तृतीया संख्याता स्थानं चर्मदलस्य सा
ताम्रा चतुर्थी विज्ञेया किलासश्वित्रभूमिका २०

पञ्चमी वेदनी ख्याता सर्वकुष्ठोद्भवस्ततः
विख्याता रोहिणी षष्ठी ग्रन्थिगण्डापचीस्थितिः २१

स्थूला त्वक्सप्तमी ख्याता विद्रध्यादेः स्थितिश्च सा
इति सप्त त्वचः प्रोक्ताः स्थूला व्रीहिद्विमात्रया २२

अथ दोषास्तन्नामानि च
वायुः पित्तं कफो दोषा धातवश्च मलास्तथा
तत्रापि पञ्चधा ख्याताः प्रत्येकं देहधारणात् २३

दोषाणां नामान्तरे कारणनिर्देशः
शरीरदूषणाद्दोषा धातवो देहधारणात्
वातपित्तकफा ज्ञेया मलिनीकरणान्मलाः २४

तत्र वायोः प्राधान्यं तत्कार्यवर्णनञ्च
पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः
वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत् २५

पवनस्तेषु बलवान्विभागकरणान्मतः
रजोगुणमयः सूक्ष्मः शीतो रूक्षो लघुश्चलः २६

कार्यभेदेन वायोः पञ्चविधत्वम्
मलाशये चरेत्कोष्ठे वह्निस्थाने तथा हृदि
कण्ठे सर्वाङ्गदेशेषु वायुः पञ्चप्रकारतः २७

वायोः पञ्च नामानि
अपानः स्यात्समानश्च प्राणोदानौ तथैव च
व्यानश्चेति समीरस्य नामान्युक्तान्यनुक्रमात् २८

पित्तस्य विवरणम्
पित्तमुष्णं द्रवं पीतं नीलं सत्त्वगुणोत्तरम्
कटु तिक्तरसं ज्ञेयं विदग्धं चाम्लतां व्रजेत् २९

तस्य स्थानानि कार्याणि नामानि च
अग्न्याशये भवेत्पित्तमग्निरूपं तिलोन्मितम्
त्वचि कान्तिकरं ज्ञेयं लेपाभ्यङ्गादिपाचकम् ३०

दृश्यं यकृति यत्पित्तं तद्रसं शोणितं नयेत्
यत्पित्तं नेत्रयुगले रूपदर्शनकारि तत्
यत्पित्तं हृदये तिष्ठेन्मेधाप्रज्ञाकरं च तत्
पाचकं भ्राजकं चैव रञ्जकालोचके तथा

साधकं चेति पञ्चैव पित्तनामान्यनुक्रमात् ३२

कफस्य विवरणं कर्माणि च
कफः स्निग्धो गुरुः श्वेतः पिच्छिलः शीतलस्तथा
तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत् ३३

कफस्य स्थाननामकथनम्
कफश्चामाशये मूर्ध्नि कराठे हृदि च संधिषु
तिष्ठन्करोति देहस्य स्थैर्यं सर्वाङ्गपाटवम् ३४

क्लेदनः स्नेहनश्चैव रसनश्चावलम्बनः
श्लेष्मकश्चेति नामानि कफस्योक्तान्यनुक्रमात् ३५

स्नायोर्विवरणम्
स्नायवो बन्धनं प्रोक्ता देहे मांसास्थिमेदसाम् ३६

सन्धेर्विवरणम्
सन्धयश्चाङ्गसन्धानाद्देहे प्रोक्ताः कफान्विताः ३७

अस्थ्नो विवरणम्
आधारश्च तथा सारः कायेऽस्थीनि बुधा विदुः ३८

मर्मणो विवरणम्
मर्माणि जीवाधाराणि प्रायेण मुनयो जगुः ३९

शिराविवरणम्
सन्धिबन्धनकारिरयो दोषधातुवहाः शिराः ४०

धमनीविवरणम्
धमन्यो रसवाहिन्यो धमन्ति पवनं तनौ ४१

मांसपेशीविवरणम्
मांसपेश्यो बलाय स्युरवष्टम्भाय देहिनाम् ४२

कण्डराविवरणम्
प्रसारणाकुञ्चनयोरङ्गानां कण्डरा मताः ४३

रन्ध्रविवरणम्
नासानयनकर्णानां द्वे द्वे रन्ध्रे प्रकीर्त्तिते
मेहनापानवक्त्राणामेकैकं रन्ध्रमुच्यते
दशमं मस्तके प्रोक्तं रन्ध्राणीति नृणां विदुः
स्त्रीणां त्रीण्यधिकानि स्युः स्तनयोर्गर्भवर्त्मनः
सूक्ष्मच्छिद्राणि चान्यानि मतानि त्वचि जन्मिनाम् ४४

फुफ्फुसप्लीहयकृतां विवरणम्
तद्वामे फुफ्फुसं प्लीहा दक्षिणे च यकृन्मतम्
उदानवायोराधारः फुफ्फुसं प्रोच्यते बुधैः
रक्तवाहिशिरामूलं प्लीहा ख्याता महर्षिभिः
यकृद्रञ्जकपित्तस्य स्थानं रक्तस्य संश्रयः ४५

तिल क्लोमा वर्णनम्
जलवाहिशिरामूलं तृष्णाऽच्छादनकं तिलम् ४६

वृक्कवर्णनम्
वृक्कौ तुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः ४७

वृषणलिङ्गयोर्वर्णनम्
वीर्यवाहिशिराधारौ वृषणौ पौरुषावहौ
गर्भाधानकरं लिङ्गमयनं वीर्यमूत्रयोः ४८

हृदयवर्णनम्
हृदयं चेतनास्थानमोजसश्चाश्रयो मतम् ४९

शरीरपोषराव्यापारनिर्देशः
शिरा धमन्यो नाभिस्थाः सर्वा व्याप्य स्थितास्तनुम्
पुष्रान्ति चानिशं वायोः संयोगात्सर्वधातुभिः ५०

प्राणवायोः शरीरव्यापारनिर्देशः
नाभिस्थः प्राणपवनः स्पृष्ट्वा हृत्कमलान्तरम्
कराठाद्बहिर्विनिर्याति पातुं विष्णुपदामृतम्
पीत्वा चाम्बरपीयूषं पुनरायाति वेगतः
प्रीणयन्देहमखिलं जीवयञ्जठरानलम् ५१

ग्रायुषो मृत्योश्च स्वरूपम्
शरीरप्राणयोरेवं संयोगादायुरुच्यते
कालेन तद्वियोगाच्च पञ्चत्वं कथ्यते बुधैः ५२

तत्र वैद्यानां कृते कर्त्तव्यकर्मोपदेशः
न जन्तुः कश्चिदमरः पृथिव्यां जायते क्वचित्
ग्रतो मृत्युरवार्यः स्यात्किन्तु रोगान्निवारयेत् ५३

रोगनिवारणे साध्यादिभेदनिर्देशः
याप्यत्वं याति साध्यस्तु याप्यो गच्छत्यसाध्यताम्
जीवितं हन्त्यसाध्यस्तु नरस्याप्रतिकारिणः ५४

धर्मादिसाधनतनो रद्मानिर्देशः
धर्मार्थकाममोद्माणां शरीरं साधनं यतः
ग्रतो रुग्भ्यस्तनुं रद्मेन्नरः कर्मविपाकवित्
दोषाणां साम्यस्य वैषम्यस्य च फलम्
धातवस्तन्मला दोषा नाशयन्त्यसमास्तनुम्
समाः सुखाय विज्ञेया बलायोपचयाय च ५६

सृष्टिक्रमः
जगद्योनेरनिच्छस्य चिदानन्दैकरूपिणः

पुंसोऽस्ति प्रकृतिर्नित्या प्रतिच्छायेव भास्वतः ५७

प्रकृतिपुरुषयोगेन सृष्ट्युत्पत्तिनिर्देशः
अचेतनाऽपि चैतन्ययोगेन परमात्मनः
अकरोद्विश्वमखिलमनित्यं नाटकाकृति ५८

बुद्धिसत्त्वाहङ्कारयोरुत्पत्तिनिर्देशः
प्रकृतिर्विश्वजननी पूर्वं बुद्धिमजीजनत्
इच्छामयीं महद्रूपामहङ्कारस्ततोऽभवत्
त्रिविधः सोऽपि सञ्जातो रजः सत्त्वतमोगुणैः ५९

त्रिगुणात्मकाहङ्कारस्य कार्याणि
तस्मात्सत्त्वरजोयुक्तादिन्द्रियाणि दशाभवन्
मनश्च जातं तान्याहुः श्रोत्रत्वङ्नयनं तथा ६०

जिह्वाघ्राणवचोहस्तपादोपस्थगुदानि च
पञ्च बुद्धीन्द्रियाण्याहुः प्राक्तनानीतराणि च
कर्मेन्द्रियाणि पञ्च्व कथ्यन्ते सूक्ष्मबुद्धिभिः ६१

तन्मात्रपञ्चकोत्पत्तिनिर्देशः
तमः सत्त्वगुणोत्कृष्टादहङ्कारादथाभवत्
तन्मात्रपञ्चकं तस्य नामान्युक्तानि सूरिभिः
शब्दतन्मात्रकं स्पर्शतन्मात्रं रूपमात्रकम्
रसतन्मात्रकं गन्धतन्मात्रं चेति तद्विदुः ६२

भूतपञ्चकस्योत्पत्तिनामनिर्देशः
तन्मात्रपञ्चकात्तस्मात्संजातं भूतपञ्चकम्
व्योमानिलानलजलक्षोणीरूपं च तन्मतम् ६३

तन्मात्राणां विशेषाः
शब्दः स्पर्शश्च रूपं च रसगन्धावनुक्रमात्

तन्मात्राणां विशेषाः स्युः स्थूलभावमुपागताः ६४

इन्द्रियाणां विषयाः
बुद्धीन्द्रियाणां पञ्चैव शब्दाद्या विषया मताः ६५

कर्मेन्द्रियाणां विषया भाषादानविहारिताः
आनन्दोत्सर्गकौ चैव कथितास्तत्त्वदर्शिभिः ६६

चतुर्विंशतितत्त्ववर्णनम्
तत्र प्रथमतत्त्वस्य प्रकृतेर्नामनिर्देशः
प्रधानं प्रकृतिः शक्तिर्नित्या चाविकृतिस्तथा
एतानि तस्या नामानि शिवमाश्रित्य या स्थिता ६७

प्रकृतिविकृतिसंज्ञकस्य तत्त्वसप्तकस्य निर्देशः
महानहङ्कृतिः पञ्चतन्मात्राणि पृथक्पृथक्
प्रकृतिर्विकृतिश्चैव सप्तैतानि बुधा जगुः ६८

दशेन्द्रियाणि चित्तं च महाभूतानि पञ्च च
विकाराः षोडश ज्ञेयाः सर्वं व्याप्य जगत्स्थिताः ६९

जीवस्वरूपनिर्देशः
एवं चतुर्विंशतिभिस्तत्त्वैः सिद्धे वपुर्गृहे
जीवात्मा नियतो नित्यो वसति स्वान्तदूतवान् ७०

स देही कथ्यते पापपुण्यदुःखसुखादिभिः
व्याप्तो बद्धश्च मनसा कृत्रिमैः कर्मबन्धनैः ७१

देहिनो बन्धनानि
कामक्रोधौ लोभमोहावहङ्कारश्च पञ्चमः
दशेन्द्रियाणि बुद्धिश्च तस्य बन्धाय देहिनः ७२

जीवस्य बन्धमोक्षयोर्दुःखसुखयोर्निर्देशः
आप्नोति बन्धमज्ञानादात्मज्ञानाच्च मुच्यते
तद्दुःखयोगकृद्व्याधिरारोग्यं तत्सुखावहम् ७३
इति श्रीशार्ङ्गधरसंहितायां पूर्वखण्डे कलादिकाख्यानं नाम पञ्चमोऽध्यायः

अथ षष्ठोऽध्यायः

तत्र आहारादिगतिकथनम्
आहारस्य पाकक्रमनिर्देशः
यात्यामाशयमाहारः पूर्वं प्राणानिलेरितः
माधुर्यं फेनभावं च षड्रसोऽपि लभेत सः १

आहारस्याम्लभाव ग्रहणीनयन कटुभावानां निर्देशः
अथ पाचकपित्तेन विदग्धश्चाम्लतां व्रजेत्
ततः समानमरुता ग्रहणीमभिनीयते
ग्रहण्यां पच्यते कोष्ठवह्निना जायते कटुः २

आहारस्य रसामावस्थयोनिर्देशः
रसो भवति संपक्वादपक्वादामसंभवः ३

परिपक्वस्य रसस्य कार्याणि
वह्नेर्बलेन माधुर्यं स्निग्धतां याति तद्रसः
पुष्णाति धातूनखिलान्सम्यक्पक्वोऽमृतोपमः ४

आमरसस्य कार्याणि
मन्दबह्निविदग्धश्च कटुश्चाम्लो भवेद्रसः
विषभावं व्रजेद्वाऽपि कुर्याद्वा रोगसंकरम् ५

आहारस्य सारमलपदार्थयोर्निर्देशादिकम्
आहारस्य रसः सारः सारहीनो मलद्रवः
शिराभिस्तज्जलं नीतं वस्तौ मूत्रत्वमाप्नुयात् ६

तत्किट्टं च मलं ज्ञेयं तिष्ठेत्पक्वाशये च तत्
वलित्रितयमार्गेण यात्यपानेन नोदितम्
प्रवाहिणी सर्जनी च ग्राहिकेति वलित्रयम् ७

रसस्य रक्तत्वनिर्देशः
रसस्तु हृदयं याति समान मरुतेरितः
रञ्जितः पाचितस्तत्र पित्तेनायाति रक्तताम् ८

रक्तस्य प्राधान्यस्वरूपयोर्निर्देशः
रक्तं सर्वशरीरस्थं जीवस्याधारमुत्तमम्
स्निग्धं गुरु चलं स्वादु विदग्धं पित्तवद्भवेत् ९

रसादिधातूनां पाकक्रमः
पाचिताः पित्ततापेन रसाद्या धातवः क्रमात्
शुक्रत्वं यान्ति मासेन तथा स्त्रीणां रजो भवेत् १०

गर्भोत्पत्तिनिर्देशः
कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः
गर्भःसंजायते नार्याः स जातो बाल उच्यते ११

स्त्रीपुंनपुंसकोत्पत्तौ हेतुनिर्देशः
आधिक्ये रजसः कन्या पुत्रः शुक्राधिके भवेत्
नपुंसकं समत्वेन यथेच्छा पारमेश्वरी १२

बालस्यौषधमात्रानिर्देशः
बालस्य प्रथमे मासि देया भेषजरक्तिका १३

अवलेहीकृतैकैव क्षीरक्षौद्रसिताघृतैः
वर्धयेत्तावदेकैका यावद्भवति वत्सरः १४

माषैर्वृद्धिस्तदूर्ध्वं स्याद्यावत्षोडशवत्सरः

ततः स्थिरा भयेत्तावद्यावद्वर्षाणि सप्ततिः १५

ततो बालकवन्मात्रा ह्रासनीया शनैः शनैः
मात्रेयं कल्कचूर्णानां कषायाणां चतुर्गुणा १६

आजन्म सात्म्यकर्माणि
अञ्जनं च तथा लेपः स्नानमभ्यङ्गकर्म च
वमनं प्रतिमर्शश्च जन्मप्रभृति शस्यते १७

वयोऽनुसारेण कवलादि योजना निर्देशः
कवलः पञ्चमाद्वर्षादष्टमान्नस्यकर्म च
विरेकः षोडशाद्वर्षाद्विंशतेश्चैव मैथुनम् १८

बाल्यादीनां ह्राससमयनिर्देशः
बाल्यं वृद्धिश्छविर्मेधा त्वग्दृष्टिः शुक्रविक्रमौ
बुद्धिः कर्मेन्द्रियं चेतो जीवितं दशतो ह्रसेत् १९

वातप्रकृतिलक्षणम्
अल्पकेशः कृशो रूक्षो वाचालश्चलमानसः
आकाशचारी स्वप्नेषु वातप्रकृतिको नरः २०

पित्तप्रकृतिलक्षणम्
अकालपलितैर्व्याप्तो धीमान्स्वेदी च रोषणः
स्वप्नेषु ज्योतिषां द्रष्टा पित्तप्रकृतिको नरः २१

श्लेष्मप्रकृतिलक्षणम्
गम्भीरबुद्धिः स्थूलाङ्गः स्निग्धकेशो महाबलः
स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः २२

द्विदोषत्रिदोषप्रकृतिलक्षणे
ज्ञातव्या मिश्रचिह्नैश्च द्वित्रिदोषोल्बणा नराः २३

निद्रामूर्च्छाभ्रान्तितन्द्रालक्षणानि
तमः कफाभ्यां निद्रा स्यान्मूर्च्छा पित्ततमोभवा
रजः पित्तानिलैर्भ्रान्तिस्तन्द्रा श्लेष्मतमोऽनिलैः २४

ग्लान्यालस्ययोर्लक्षणे
ग्लानिरोजःक्षयाद् दुःखादजीर्णाच्च श्रमाद्भवेत्
यः सामर्थ्येऽप्यनुत्साहस्तदालस्यमुदीर्यते २५

जृम्भालक्षणम्
चैतन्यशिथिलत्वाद्यः पीत्वैकं श्वासमुद्वमेत्
विदीर्णवदनः श्वासं जृम्भा सा कथ्यते बुधैः

छिक्कालक्षणम्
उदानप्राणयोरूर्ध्वं योगान्मौलिकफस्त्रवात्
शब्दः संजायते नस्तः क्षुतं तत्कथ्यते बुधैः

उद्गारलक्षणम्
उदानकोपादाहारसुस्थिरत्वाच्च यद्भवेत्
पवनस्योद्ध्र्वगमनं तमुद्गारं प्रचक्षते २८

इति श्रीशार्ङ्गधरसंहितायां पूर्वखण्डे आहारादिगतिकथनं नाम षष्ठोऽध्यायः

अथ सप्तमोऽध्यायः
रोगगणनाध्यायः

रोगगणनाप्रतिज्ञा
रोगाणां गणना पूर्वं मुनिभिर्या प्रकीर्त्तिता
मयाऽत्र प्रोच्यते सैव तद्भेदा बहवो मताः १

ज्वरभेदाः
पञ्चविंशतिरुद्दिष्टा ज्वरास्तद्भेद उच्यते
पृथग्दोषैस्तथा द्वन्द्वभेदेन त्रिविधः स्मृतः

एकश्च सन्निपातेन तद्भेदा बहवः स्मृताः२

विषमागन्तुज्वरयोर्भेदाः
प्रायशः सन्निपातेन पञ्चस्युर्विषमज्वराः
सन्ततः सततश्चैव अन्येद्युष्कस्तृतीयकः ३

चातुर्थिकश्च पञ्च्ते कीर्त्तिता विषमज्वराः
तथाऽगन्तुज्वरोऽप्येकस्त्रयोदशविधो मतः ४

अभिचारग्रहावेशशापैरागन्तुकस्त्रिधा
श्रमाच्छेदात्क्षताद्दाहाच्चतुर्द्धाघातजो ज्वरः ५

कामाद्भीतेः शुचो रोषाद्विषादौषधगन्धतः
अभिषङ्गज्वराः षट्स्युरेवं ज्वरविनिश्चयः ६

अतीसारग्रहणीप्रवाहिकाणां भेदाः
पृथक्त्रिदोषैः सर्वैश्च शोकादामाद्भयादपि
अतीसारः सप्तधा स्याद् ग्रहणी पञ्चधा मता ७

पृथग्दोषैः सन्निपातात्तथा चामेन पञ्चमी
प्रवाहिका चतुर्द्धा स्यात्पृथग्दोषैस्तथाऽस्रतः ८

अजीर्णालसयोर्भेदाः
अजीर्णं त्रिविधं प्रोक्तं विष्टब्धं वायुना मतम् ९

पित्ताद्विदग्धं विज्ञेयं कफेनामं तदुच्यते
विषाजीर्णं रसादेकं दोषैः स्यादलसस्त्रिधा १०

विषूचीदण्डकालसकविलम्बिकानां भेदाः
विषूची त्रिविधा प्रोक्ता दोषैः सा स्यात्पृथक्पृथक्
दण्डकालसकश्चैव एकैव स्याद्विलम्बिका ११

अर्शश्चर्मकीलयोर्भेदाः
अर्शांसि षड्विधान्याहुर्वातपित्तकफास्त्रतः
सन्निपाताच्च संसर्गात्तेषां भेदो द्विधा स्मृतः १२

सहजोत्तरजन्मभ्यां तथा शुष्कार्द्रभेदतः
त्रिधैव चर्मकीलानि वातात्पित्तात्कफादपि १३

कृमिभेदाः
एकविंशतिभेदेन कृमयः स्युर्द्विधा च ते
बाह्यास्तथाऽभ्यन्तराः स्युस्तेषु यूका बहिश्चराः १४

लिक्षाश्चान्येऽन्तरचराः कफात्ते हृदयादकाः
अन्त्रादा उदरावेष्टाश्चुरवश्च महागुदाः १५

सुगन्धा दर्भकुसुमास्तथा रक्ताच्च मातरः
सौरसा लोमविध्वंसा रोमद्वीपा उदुम्बराः १६

केशादाश्च तथैवान्ये शकृज्जाता मकेरुकाः
लेलिहाश्च सशूलाश्च सौसुरादाः ककेरुकाः १७

तथाऽन्य कफरक्ताभ्यां संजातः स्नायुकः स्मृतः
व्रणस्य कृमयश्चान्ये विषमा बाह्ययोनयः १८

पाण्डुरोगकामलयोर्भेदाः
पाण्डुरोगाश्च पञ्च स्युर्वातपित्तकफैस्त्रिधा
त्रिदोषैर्मृत्तिकाभिश्च तथैका कामला स्मृता
स्यात्कुम्भकामला चैका तथैकं च हलीमकम् १९

रक्तपित्तभेदाः
रक्तपित्तं त्रिधा प्रोक्तमूर्ध्वगं कफसंभवम्
अधोगं मारुतं ज्ञेयं तद्द्वयेन द्विमार्गगम् २०

कासभेदाः
कासाः पञ्च समुद्दिष्टास्ते त्रयः स्युस्त्रिभिर्मलैः
उरः क्षताच्चतुर्थः स्यात्क्षयाद्धातोश्च पञ्चमः २१

क्षयभेदाः
क्षयाः पञ्चैव विज्ञेयास्त्रिभिर्दोषैस्त्रयश्च ते
चतुर्थः सन्निपातेन पञ्चमः स्यादुरःक्षतात् २२

शोषभेदाः
शोषाः स्युः षट्प्रकारेण स्त्रीप्रसङ्गाच्छुचो व्रणात्
अध्वश्रमाच्च व्यायामाद् बार्धक्यादपि जायते २३

श्वासभेदाः
श्वासाश्च पञ्च विज्ञेयाः क्षुद्रः स्यात्तमकस्तथा
ऊर्ध्वश्वासो महाश्वासच्छिन्नश्वासश्च पञ्चमः २४

हिक्काभेदाः
कथिताः पञ्च हिक्कास्तु तास्तु क्षुद्राऽन्नजा तथा
गम्भीरा यमला चैव महती पञ्चमी तथा २५

अग्निविकारभेदाः
चत्वारोऽग्नेर्विकाराः स्युर्विषमो वातसम्भवः
तीक्ष्णः पित्तात्कफान्मन्दो भस्मको वातपित्तयोः २६

अरोचकभेदाः
पञ्चैवारोचका ज्ञेया वातपित्तकफैस्त्रिधा
सन्निपातान्मनस्तापात्
छर्दिभेदाः
छर्दयः सप्तधा मताः २७

त्रिभिर्दोषैः पृथक्तिस्रः कृमिभिः सन्निपातजः

घृणया च तथा स्त्रीणां गर्भाधानाच्च जायते २८

स्वरभेदाः
स्वरभेदाः षडेव स्युर्वातपित्तकफैस्त्रयः
मेदसा सन्निपातेन क्षयात्षष्ठः प्रकीर्तितः २९

तृष्णाभेदाः
तृष्णा च षड्विधा प्रोक्तावातात्पित्तात्कफादपि
त्रिदोषैरुपसर्गेण क्षयाद्धातोश्च षष्ठिका ३०

मूर्च्छाभ्रमनिद्रातन्द्रासंन्यासग्लानि भेदाः
मूर्च्छा चतुर्विधा ज्ञेयाः वातपित्तकफैः पृथक् ३१

चतुर्थी सन्निपातेन तथैकश्च भ्रमः स्मृतः
निद्रा तन्द्रा च संन्यासो ग्लानिश्चैकैकशः स्मृताः ३२

मदरोगभेदाः
मदाः सप्त समाख्याता वातपित्तकफैस्त्रयः
त्रिदोषैरसृजा मद्याद्विषादपि स सप्तमः ३३

मदात्ययभेदास्तदवान्तरभेदाश्च
मदात्ययश्चतुर्द्धा स्याद्वातपित्तकफादपि
त्रिदोषैरपि विज्ञेय एकः परमदस्तथा ३४

पानाजीर्णं तथा चैकं तथैकः पानविभ्रमः
पानात्ययस्तथा चैकः
दाहभेदाः
दाहाः सप्त मतास्तथा ३५

रक्तपित्तात्तथा रक्तात्तृष्णायाः पित्ततस्तथा
धातुक्षयान्मर्मघाताद्रक्तपूर्णोदरादपि ३६

उन्मादभेदाः
उन्मादाः षट् समाख्यातास्त्रिभिर्दोषैस्त्रयश्च ते
सन्निपाताद्विषाज्ज्ञेयः षष्ठो दुःखेन चेतसः ३७

भूतोन्मादभेदाः
भूतोन्मादा विंशतिः स्युस्ते देवाद्दानवादपि
गन्धर्वात्किन्नराद्यक्षात्पितृभ्यो गुरुशापतः ३८

प्रेताच्च गुह्यकाद् वृद्धात्सिद्धाद्भूतात्पिशाचतः
जलाधिदेवतायाश्च नागाच्च ब्रह्मराक्षसात्
राक्षसादपि कूष्माण्डात्कृत्या वेतालयोरपि ३९

अपस्मारभेदाः
अपस्मारश्चतुर्द्धा स्यात्समीरात्पित्ततस्तथा
श्लेष्मणोऽपि तृतीयः स्याच्चतुर्थः सन्निपाततः ४०

आमवातभेदाः
चत्वारश्चामवाताः स्युर्वातपित्तकफैस्त्रिधा
चतुर्थः सन्निपातेन
शूलभेदाः
शूलान्यष्टौ बुधा जगुः ४१

पृथगदोषैस्त्रिधा द्वन्द्वभेदेन त्रिविधान्यपि
आमेन सप्तमं प्रोक्तं सन्निपातेन चाष्टमम् ४२

परिणामशूलभेदाः
परिणामभवं शूलमष्टधा परिकीर्त्तितम्
मलैर्या शूलसंख्या स्यात्तैरेव परिणामजम् ४३

अन्नद्रवजरत्पित्तशूले
अन्नद्रवभवं शूलं जरत्पित्तभवं तथा

एकैकं गणितं सुज्ञैः
उदावर्त्तभेदाः
उदावर्त्तास्त्रयोदश ४४

एकः क्षुन्निग्रहात्प्रोक्तस्तृष्णारोधाद् द्वितीयकः ४५

निद्राघातात्तृतीयः स्याच्चतुर्थः श्वासनिग्रहात्
छर्दिरोधात्पञ्चमः स्यात्षष्ठः क्षवथुनिग्रहात् ४६

जृम्भारोधात्सप्तमः स्यादुद्गारग्रहतोऽष्टमः
नवमः स्यादश्रुरोधाद्दशमः शुक्रधारणात् ४७

मूत्ररोधान्मलस्यापि रोधाद्वातविनिग्रहात्
उदावर्त्तास्त्रयश्चैते घोरोपद्रवकारकाः ४८

आनाहभेदौ
आनाहोद्विविधो ज्ञेय एकः पक्काशयोद्भवः
आमाशयोद्भवश्चान्यः प्रत्यानाहः स कथ्यते ४९

उरोग्रहहृद्रोगयोर्भेदाः
उरोग्रहस्तथा चैको हृद्रोगाः पञ्च कीर्त्तिताः
वातादिभिस्त्रयः प्रोक्ताश्चतुर्थः सन्निपाततः
पञ्चमः क्रिमिसञ्जातः
उदररोगभेदाः
तथाऽष्टावुदराणि च ५०

वातात्पित्तात्कफात्त्रीणि त्रिदोषेभ्यो जलादपि
प्लीह्नः क्षताद्बद्धगुदादष्टमं परिकीर्त्तितम् ५१

गुल्मभेदाः
गुल्मास्त्वष्टौ समाख्याता वातपित्तकफैस्त्रयः ५२

द्वन्द्वभेदास्त्रयः प्रोक्ताः सप्तमः सन्निपाततः
रक्तादष्टमकः ख्यातः
मूत्राघातभेदाः
मूत्राघातास्त्रयोदश ५३

वातकुण्डलिका पूर्वा वाताष्ठीला ततः परा
वातबस्तिस्तृतीयः स्यान्मूत्रातीतश्चतुर्थकः ५४

पञ्चमं मूत्रजठरं षष्ठो मूत्रक्षयः स्मृतः
मूत्रोत्सर्गः सप्तमः स्यान्मूत्रग्रन्थिस्तथाऽष्टमः ५५

मूत्रशुक्रंतु नवमं विड्घातो दशमः स्मृतः
मूत्रसादश्चोष्णवातोबस्तिकुण्डलिका तथा
त्रयोऽप्येते मूत्रघाताः पृथग्घोराः प्रकीर्त्तिताः ५६

मूत्रकृच्छ्रभेदाः
मूत्रकृच्छ्राणि चाष्टौ स्युर्वातपित्तकफैस्त्रिधा ५७

सन्निपाताचतुर्थं स्याच्छुक्रकृच्छ्रं च पञ्चमं
विट्कृच्छ्रं षष्ठमाख्यातं घातकृच्छ्रं च सप्तमम्
अष्टमं चाश्मरीकृच्छ्रं
अश्मरीभेदाः
चतुर्द्धा चाश्मरी मता ५८

वातात्पित्तात्कफाच्छुक्रात् तथा मेहाश्च विंशतिः ५९

कफजमेहभेदाः
इक्षुमेहः सुरामेहः पिष्टमेहश्च सान्द्रकः
शुक्रमेहोदकाख्यौ च लालामेहश्च शीतकः
सिकताख्यः शनैर्मेहो दशैते कफसम्भवाः ६०

पित्तजमेहभेदाः
मञ्जिष्ठाख्यो हरिद्राख्यो नीलमेहश्च रक्तकः
कृष्णमेहः ज्ञारमेहः षडेते पित्तसम्भवाः ६१

वातिकमेहभेदाः
हस्तिमेहो वसामेहो मज्ञामेहो मधुप्रभः
चत्वारो वातजा मेहा इति मेहाश्च विंशतिः ६२

सोमरोगप्रमेहपिटिकयोर्भेदः
सोमरोगस्तथा चैकः प्रमेहपिटिका दश
शराविका कच्छपिका पुत्रिणी विनताऽलजी ६३

मसूरिका सर्षपिका जालिनी च विदारिका
विद्रधिश्च दशैताः स्युः पिटिका मेहसम्भवाः ६४

मेदोदोषशोथरोगभेदाः
मेदो दोषस्तथा चैकः शोथ रोगा नव स्मृताः
दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ६५

वृद्धिरोगभेदाः
वृद्धयः सप्त गदिता वातात्पित्तात्कफेन च
रक्तेन मेदसा मूत्रादन्त्रवृद्धिश्च सप्तमी ६६

अराडवृद्धि गराडमालिका गराडालजीरोगाः
अराडवृद्धिस्तथा चैका तथैका गराडमालिका
गराडालजीति चैका स्याद्
ग्रन्थिभेदाः
ग्रन्थयो नवधा मताः ६७

त्रिभिर्दोषैस्त्रयो रक्ताच्छिराभिर्मेदसो व्रणात्
अस्थ्ना मांसेन नवमः

अर्बुदभेदाः
षड्विधं स्यात्तथाऽबुदम् ६८

वातात्पित्तात्कफाद्रक्तान्मांसादपि च मेदसः ६९

श्लीपदभेदाः
श्लीपदं च त्रिधा प्रोक्तं वातात्पित्तात्कफादपि ७०

विद्रधिभेदाः
विद्रधिः षड्विधः ख्यातो वातपित्तकफैस्त्रयः
रक्तात् क्षतात् त्रिदोषैश्च
व्रणभेदाः
व्रणाः पञ्चदशोदिताः ७१

तेषां चतुर्द्धा भेदाः स्युरागन्तुर्देहजस्तथा
शुद्धो दुष्टश्च विज्ञेयस्तत्संख्या कथ्यते पृथक्
वातव्रणः पित्तजश्च कफजो रक्तजो व्रणः ७२

वातपित्तभवश्चान्यो वातश्लेष्मभवस्तथा
तथा पित्तकफाभ्यां च सन्निपातेन चाष्टमः ७३

नवमो वातरक्तेन दशमो रक्तपित्ततः
श्लेष्मरक्तभवश्चान्यो वातपित्तासृगुद्भवः ७४

वातश्लेष्मासृगुत्पन्नः पित्तश्लेष्मास्रसंभवः
सन्निपातासृगुद्भूत इति पञ्चदश व्रणाः ७५

सद्योव्रणभेदाः
सद्योव्रणस्त्वष्टधा स्यादविक्लृप्तविलम्बितौ
छिन्नभिन्नप्रचलिता घृष्टविद्धनिपातिताः ७६

कोष्ठभेदभेदौ
कोष्ठभेदो द्विधा प्रोक्तश्छिन्नान्त्रो निःसृतान्त्रकः ७७

अस्थिभङ्गभेदाः
अस्थिभङ्गोऽष्टधा प्रोक्तो भग्नपृष्ठविदारितौ
विवर्त्तितश्च विश्लिष्टस्तिर्यक्क्षिप्तस्त्वधोगतः
ऊर्ध्वगः संधिभग्नश्च
वह्निदग्धभेदाः
वह्निदग्धश्चतुर्विधः ७८

प्लुष्टो विदग्धो दुर्दग्धः सम्यग्दग्धः प्रकीर्त्तितः ७९

नाडीव्रणभेदाः
नाड्यः पञ्च समाख्याता वातपित्तकफैस्त्रिधा
त्रिदोषैरपि शल्येन
भगन्दरभेदाः
तथाऽष्टौ स्युर्भगन्दराः ८०

शतपोनस्तु पवनादुष्ट्रग्रीवश्च पित्ततः
परिस्रावो कफाज्ज्ञेय ऋजुर्वातकफोद्भवः ८१

परिक्षेपी मरुत्पित्तादर्शोजः कफपित्ततः
आगन्तुजातश्चोन्मार्गी शङ्खावर्तस्त्रिदोषजः ८२

उपदंशभेदाः
मेढ्रे पञ्चोपदंशाः स्युर्वातपित्तकफैस्त्रिधा
सन्निपातेन रक्ताच्च
शूकामयभेदाः
मेढ्रे शूकामयास्तथा
चतुर्विंशतिराख्याता लिङ्गार्शो ग्रथितं तथा ८३

निवृत्तमवमन्थश्च मृदितं शतपोनकः
अष्ठीलिका सर्षपिका त्वक्पाकश्चावपाटिका ८४

मांसपाकः स्पर्शहानिर्निरुद्धमणिरुत्तमा
मांसार्बुदं पुष्करिका संमूढपिडिकाऽलजी ८५

रक्तार्बुदं विद्रधिश्च कुम्भिकातिलकालकः
निरुद्धप्रकशः प्रोक्तस्तथैव परिवर्त्तिका ८६

कुष्ठभेदाः
कुष्ठान्यष्टादशोक्तानि वातात् कापालिकं भवेत्
पित्तेनोदुम्बरं प्रोक्तं कफान्मण्डलचर्चिके ८७

मरुत्पित्तादृष्यजिह्वं श्लेष्मवाताद्विपादिका
तथा सिध्मैककुष्ठं च किटिभं चालसं तथा ८८

कफपित्तात् पुनर्दद्रुः पामा विस्फोटकं तथा
महाकुष्ठं चर्मदलं पुण्डरीकं शतारुकम् ८९

त्रिदोषैः काकणं ज्ञेयं तथाऽन्यच्छिवत्रसंज्ञितम्
तथा वातेन पित्तेन श्लेष्मणा च त्रिधा भवेत् ९०

क्षुद्ररोगभेदाः
क्षुद्ररोगाः षष्टिसंख्यास्तेष्वादौ शर्करार्बुदम्
इन्द्रवृद्धा पनसिका विवृताऽन्धालजी तथा ९१

वराहदंष्ट्रो वल्मीकं कच्छपी तिलकालकः
गर्दभी रकसा चैव यवप्रख्या विदारिका ९२

कदरं मषकश्चैव नीलिका जालगर्दभः
इरिवेल्ली जतुमणिर्गुदभ्रंशोऽग्निरोहिणी ९३

सन्निरुद्धगुदः कोठः कुनखोऽनुशयी तथा
पद्मिनीकण्टकश्चिप्पमलसो मुखदूषिका ९४

कक्षावृषणकच्छूश्च गन्धः पाषाणगर्दभः
राजिका च तथा व्यङ्गश्चतुर्द्धा परिकीर्त्तितः ९५

वातात्पित्तात्कफाद्रक्तादित्युक्तं व्यङ्गलक्षणम्
विस्फोटाः क्षुद्ररोगेषु तेऽष्टधा परिकीर्त्तिताः ९६

पृथग्दोषैस्त्रयो द्वन्द्वैस्त्रिविधः सप्तमोऽसृजः
अष्टमः सन्निपातेन क्षुद्ररुक्षु मसूरिका ९७

चतुर्दशप्रकारेण त्रिभिर्दोषैस्त्रिधा च सा
द्वन्द्वजा विविधा प्रोक्ता सन्निपातेन सप्तमी ९८

अष्टमी त्वग्गता ज्ञेया नवमी रक्तजा स्मृता
दशमी मांससञ्जाता चतस्रोऽन्याश्च दुस्तराः
मेदोऽस्थिमज्जाशुक्रस्थाः क्षुद्ररोगा इतीरिताः ९९

विसर्पभेदाः
विसर्परोगो नवधा वातपित्तकफैस्त्रिधा १००

त्रिधा स द्वन्द्वभेदेन सन्निपातेन सप्तमः
अष्टमो वह्निदाहेन नवमश्चाभिघातजः १०१

उदर्दशीतपित्तामयौ
तथैकः श्लेष्मपित्ताभ्यामुदर्दः परिकीर्त्तितः
वातपित्तेन चैकस्तु शीतपित्तामयः स्मृतः १०२

अम्लपित्तभेदाः
अम्लपित्तं त्रिधा प्रोक्तं वातेन श्लेष्मणा तथा

तृतीयं श्लेष्मवाताभ्याम्
वातरक्तभेदाः
वातरक्तं तथाऽष्टधा १०३

वाताधिक्येन पित्ताच्च कफाद्दोषत्रयेण च
रक्ताधिक्येन दोषाणां द्वन्द्वेन त्रिविधः स्मृतः १०४

वातरोगभेदाः
अशीतिर्वातजा रोगाः कथ्यन्ते मुनिभाषिताः
आक्षेपको हनुस्तम्भ ऊरुस्तम्भः शिरोग्रहः १०५

बाह्यायामोऽन्तरायामः पार्श्वशूलं कटिग्रहः
दण्डापतानकः खल्ली जिह्वास्तम्भस्तथाऽदितम् १०६

पक्षाघातः क्रोष्टुशीर्षो मन्यास्तम्भश्च पङ्गुता
कलायखञ्जता तूनी प्रतितूनी च खञ्जता १०७

पादहर्षो गृध्रसी च विश्वाची चापबाहुकः
अपतानो व्रणायामो वातकण्टोऽपतन्त्रकः १०८

अङ्गभेदोऽङ्गशोषश्च मिन्मिनत्वं च गद्गदः
प्रत्यष्ठीलाऽष्ठीलिका च वामनत्वं च कुब्जता १०९

अङ्गपीडाऽङ्गशूलं च संकोचस्तम्भरूक्षताः
अङ्गभङ्गोऽङ्गविभ्रंशो विड्ग्रहो बद्धविट्कता ११०

मूकत्वमतिजृम्भा स्यादत्युद्गारोऽन्त्रकूजनम्
वातप्रवृत्तिः स्फुरणं शिराणां पूरणं तथा १११

कम्पः कार्श्यं श्यावता च प्रलापः क्षिप्रमूत्रता
निद्रानाशः स्वेदनाशो दुर्बलत्वं बलक्षयः ११२

अतिप्रवृत्तिः शुक्रस्य कार्श्यं नाशश्च रेतसः
अनवस्थितचित्तत्वं काठिन्यं विरसास्यता ११३

कषायवक्त्रताऽध्मानं प्रत्याध्मानं च शीतता
रोमहर्षश्च भीरुत्वं तोदः कराडू रसाज्ञता
शब्दाज्ञता प्रसुप्तिश्च गन्धाज्ञत्वं दृशः क्षयः ११४

पित्तरोगभेदाः
अथ पित्तभवा रोगाश्चत्वारिंशदिहोदिताः ११५

धूम्रोद्गारो विदाहः स्यादुष्णाङ्गत्वं मतिभ्रमः
कान्तिहानिः कराठशोषो मुखशोषोऽल्पशुक्रता ११६

तिक्तास्यताऽम्लवक्त्रत्वं स्वेदस्त्रावोऽङ्गपाकता
क्लमो हरितवर्णत्वमतृप्तिः पीतगात्रता ११७

रक्तस्त्रावोऽङ्गदरणं लोहगन्धास्यता तथा
दौर्गन्ध्यं पीतमूत्रत्वमरतिः पीतविट्कता ११८

पीतावलोकनं पीतनेत्रता पीतदन्तता
शीतेच्छा पीतनखता तेजोद्वेषोऽल्पनिद्रता ११९

कोपश्च गात्रसादश्च भिन्नविट्कत्वमन्धता
उष्णोच्छ्वासत्वमुष्णत्वं मूत्रस्य च मलस्य च १२०

तमसो दर्शनं पीतमराडलानां च दर्शनम्
निःसहत्वं च पित्तस्य चत्वारिंशद्रुजः स्मृताः १२१

कफरोगभेदाः
कफस्य विंशतिः प्रोक्ता रोगास्तन्द्राऽतिनिद्रता
गौरवं मुखमाधुर्यं मुखलेपः प्रसेकता १२२

श्वेतावलोकनं श्वेतविट्कत्वं श्वेतमूत्रता
श्वेताङ्गवर्णता शैत्यमुष्णेच्छा तिक्तकामिता १२३

मलाधिक्यं च शुक्रस्य बाहुल्यं बहुमूत्रता
आलस्यं मन्दबुद्धित्वं तृप्तिर्घर्घरवाक्यता
अचैतन्यं च गदिता विंशतिः श्लेष्मजा गदाः १२४

रक्तरोगभेदाः
रक्तस्य च दश प्रोक्ता व्याधयस्तेषु गौरवम् १२५

रक्तमण्डलता रक्तनेत्रत्वं रक्तमूत्रता
रक्तनिष्ठीवनं रक्तपिटिकानां च दर्शनम्
औष्ण्यं च पूतिगन्धित्वं पीडा पाकश्च जायते १२६

मुखरोगभेदाः
चतुःसप्ततिसंख्याका मुखरोगास्तथोदिताः १२७

ओष्ठरोगभेदाः
तेष्वोष्ठरोगा गणिता एकादशमिता बुधैः
वातपित्तकफैस्त्रेधा त्रिदोषैरसृजा तथा १२८

क्षतान्मांसार्बुदं चैव खण्डोष्ठं च जलार्बुदम्
मेदोऽबुदं चार्बुदं च रोगा एकादशौष्ठजाः १२९

दन्तरोगभेदाः
दन्तरोगा दशाख्याता दालनः कृमिदन्तकः
दन्तहर्षः करालश्च दन्तचालश्च शर्करा
अधिदन्तः श्यावदन्तो दन्तभेदः कपालिका १३०

दन्तमूलरोगभेदाः
तथा त्रयोदशमिता दन्तमूलामयाः स्मृताः १३१

शीतादोपकुशौ द्वौ तु दन्तविद्रधिपुप्पुटौ
अधिमांसो विदर्भश्च महासौषिरसौषिरौ १३२

तेष्वेव गतयः पञ्च वातात्पित्तात्कफादपि
सन्निपाताद् गतिश्चान्या रक्तनाडी च पञ्चमी १३३

जिह्वारोगभेदाः
तथा जिह्वाऽमयाः षट् स्युर्वातपित्तकफैस्त्रिधा
अलासश्च चतुर्थः स्यादधिजिह्वश्च पञ्चमः १३४

षष्ठश्चैवोजपजिह्वः स्यात्
तालुरोगभेदाः
तथाऽष्टौ तालुजा गदाः १३५

अर्बुदं तालुपिटिका कच्छपी तालुसंहतिः
गलशुण्डी तालुशोषस्तालुपाकश्च पुप्पुटः १३६

गलरोगभेदाः
गलरोगास्तथा ख्याता अष्टादशमिता बुधैः
वातरोहिणिका पूर्वं द्वितीया पित्तरोहिणी
कफरोहिणिका प्रोक्ता त्रिदोषैरपि रोहिणी १३७

मेदोरोहिणिका वृन्दो गलौघो गलविद्रधिः
स्वरहा तुण्डिकेरी च शतघ्नी शालुकोऽबुदम् १३८

गलायुर्वलयश्चापि वाताद् गण्डः कफात्तथा
मेदोगण्डस्तथैव स्यादित्यष्टादश कण्ठजाः १३९

मुखान्तर्गतरोगभेदाः
मुखान्तःसम्भवा रोगा अष्टौ ख्याता महर्षिभिः
मुखपाको भवेद्वातात्पित्तात्तद्वत्कफादपि १४०

रक्ताच्च सन्निपाताच्च पूत्यास्योर्ध्वगुदावपि
अर्बुदं चेति मुखजाश्चतुः सप्ततिरामयाः १४१

कर्णरोगभेदाः
कर्णरोगाः समाख्याता अष्टादशमिता बुधैः
वातात्पित्तात्कफाद्रक्तात्सन्निपाताच्च विद्रधिः १४२

शोथोऽबुदं पूतिकर्णः कर्णार्शः कर्णहल्लिका
बाधिर्यं तन्त्रिका कण्डूः शष्कुली कृमिकर्णकः
कर्णनादः प्रतीनाह इत्यष्टादश कर्णजाः १४३

कर्णपालीरोगभेदाः
कर्णपालीसमुद्भूता रोगाः सप्त इहोदिताः १४४

उत्पातः पालिशोषश्च विदारी दुःखवर्द्धनः
परिपोटश्च लेही च पिप्पली चेति संस्मृतः १४५

कर्णमूलरोगभेदाः
कर्णमूलामयाः पञ्च वातात्पित्तात्कफादपि
सन्निपाताच्च रक्ताच्च
नासारोगभेदाः
तथा नासाभवा गदाः १४६

अष्टादशैव संख्याताः प्रतिश्यायस्तु तेष्वपि
वातात्पित्तात्कफाद्रक्तात्सन्निपातेन पञ्चमः १४७

अपीनसः पूतिनासो नासाऽशो भ्रंशथुः क्षवः
नासाऽनाहः पूतिरक्तमर्बुदं दुष्टपीनसम्
नासाशोषो घ्राणपाकः पूयस्रावश्च दीप्तकः १४८

शिरोरोगभेदाः

तथा दश शिरोरोगा वातेनार्द्धावभेदकः
शिरस्तापश्च वातेन पित्तपीडा तृतीयका १४९

चतुर्थी कफजा पीडा रक्तजा सन्निपातजा
सूर्यावर्त्ताच्छिरः कम्पात्क्रिमिभिः शङ्खकेन च १५०

कपालरोगभेदाः
तथा कपालरोगाः स्युर्नव तेषूपशीर्षकम्
अरुंषिका विद्रधिश्च दारुणं पिटिकाऽबुदम्
इन्द्रलुप्तं च खलितं पलितं चेति ते नव १५२

नेत्ररोगभेदास्तत्रादौ वर्त्मरोगभेदाः
तथा नेत्रभवाः ख्याताश्चतुर्नवतिरामयाः
तेषु वर्त्मगदाः प्रोक्ताश्चतुर्विंशतिसंज्ञकाः १५३

कृच्छ्रोन्मीलः पक्ष्मपातः कफोत्क्लिष्टश्च लोहितः
अरुङ्निमेषः कथितो रक्तोत्क्लिष्टः कुकूणकः १५४

पक्ष्मार्शः पक्ष्मरोधश्च पित्तोत्क्लिष्टश्च पोथकी
क्लिष्टवर्त्मा च बहलः पक्ष्मोत्सङ्गस्तथाऽबुदम् १५५

कुम्भिका सिकतावर्त्म लगणोऽञ्जननामिका
कर्दमः श्याववर्त्मा च बिसवर्त्मा तथाऽलजी
उत्क्लिष्टवर्त्मेति गदाः प्रोक्ता वर्त्मसमुद्भवाः १५६

नेत्रसन्धिरोगभेदाः
नेत्रसन्धिसमुद्भूता नव रोगाः प्रकीर्त्तिताः
जलस्रावः कफस्रावो रक्तस्रावश्च पर्वणी १५७

पूयस्रावः क्रिमिग्रन्थिरुपनाहस्तथाऽलजी
पूयालस इति प्रोक्ता रोगा नयनसन्धिजाः १५८

नेत्रशुक्लगतरोगभेदाः
तथा शुक्लगता रोगा बुधैः प्रोक्तास्त्रयोदश १५९

शिरोत्पातः शिराहर्षः शिराजालं च शुक्तिका
शुक्लार्म चाधिमांसार्म प्रस्तार्यर्म च पिष्टकः १६०

शिराजपिटिका चैव कफग्रथितकोऽर्जुनः
स्नाय्वर्म शोणितार्म स्यादिति शुक्लगता गदाः १६१

नेत्रकृष्णगतरोगभेदाः
तथा कृष्णसमुद्भूताः पञ्च रोगाः प्रकीर्तिताः
शुद्धशुक्रं शिराशुक्रं क्षतशुक्रं तथाऽजका
शिरासङ्गश्च सर्वेऽपि प्रोक्ताः कृष्णगता गदाः १६२

काचरोगभेदाः
काचं तु षड्विधं ज्ञेयं वातात्पित्तात्कफादपि
सन्निपाताच्च रक्ताच्च षष्ठं संसर्गसम्भवम् १६३

तिमिररोगभेदाः
तिमिराणि षडेव स्युर्वातपित्तकफैस्त्रिधा
संसर्गेण च रक्तेन षष्ठं स्यात्सन्निपाततः १६४

लिङ्गनाशरोगभेदाः
लिङ्गनाशः सप्तधा स्याद्वातात्पित्तात्कफेन च
त्रिदोषैरुपसर्गेण संसर्गेणासृजा तथा १६५

दृष्टिमण्डलरोगभेदाः
अष्टधा दृष्टिरोगाः स्युस्तेषु पित्तविदग्धकम्
अम्लपित्तविदग्धं च तथैवोष्णविदग्धकम् १६६

नकुलान्ध्यं धूसरान्ध्यं रात्र्यान्ध्यं ह्रस्वदृष्टिकः

गम्भीरदृष्टिरित्येते रोगा दृष्टिगता मताः १६७

अभिष्यन्दरोगभेदाः
अभिष्यन्दाश्च चत्वारो रक्ताद्दोषैस्त्रिभिस्तथा १६८

अधिमन्थरोगभेदाः
चत्वारश्चाधिमन्थाः स्युर्वातपित्तकफास्रतः १६९

सर्वाक्षिरोगभेदाः
सर्वाक्षिरोगाश्चाष्टौ स्युस्तेषु वातविपर्ययः
अल्पशोफोऽन्यतोवातस्तथा पाकात्ययः स्मृतः
शुष्काक्षिपाकश्च तथा शोफोऽध्युषित एव च
हताधिमन्थ इत्येते रोगाः सर्वाक्षिसम्भवाः १७०

पुंस्त्वरोगभेदाः
पुंस्त्वदोषास्तु पञ्चैव प्रोक्तास्तत्रेर्ष्यकः स्मृतः
आसेक्यश्चैव कुम्भीकः सुगन्धिः षण्ढसंज्ञकः १७१

शुक्रदोषभेदाः
शुक्रदोषास्तथाऽष्टौ स्युर्वातात्पित्तात्कफेन च
कुणपं श्लेष्मवाताभ्यां पूयाभं श्लेष्मपित्ततः १७२

क्षीणं च वातपित्ताभ्यां ग्रन्थिलं श्लेष्मवाततः
मलाभं सन्निपाताच्च शुक्रदोषा इतीरिताः १७३

अथ स्त्रीरोगनामानि
तत्रार्त्तवदोषभेदाः
अथ स्त्रीरोगनामानि प्रोच्यन्ते पूर्वशास्त्रतः १७४

अष्टावार्त्तवदोषाः स्युर्वातपित्तकफैस्त्रिधा
पूयाभं कुणपं ग्रन्थिं क्षीणं मलसमं तथा १७५

रक्तप्रदरभेदाः
तथा च रक्तप्रदरं चतुर्विधमुदाहृतम्
वातपित्तकफैस्त्रेधा चतुर्थं सन्निपाततः १७६

योनिरोगभेदाः
विंशतिर्योनिरोगाः स्युर्वातात्पित्तात्कफादपि
सन्निपाताच्च रक्ताच्च लोहितक्षयतस्तथा १७७

शुष्का च वामिनी चैव खण्डिताऽन्तर्मुखी तथा
सूचीमुखी विप्लुता च जातघ्नी च परिप्लुता १७८

उपप्लुता प्राक्चरणा महायोनिश्च कर्णिनी
स्यान्नन्दा चातिचरणा योनिरोगा इतीरिताः १७९

योनिकन्दभेदाः
चतुर्विधं योनिकन्दं वातपित्तकफैस्त्रिधा
चतुर्थं सन्निपातेन
गर्भरोगभेदाः
तथाष्टौ गर्भजा गदाः १८०

उपविष्टकगर्भः स्यात्तथा नागोदरः स्मृतः
मक्कल्लो मूढगर्भश्च विष्कम्भो गूढगर्भकः
जरायुदोषो गर्भस्य पातश्चाष्टमकः स्मृतः १८१

स्तनरोगभेदाः
पञ्चैव स्तनरोगाः स्युर्वातात्पित्तात्कफादपि
सन्निपातात्क्षताच्चैव
स्तन्यरोगभेदाः
तथा स्तन्योद्भवा गदाः १८२

बालरोगेषु कथिताः

स्त्रीदोषभेदाः
स्त्रीदोषाश्चत्रयः स्मृताः १८३

अदन्नपुरुषोत्पन्नः सपत्नीविहितस्तथा
दैवाज्जातस्तृतीयस्तु
सूतिकारोगभेदाः
तथा ये सूतिकागदाः १८४

ज्वरादयश्चिकित्स्यास्ते यथादोषं यथाबलम् १८५

बालरोगभेदाः
द्वाविंशतिर्बालरोगास्तेषु क्षीरभवास्त्रयः
वातात्पित्तात्कफाच्चैव दन्तोद्भेदश्चतुर्थकः
दन्तघातो दन्तशब्दोऽकालदन्ताऽहिपूतनम् १८६

मुखपाको मुखस्रावो गुदपाकोपशीर्षके
पद्मारुणस्तालुकण्टो विच्छिन्नं पारिगर्भिकः १८७

दौर्बल्यं गात्रशोषश्च शय्यामूत्रं कुकूणकः
रोदनं चाजगल्ली स्यादिति द्वाविंशतिः स्मृताः १८८

बालग्रहभेदाः
तथा बालग्रहाः ख्याता द्वादशैव मुनीश्वरैः
स्कन्दग्रहो विशाखः स्याच्छ्वग्रहश्च पितृग्रहः १८९

नैगमेयग्रहस्तद्वच्छकुनिः शीतपूतना
मुखमण्डनिका तद्वत्पूतना चान्धपूतना
रेवती चैव सङ्ख्याता तथा स्याच्छुष्करेवती १९०

चरणभेदरोगभेदाः
तथा चरणभेदास्तु वातरक्तादिकाश्च ये

द्विचत्वारिंशदुक्तास्ते रोगेष्वेव मुनीश्वरैः
वातादिदोषभेदाः
द्विषष्टिर्दोषभेदाः स्युः सन्निपातादिकाश्च ये
तेऽपि रोगेषु गणिताः पृथक्प्रोक्ता न ते क्वचित् १९२

पञ्चकर्मरोगभेदाः
हीनमिथ्याऽतियोगानां भेदैः पञ्चदशोदिताः
पञ्चकर्मभवा रोगा रोगेष्वेव प्रकीर्त्तिताः १९३

स्नेहादीनां हीनादियोगजरोगभेदाः
स्नेहस्वेदौ तथा धूमो गण्डूषोऽञ्जनतर्पणे
षोढा अष्टादशैतज्जास्ताश्च रोगेषु लक्षिताः १९४

शीतोष्णशल्यक्षारोपद्रवाः
शीतोपद्रव एकः स्यादेकश्चोष्णोद्भवो मतः
शल्योपद्रव एकश्च क्षाराच्चैकः स्मृतस्तथा १९५

विषस्य विविधा भेदाः
स्थावरं जङ्गमं चैव कृत्रिमं च त्रिधा विषम् १९६

तेषां च कालकूटाद्यैर्नवधा स्थावरं विषम्
जङ्गमं बहुधा प्रोक्तं तत्र लूता भुजङ्गमाः १९७

वृश्चिका मूषिकाः कीटाः प्रत्येकं ते चतुर्विधाः
दंष्ट्राविषं नखविषं बालशृङ्गास्थिभिस्तथा १९८

मूत्रात्पुरीषाच्छुक्राच्च दृष्टेर्निश्वासतस्तथा
लालायाः स्पर्शतस्तद्वत्तथा शङ्काविषं मतम् १९९

कृत्रिमं द्विविधं प्रोक्तं गरदूषीविभेदतः
सप्तधातुविषं ज्ञेयं तथा सप्तोपधातुजम् २००

तथैवोपविषेभ्यश्च जातं सप्तविधं मतम्
दुष्टनीरविषं चैकं तथैकं दिग्धजं विषम् २०१

कपिकच्छुभवा कराडूर्दुष्टनीरभवा तथा
तथा सूरणकराडूश्च शोथो भल्लातजस्तथा २०२

मदभेदाः
मदश्चतुर्विधश्चान्यः पूगभङ्गाऽन्नकोद्रवैः
चतुर्विधोऽन्यो द्रव्याणां फलत्वङ्मूलपत्रजः २०३

उपसंहारः
इति प्रसिद्धा गणिता ये किलोपद्रवा भुवि
असङ्ख्याश्चापरे धातुमूलजीवादिसम्भवाः

इति शार्ङ्गधरसंहितायां पूर्वखराडे रोगगणनानामसप्तमोऽध्यायः

इति प्रथमखराडं समाप्तम्

श्रीः

मध्यखण्डम्

अथ स्वरसादिकल्पनानामप्रथमोऽध्यायः

अथ पञ्च कषायाः

अथातः स्वरसः कल्कः क्वाथश्च हिमफाण्टकौ
ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् १

स्वरसस्य लक्षणम्

आहतात्तत्क्षणाकृष्टाद् द्रव्यात् क्षुण्णात्समुद्धरेत्
वस्त्रनिष्पीडितो यः स रसः स्वरस उच्यते २

स्वरसस्य द्वितीयं लक्षणम्

कुडवं चूर्णितं द्रव्यं क्षिप्तं च द्विगुणे जले
अहोरात्रं स्थितं तस्माद्भवेद्वा रस उत्तमः ३

स्वरसस्य तृतीयं लक्षणम्

आदाय शुष्कद्रव्यं वा स्वरसानामसम्भवे
जलेऽष्टगुणिते साध्यं पादशिष्टं च गृह्यते ४

स्वरसमात्रा

स्वरसस्य गुरुत्वाच्च पलमर्धं प्रयोजयेत्
निशोषितं चाग्निसिद्धं पलमात्रं रसं पिबेत् ५

स्वरसे प्रक्षेप्यद्रव्याणि तेषां परिमाणं च

मधुश्वेतागुडक्षाराजीरकं लवणं तथा
घृतं तैलं च चूर्णादीन्कोलमात्रान् रसे क्षिपेत् ६

अथ रोगानुसारेण स्वरसप्रयोगाः

तत्र प्रमेहेऽमृतास्वरसो धात्रीस्वरसश्चस तथा
अमृताया रसः क्षौद्रयुक्तः सर्वप्रमेहजित्

हरिद्राचूर्णयुक्तो वा रसो धात्र्याः समाक्षिकः ७

रक्तपित्तादिषु वासकस्वरसः
वासकस्वरसः पेयो मधुना रक्तपित्तजित्
ज्वरकासक्षयहरः कामलाश्लेष्मपित्तहा ८

कामलायां त्रिफलाऽदीनां स्वरसचतुष्टयम्
त्रिफलाया रसः क्षौद्रयुक्तो दार्वीरसोऽथ वा
निम्बस्य वा गुडूच्या वा पीतो जयति कामलाम् ९

विषमज्वरे तुलसीद्रोणपुष्पीपत्रस्वरसौ
पीतो मरिचचूर्णेन तुलसीपत्रजो रसः
द्रोणपुष्पीरसो वाऽपि निहन्ति विषमज्वरान् १०

रक्तातीसारे जम्ब्वादिस्वरसः
जम्ब्वाम्रामलकीनां च पल्लवोत्थो रसो जयेत्
मध्वाज्यक्षीर संयुक्तो रक्तातीसारमुल्बणम् ११

सर्वातिसारे निष्कण्टकबब्बूलदल कुटजादित्वक् स्वरसौ
स्थूलबब्बूलिकापत्ररसः पानाद्व्यपोहति
सर्वातिसारान्श्योनाककुटजत्वग्रसोऽथ वा १२

वृषणवातप्रतिश्यायादिष्वार्द्रकस्वरसः
आर्द्रकस्वरसः क्षौद्रयुक्तो वृषणवातनुत्
श्वासकासारुचीर्हन्ति प्रतिश्यायं व्यपोहति १३

पार्श्वदिशूलादिषु बीजपूरस्वरसः
बीजपूररसः पानान्मधुक्षारयुतो जयेत्
पार्श्वहृद्बस्तिशूलानि कोष्ठवातं च दारुणम् १४

पित्तशूले शतावरीस्वरसः प्लीहाऽपच्योः कन्यास्वरसश्च

शतावर्याश्च मधुना पित्तशूलहरो रसः
निशाचूर्णयुतः कन्यारसः प्लीहाऽपचीहरः १५

अपच्यादावलम्बुषास्वरसः
अलम्बुषायाः स्वरसः पीतो द्विपलमात्रया
अपचीगण्डमालानां कामलायाश्च नाशनः १६

सूर्यावर्त्तार्धभेदकयोर्मुण्डीस्वरसः
शशमुण्ड्या रसः कोष्णो मरिचैरवधूलितः
जयेत्सप्तदिनाभ्यासात्सूर्यावर्त्तार्धभेदकौ १७

सर्वोन्मादे ब्राह्म्यादीनां स्वरसचतुष्टयम्
ब्राह्मीकूष्माण्डषड्ग्रन्थाशङ्खिनीस्वरसाः पृथक्
मधुकुष्ठयुताः पीताः सर्वोन्मादापहारिणः १८

कोद्रवजमदे कूष्माण्डकस्वरसः
कूष्माण्डकस्य स्वरसो गुडेन सह योजितः
दुष्टकोद्रवसञ्जातमदं पानाद्व्यपोहति १९

खड्गादिक्षतव्रणे गाङ्गेरुकीस्वरसः
खड्गादिच्छिन्नगात्रस्य तत्कालं पूरितो व्रणः
गाङ्गेरुकीमूलरसैर्जायते गतवेदनः २०

अथ पुटपाकप्रकरणम्
तत्र पुटपाकविधिकथने हेतुः
पुटपाकस्य कल्कस्य स्वरसो गृह्यते यतः
अतस्तु पुटपाकानां युक्तिरत्रोच्यते मया २१

पुटपाकविधिः
पुटपाकस्य मात्रेयं लेपस्याङ्गारवर्णता
लेपं च द्व्यङ्गुलं स्थूलं कुर्याद्वाऽङ्गुष्ठमात्रकम् २२

काश्मरीवटजम्ब्वादिपत्रैर्वेष्टनमुत्तमम्
पलमात्रं रसो ग्राह्यः कर्षमात्रं मधु क्षिपेत्
कल्कचूर्णद्रवाद्यास्तु देयाः स्वरसवद् बुधैः २३

सर्वातिसारे कुटजपुटपाकः
तत्कालाकृष्टकुटजत्वचं तराडुलवारिणा २४

पिष्टां चतुष्पलमितो जम्बूपल्लववेष्टिताम्
सूत्रेण बद्धां गोधूमपिष्टेन परिवेष्टिताम् २५

लिप्तां च घनपङ्केन गोमयैर्वह्निना दहेत्
अङ्गारवर्णां च मृदं दृष्ट्वा वह्नेः समुद्धरेत् २६

ततो रसं गृहीत्वा च शीतं क्षौद्रयुतं पिबेत्
जयेत्सर्वानतीसारान्दुस्तरान्सुचिरोत्थितान् २७

तराडुलोदकविधिः
कशिडतं तराडुलपलं जलेऽष्टगुणिते क्षिपेत्
भावयित्वा जलं ग्राह्यं देयं सर्वत्र कर्मसु २८

सर्वातिसारेऽरलूपुटपाकः
अरलूत्वक्कृतश्चैव पुटपाकोऽग्निदीपनः
मधुमोचरसाभ्यां च युक्तः सर्वातिसारनुत् २९

सर्वातिसारे न्यग्रोधादितित्तिरपुटपाकः
न्यग्रोधादेश्च कल्केन पूरयेद्गौरतित्तिरेः
निरन्त्रमुदरं सम्यक्पुटपाकेन तत्पचेत्
तत्कल्कस्य रसः क्षौद्रयुक्तः सर्वातिसारनुत् ३०

सर्वातिसारे दाडिमपुटपाकः
पुटपाकेन विपचेत्सुपक्वं दाडिमीजलम्

तद्रसो मधुसंयुक्तः सर्वातीसारनाशनः ३१

छर्द्यां बीजपूरादिपुटपाकः
बीजपूराम्रजम्बूनां पल्लवानि जटाः पृथक् ३२

विपचेत्पुटपाकेन क्षौद्रयुक्तश्च तद्रसः
छर्दिं निवारयेद्धोरां सर्वदोषसमुद्भवाम् ३३

रक्तपित्तादौ वासापुटपाकः
पिष्टानां वृषपत्राणां पुटपाकरसो हिमः
मधुयुक्तो जयेद्रक्तपित्तकासज्वरक्षयान् ३४

कासश्वासादौ कण्टकारीपुटपाकः
पचेत्क्षुद्रां सपञ्चाङ्गां पुटपाकेन तद्रसः
पिप्पली चूर्णसंयुक्तः कासश्वासकफापहः ३५

कासादौ बिभीतकपुटपाकः
बिभीतकफलं किञ्चिद् घृतेनाभ्यज्य लेपयेत्
गोधूमपिष्टेनाङ्गारैर्विपचेत्पुटपाकवत् ३६

ततः पक्वं समुद्धृत्य त्वचं तस्य मुखे क्षिपेत्
कासश्वासप्रतिश्यायस्वरभङ्गाञ्जयेत्ततः ३७

आमातीसारे शुण्ठीपुटपाकः
चूर्णं किञ्चिद् घृताभ्यक्तं शुण्ठ्या एरण्डजैर्दलैः
वेष्टितं पुटपाकेन विपचेन्मन्दवह्निना ३८

तत उद्धृत्य तच्चूर्णं ग्राह्य प्रातः सितासमम्
येन यान्ति शमं पीडा आमातीसारसंभवाः ३९

आमवातेऽन्य शुण्ठीपुटपाकः

शुराठीकल्कं विनिक्षिप्य रसैरेरराडमूलजैः
विपचेत्पुटपाकेन तद्रसः क्षौद्रसंयुतः
श्रामवातसमुद्भूतां पीडां जयति दुस्तराम् ४०

श्रर्शोरोगे सूरणपुटपाकः
सौरणं कन्दमादाय पुटपाकेन पाचयेत्
सतैललवणस्तस्य रसश्चार्शोविकारनुत् ४१

हृच्छूले पुटपाकजमृगशृङ्गभस्म
शरावसम्पुटे दग्धं शृङ्गं हरिणजं पिबेत्
गव्येन सर्पिषा युक्तं हृच्छूलं नाशयेद् ध्रुवम् ४२

इति श्रीशार्ङ्गधरसंहितायां मध्यखराडे स्वरसादिकल्पना नाम प्रथमोऽध्यायः

अथ क्वाथकल्पनानामद्वितीयोऽध्यायः

क्वाथकल्पना
पानीयं षोडशगुणं क्षुराणे द्रव्यपले क्षिपेत्
मृत्पात्रे क्वाथयेद् ग्राह्यमष्टमांशावशेषितम्
तज्जलं पाययेद्धीमान्कोष्णं मृद्वग्निसाधितम् १

क्वाथपर्यायनामानि
शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते २

क्वाथपानसमयः
श्राहाररसपाके च सञ्जाते द्विपलोन्मितम्
वृद्धवैद्योपदेशेन पिबेत्क्वाथं सुपाचितम् ३

क्वाथे सितामधुनोः प्रक्षेपपरिमाणम्
क्वाथे क्षिपेत्सितामंशैश्चतुर्थाष्टमषोडशैः
वातपित्तकफातंके विपरीतं मधु स्मृतम् ४

चूर्णद्रव्याणां प्रक्षेपपरिमाणम्
जीरकं गुग्गुलं क्षारं लवणं च शिलाजतु
हिङ्गु त्रिकटुकं चैव क्थाथे शाणोन्मितं क्षिपेत् ५

द्रवद्रव्याणां प्रक्षेपपरिमाणम्
क्षीरं घृतं गुडं तैलं मूत्रं चान्यद् द्रवं तथा
कल्कं चूर्णादिकं क्वाथे निक्षिपेत्कर्षसम्मितम् ६

पाकसमये क्वाथपात्रपिधाननिषेधः
सपिधानमुखे पात्रे जलं दुर्जरतां व्रजेत्
तस्मादावरणं त्यक्त्वा क्वाथादीनां विनिश्चयः ७

सर्वज्वरे दाहादौ च गुडूच्यादिक्वाथः
गुडूचीधान्यकारिष्टरक्तचन्दनपद्मकैः
गुडूच्यादिगणक्वाथः सर्वज्वरहरः स्मृतः
दीपनो दाहहृल्लासतृष्णाच्छर्द्यरुचीर्जयेत् ८

सर्वज्वरे नागरादिपाचनक्वाथः
नागरं देवकाष्ठं च धान्यकं बृहतीद्वयम्
दद्यात्पाचनकं पूर्वं ज्वरितानां ज्वरापहम् ९

सर्वज्वरे क्षुद्रादिक्वाथः
क्षुद्रा किराततिक्तं च शुण्ठी छिन्ना च पौष्करम्
कषाय एषां शमयेत्पीतश्चाष्टविधं ज्वरम् १०

वातज्वरे क्वाथः
गुडूच्यादि क्वाथः
गुडूचीपिप्पलीमूलनागरैः पाचनं स्मृतम्
दद्याद्वातज्वरे पूर्णलिङ्गे सप्तमवासरे ११

शालपर्ण्यादिक्वाथः

शालपर्णी बला द्राक्षा गुडूची सारिवा तथा
आसां क्वाथं पिबेत्कोष्णं तीव्रवातज्वरच्छिदम् १२

काश्मर्यादिक्वाथः
काश्मरीसारिवाद्राक्षात्रायमाणाऽमृताभवः
कषायः सगुडः पीतोवातज्वरविनाशनः १३

पित्तज्वरे क्वाथाः
कट्फलादिपाचनक्वाथः
कट्फलेन्द्रयवापाठातिक्तामुस्तैः शृतं जलम्
पाचनं दशमेऽह्नि स्यात्तीव्रे पित्तज्वरे नृणाम् १४

पर्पटादिक्वाथः
पर्पटो वासकस्तिक्ता कैरातो धन्वयासकः १५

प्रियङ्गुश्च कृतः क्वाथ एषां शर्करया युतः
पिपासादाहपित्तास्रयुतं पित्तज्वरं जयेत् १६

द्राक्षादिक्वाथः
द्राक्षा हरीतकी मुस्तं कटुकी कृतमालकः
पर्पटश्च कृतः क्वाथ एषां पित्तज्वरापहः
तृण्मूर्च्छादाहपित्तासृक्शमनो भेदनः स्मृतः १७

पर्पटक्वाथप्रशंसौ तत्र विशेषश्च
एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः
किं पुनर्यदि युज्येत चन्दनोशीरबालकैः १८

अथ कफज्वरे क्वाथाः
तत्र बीजपूरकादिपाचनक्वाथः
बीजपूरशिफापथ्यानागरग्रन्थिकैः शृतम्
सक्षारं पाचनं श्लेष्मज्वरे द्वादशवासरे १९

भूनिम्बादिक्वाथः
भूनिम्बनिम्बपिप्पल्यः शटी शुण्ठी शतावरी
गुडूची बृहती चेति क्वाथो हन्यात्कफज्वरम् २०

पटोलादिक्वाथः
पटोलत्रिफलातिक्ताशटीवासाऽमृताभवः
क्वाथो मधुयुतः पीतो हन्यात्कफकृतं ज्वरम् २१

अथ द्वन्द्वजज्वरे क्वाथाः
तत्र वातपित्तज्वरे पञ्चभद्रक्वाथः
पर्पटाब्दामृताविश्वकैरातैः साधितं जलम्
पञ्चभद्रमिदं ज्ञेयं वातपित्तज्वरापहम् २२

कफवातज्वरादौ लघुक्षुद्रादिक्वाथः
क्षुद्राशुण्ठीगुडूचीनां कषायः पौष्करस्य च २३

कफवाताधिके पेयो ज्वरे वाऽपि त्रिदोषजे
कासश्वासारुचिकरे पार्श्वशूलविधायिनि २४

वातकफज्वरे आरग्वधादिक्वाथः
आरग्वधकणामूलमुस्तातिक्ताभयाकृतः
क्वाथः शमयति क्षिप्रं ज्वरं वातकफोद्भवम्
आमशूलप्रशमनो भेदी दीपनपाचनः २५

पित्तश्लेष्मज्वरेऽमृताद्यष्टकक्वाथः
अमृतारिष्टकटुकामुस्तेन्द्रयवनागरैः
पटोलचन्दनाभ्यां च पिप्पलीचूर्णयुक्शृतम् २६

अमृताष्टकमेतच्च पित्तश्लेष्मज्वरापहम्
छर्द्यरोचकहृल्लासदाहतृष्णाविनाशनम् २७

पित्तश्लेष्मज्वरादौ पटोलादिक्वाथः
पटोलं चन्दनं मूर्वातिक्तापाठाऽमृतागणः
पित्तश्लेष्मज्वरच्छर्दिदाहकराडूविषापहः २८

सर्वज्वरे कराटकार्यादिक्वाथः
कराटकारीद्वयं शुराठी धान्यकं सुरदारु च
एभिः शृतं पाचनं स्यात्सर्वज्वरविनाशनम् २९

अथ सन्निपातज्वरे क्वाथाः
तत्र दशमूलक्वाथः
शालिपर्णीपृश्निपर्णीबृहतीद्वयगोन्तुरैः ३०

विल्वाग्निमन्थश्योनाककाश्मरीपाटलायुतैः
दशमूलमिति ख्यातं क्वथितं तज्जलं पिबेत् ३१

पिप्पलीचूर्णसंयुक्तं वातश्लेष्मज्वरापहम्
सन्निपातज्वरहरं सूतिकादोषनाशनम् ३२

हृत्कराठग्रहपार्श्वार्त्तितन्द्रामस्तकशूलहृत् ३३

अभयादिक्वाथः
अभयामुस्तधान्याकरक्तचन्दनपद्मकैः
वासकेन्द्रयवोशीरगुडूचीकृतमालकैः ३४

पाठानागरतिक्ताभिः पिप्पलीचूर्णयुक्शृतम्
पिबेत्त्रिदोषज्वरजित्पिपासाकासदाहनुत् ३५

प्रलापश्वासतन्द्राघ्नं दीपनं पाचनं परम्
विरामूत्रानिलविष्टम्भवमिशोषारुचिच्छिदम् ३६

पिप्पल्यादिक्वाथः

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः
वचासातिविषाऽजाजीपाठावत्सकरेणुकैः ३७

किराततिक्तकं मूर्वा सर्षपा मरिचानि च
कटुकं पुष्करं भार्ङ्गी विडङ्गं कर्कटाह्वयम् ३८

अर्कमूलं बृहत्सिंही श्रेयसी सदुरालभा
दीप्यकं चाजमोदा च शुकनासादिहिङ्गुभिः ३९

एतानि समभागानि गणोऽष्टाविंशको मतः
कषायमुपभुञ्जीत वातश्लेष्मज्वरापहम् ४०

हन्ति वातं तथा शीतं स्वेदजं प्रबलं कफम्
प्रलापं चातिनिद्रां च रोमहर्षारुची तथा ४१

महावातेऽपतन्त्रे च सर्वगात्रे च शून्यताम्
अयं सर्वज्वरान्हन्ति सन्निपातांस्त्रयोदश ४२

अष्टादशाङ्गक्वाथः
किरातकटुकीमुस्ताधान्येन्द्रयवनागरैः
दशमूलमहादारुगजपिप्पलिकायुतैः ४३

कृतः कषायः पार्श्वार्त्तिसन्निपातज्वरं जयेत्
कासश्वासवमीहिक्कातन्द्राहृद्ग्रहनाशनः ४४

कट्फलादिक्वाथः
कट्फलाम्बुदभार्ङ्गीभिर्धान्यरोहिषपर्पटैः
वचा हरीतकीशृङ्गीदेवदारुमहौषधैः
हिक्काकासं ज्वरं हन्ति श्वासश्लेष्मगलग्रहान् ४५

जीर्णज्वरे गुडूचीक्वाथः पित्तज्वरे पर्पटक्वाथश्च

क्वाथो जीर्णज्वरं हन्ति गुडूच्याः पिप्पलीयुतः ४६

तथा पर्पटजः क्वाथः पित्तज्वरहरः परः
किं पुनर्यदि युज्येत चन्दनोदीच्यनागरैः ४७

जीर्णज्वरे निदिग्धिकादिक्वाथः
निदिग्धिकाऽमृताशुण्ठीकषायं पाययेद्भिषक्
पिप्पलीचूर्णसंयुक्तं श्वासकासार्दितापहम्
पीनसारुचिवैस्वर्यशूलाजीर्णज्वरच्छिदम् ४८

प्रसूतिदोषे देवदार्वादिक्वाथः
देवदारु वचा कुष्ठं पिप्पली विश्वभेषजम् ४९

कट्फलंमुस्तभूनिम्बतिक्तधान्या हरीतकी
गजकृष्णा च दुःस्पर्शा गोक्षुरुर्धन्वयासकम् ५०

बृहत्यतिविषा छिन्ना कर्कटं कृष्णजीरकम्
क्वाथमष्टावशेषं तु प्रसूतां पाययेत्स्त्रियम्
शूलकासज्वरश्वासमूर्च्छाकम्पशिरोर्त्तिजित् ५१

अथ विषमज्वरे क्वाथाः
तत्र शीतपूर्वविषमज्वरे बृहत्क्षुद्रादिक्वाथः
क्षुद्राधान्यकशुण्ठीभिर्गुडूचीमुस्तपद्मकैः
रक्तचन्दनभूनिम्बपटोलवृषपौष्करैः ५२

कटुकेन्द्रायवारिष्टभार्ङ्गीपर्पटकैः समैः
क्वाथं प्रातर्निषेवेत सर्वशीतज्वरच्छिदम् ५३

विषमज्वरे मुस्तादिक्वाथः
मुस्ताक्षुद्रामृताशुण्ठीधात्रीक्वाथः समाक्षिकः
पिप्पलीचूर्णसंयुक्तो विषमज्वरनाशनः ५४

सन्ततादिज्वरे पटोलादिक्वाथः
पटोलेन्द्रयवादारुत्रिफलामुस्तगोस्तनैः
मधुकामृतवासानां क्वाथं क्षौद्रयुतं पिबेत् ५५

सन्तते सतते चैव द्वितीयकतृतीयके
एकाहिके वा विषमे दाहपूर्वे नवज्वरे ५६

एकाहिकज्वरे पटोलादिक्वाथः
पटोलत्रिफलानिम्बद्राक्षाशम्याकवासकैः
क्वाथः सितामधुयुतो जयेदैकाहिकं ज्वरम् ५७

तृतीयकज्वरे गुडूच्यादिक्वाथः
गुडूचीधान्यमुस्ताभिश्चन्दनोशीरनागरैः ५८

कृतं क्वाथं पिबेत्क्षौद्रसितायुक्तं ज्वरातुरः
तृतीयज्वरनाशाय तृष्णादाहनिवारणम् ५९

चातुर्थिकज्वरे देवदार्वादिक्वाथः
देवदारुशिवावासाशालिपर्णीमहौषधैः
चातुर्थिकज्वरे श्वासे कासे मन्दानले तथा
धात्रीयुतं शृतं शीतं दद्यान्मधुसितायुतम् ६०

ज्वरातीसारे गुडूच्यादिक्वाथः
गुडूचीधान्यकोशीरशुण्ठीबालकपर्पटैः
बिल्वप्रतिविषापाठारक्तचन्दनवत्सकैः ६१

किरातमुस्तेन्द्रयवः क्वथितं शिशिरं पिबेत्
सक्षौद्रंरक्तपित्तघ्नं ज्वरातीसारनाशनम् ६२

नागरादिक्वाथः
नागरं कुटजो मुस्तं भूनिम्बातिविषाऽमृताः

एभिः कृतं पिबेत्क्वाथं ज्वरातीसारनाशनम् ६३

आमशूले धान्यपञ्चकक्वाथः
धान्यबालक बिल्वाब्दनागरैः साधितं जलम्
आमशूलहरं ग्राहि दीपनं पाचनं परम् ६४

आमवाते धान्यनागरजक्वाथः
धान्यनागरजः क्वाथः पाचनो दीपनस्तथा
एरण्डमूलयुक्तश्च जयेदामानिलव्यथाम् ६५

सामरक्तातीसारे वत्सकादिक्वाथः
वत्सकातिविषाबिल्वमुस्तबालकजः शृतः
अतीसारं जयेत्सामं चिरजं रक्तशूलजित् ६६

सर्वातीसारे कुटजाष्टकक्वाथः
कुटजातिविषापाठाधातकीलोध्रमुस्तकैः
ह्रीबेरदाडिमयुतैः कृतः क्वाथः समाक्षिकः ६७

पेयो मोचरसेनैव कुटजाष्टकसंज्ञकः
अतीसाराञ्जयेद्दाहरक्तशूलामदुस्तरान् ६८

चिरजातीसारे ह्रीबेरादिक्वाथः
ह्रीबेरधातकीलोध्रपाठालज्जालुवत्सकैः
धान्यकातिविषामुस्तागुडूचीबिल्वनागरैः ६९

कृतः कषायः शमयेदतीसारं चिरोत्थितम्
अरोचकामशूलास्त्रज्वरघ्नः पाचनः स्मृतः ७०

बालातिसारे धातक्यादिक्वाथः
धातकी बिल्वरोध्राणि बालकं गजपिप्पली
एभिः कृतं शृतं शीतं शिशुभ्यः क्षौद्रसंयुतम्

प्रदद्यादवलेहं वा सर्वातीसारशान्तये ७१

वातजग्रहरायां शालिपरार्यादिक्वाथः
शालिपर्णीबलाबिल्वधान्यशुराठीकृतः शृतः
आध्मानशूलसहितां वातजां ग्रहणीं जयेत् ७२

सामग्रहरायां चातुर्भद्रकक्वाथः
गुडूच्यतिविषाशुराठीमुस्तैः क्वाथः कृतो जयेत्
आमानुषक्तां ग्रहणीं ग्राही पाचनदीपनः७३

सर्वातिसारेष्विन्द्रयवादिक्वाथः
यवधान्यपटोलानां क्वाथः सक्षौद्रशर्करः
योज्यः सर्वातिसारेषु बिल्वाम्रास्थिभवस्तथा ७४

कृमिरोगे त्रिफलादिक्वाथः
त्रिफला देवदारुश्च मुस्ता मूषकपर्णिका
शिग्रुरेतैः कृतः क्वाथः पिप्पलीचूर्णसंयुतः ७५

विडङ्गचूर्णयुक्तश्च कृमिघ्नःकृमिरोगहा ७६

कामलादौ फलत्रिकादिक्वाथः
फलत्रिकामृतातिक्तानिम्बकैरातवासकैः
जयेन्मधुयुतः क्वाथः कामलां पाराडुतां तथा ७७

पाराडुशोथादौ पुनर्नवादिक्वाथः
पुनर्नवाऽभयानिम्बदार्वीतिक्तापटोलकैः ७८

गुडूचीनागरयुतैः क्वाथो गोमूत्रसंयुतः
पाराडुकासोदरश्वासशूलसर्वाङ्गशोथहा ७९

रक्तपित्तादौ वासादिक्वाथः

वासाद्राच्चाऽभयाक्वाथः पीतः सच्चौद्रशर्करः
निहन्ति रक्तपित्तार्त्तिश्वासकासान्सुदारुणान् ८०

रक्तपित्तादौ वासकक्वाथः
रक्तपित्तच्चयं कासं श्लेष्मपित्तज्वरं तथा
केवलो वासकक्वाथः पीतः च्चौद्रेण नाशयेत् ८१

कासे क्वाथद्वयम्
वासाच्चुद्राऽमृताक्वाथः च्चौद्रेण ज्वरकासहा
कासघ्नःपिप्पलीचूर्णयुक्तः च्चुद्राशृतस्तथा ८२

श्वासकासयोः च्चुद्रादिक्वाथः
च्चुद्राकुलत्थवासाभिर्नागरेण च साधितः
क्वाथः पुष्करचूर्णाढ्य श्वासकासौ निवारयेत् ८३

रेणुकादिक्वाथः
रेणुकापिप्पलीक्वाथो हिङ्गुकल्केन संयुतः
पानादेव हि पञ्चापि हिक्कां नाशयति च्चणात् ८४

छर्द्यां क्वाथत्रयम्
बिल्वत्वचोगुडूच्या वा क्वाथः च्चौद्रेण संयुतः
जयेत्त्रिदोषजां छर्दिं पर्पटः पित्तजां तथा ८५

गृध्रस्यां क्वाथद्वयम्
हिङ्गुपुष्करचूर्णाढ्यं दशमूलशृतं जयेत्
गृध्रसीं केवलः क्वाथः शेफालीपत्रजस्तथा ८६

सप्तधातुगतवाते रास्नापञ्चकक्वाथः
रास्नाऽमृतामहादारुनागरैररगडजैः शृतम्
सप्तधातुगते वाते सामे सर्वाङ्गजे पिबेत् ८७

जङ्घावातादौ रास्नासप्तकक्वाथः
रास्नागोक्षुरकैरण्डदेवदारुपुनर्नवा
गुडूच्यारग्वधश्चैव क्वाथमेषां विपाचयेत् ८८

शुण्ठीचूर्णेन संयुक्तं पिबेज्जङ्घाकटीग्रहे
पार्श्वपृष्ठोरुपीडायामामवाते सुदुस्तरे ८९

सर्ववातरोगे महारास्नादिक्वाथः
रास्ना द्विगुणभागा स्यादेकभागास्ततः परे
धन्वयासबलैरण्डदेवदारुशटीवचाः ९०

वासको नागरं पथ्या चव्या मुस्ता पुनर्नवा
गुडूची वृद्धदारुश्च शतपुष्पा च गोक्षुरः ९१

अश्वगन्धा प्रतिविषा कृतमालः शतावरी
कृष्णा सहचरश्चैव धान्यकं बृहतीद्वयम् ९२

एभिः कृतं पिबेत्क्वाथं शुण्ठीचूर्णेन संयुतम्
कृष्णाचूर्णेन वा योगराजगुग्गुलुनाऽथवा ९३

अजमोदादिना वाऽपि तैलेनैरण्डजेन वा
सर्वाङ्गकम्पे कुब्जत्वे पक्षाघातेऽवबाहुके ९४

गृध्रस्यामामवाते च श्लीपदे चापतानके
अन्त्रवृद्धौ तथाऽध्माने जङ्घाजानुगतेऽदिते ९५

शुक्रामये मेढ्ररोगे वन्ध्यायोन्यामयेषु च
महारास्नादिराख्यातो ब्रह्मणा गर्भकारणम् ९६

स्तनादिगतवाते एरण्डसप्तकक्वाथः
एरण्डो बीजपूरश्च गोक्षुरो बृहतीद्वयम्

अश्मभेदस्तथा बिल्व एतन्मूलैः कृतः शृतः ९७

एरण्डतैलहिङ्ग्वाढ्यः सयवक्षारसैन्धवः
स्तनस्कन्धकटी मेढ्रहृदयोत्थां व्यथां जयेत् ९८

वातशूले नागरादीन्द्रयवयोः क्वाथौ
नागरैरण्डजः क्वाथः क्वाथ इन्द्रयवस्य च
हिंगुसौवर्चलोपेतो वातशूलनिवारणः ९९

पित्तशूले त्रिफलादिक्वाथः
त्रिफलाऽरग्वधक्वाथः शर्कराक्षौद्रसंयुतः
रक्तपित्तहरो दाहपित्तशूलनिवारणः १००

कफशूले एरण्डक्वाथः
एरण्डमूलं द्विपलं जलेऽष्टगुणिते पचेत्
तत्क्वाथो यावशूकाढ्यः पार्श्वहृत्कफशूलहा १०१

हृद्रोगादौ दशमूलक्वाथः
दशमूलकृतः क्वाथः सयवक्षारसैन्धवः
हृद्रोगगुल्मशूलानि कासं श्वासं च नाशयेत् १०२

मूत्रकृच्छ्रादौ हरीतक्यादिक्वाथः
हरीतकीदुरालम्भाकृतमालकगोक्षुरैः
पाषाणभेदसहितैः क्वाथो माक्षिकसंयुतः
विबन्धे मूत्रकृच्छ्रे च सदाहे सरुजे हितः १०३

अश्मरीरोगादौ वीरतर्वादिगणक्वाथः
वीरतरुर्वृक्षवन्दा काशः सहचरत्रयम्
कुशद्वयं नलो गुन्द्रा बकपुष्पोऽग्निमन्थकः १०४

मूर्वा पाषाणभेदश्च स्योनाको गोक्षुरस्तथा

अपामार्गश्च कमलं ब्राह्मी चेति गणो वरः १०५

वीरतर्वादिरित्युक्तः शर्कराऽश्मरिकृच्छ्रहा
मूत्राघातं वायुरोगान्नाशयेन्निखिलानपि १०६

शर्कराऽश्मर्यादौ एलादिक्वाथः
एलामधुकगोकण्टरेणुकैरण्डवासकाः १०७

कृष्णाऽश्मभेदसहिताः क्वाथ एषां सुसाधितः
शिलाजतुयुतः पेयः शर्कराऽश्मरिकृच्छ्रहा १०८

मूत्रकृच्छ्रादौ गोक्षुरक्वाथः
समूलगोक्षुरक्वाथः सितामाक्षिकसंयुतः
नाशयेन्मूत्रकृच्छ्राणि तथा चोष्णसमीरणम् १०९

अथ प्रमेहे क्वाथाः
वरादिः वत्सकादिक्वाथौ
वरादार्व्यब्ददारूणां क्वाथः क्षौद्रेण मेहहा
वत्सकत्रिफलादार्वीमुस्तको बीजकस्तथा ११०

फलत्रिकादिक्वाथः
फलत्रिकाब्ददार्वीणां विशालायाः शृतं पिबेत्
निशाकल्कयुतं सर्वप्रमेहविनिवृत्तये १११

प्रदरे दार्व्यादिक्वाथः
दार्वी रसाञ्जनं मुस्तं भल्लातः श्रीफलं वृषः
कैरातश्च पिबेदेषां क्वाथं शीतं समाक्षिकम्
जयेत्सशूलं प्रदरं पीतश्वेतासितारुणम् ११२

योनिरोगव्रणादौ न्यग्रोधादिक्वाथः
न्यग्रोधप्लक्षकोशाम्रवेतसा बदरी तुणिः

मधुयष्टी प्रियालश्च लोध्रद्वयमुदुम्बरः ११३

पिप्पलश्च मधूकश्च तथा पारिसपिप्पलः
शल्लकी तिन्दुकी जम्बूद्वयमाम्रतरुः शिवा ११४

कदम्बककुभौ चैव भल्लातकफलानि च
न्यग्रोधादिगणक्वाथं यथालाभं च कारयेत् ११५

अयं क्वाथो महाग्राही व्रणयो भग्नं च साधयेत्
योनिदोषहरो दाहमेदोमेहविषापहः ११६

अथ मेदोदोषे योगत्रयम्
बिल्वोऽग्निमन्थः स्योनाकः काश्मरी पाटला तथा
क्वाथ एषां जयेन्मेदोदोषं क्षौद्रेण संयुतः ११७

क्षौद्रेण त्रिफलाक्वाथः पीतो मेदोहरः स्मृतः
शीतीभूतं तथोष्णाम्बु मेदोहृत्क्षौद्रसंयुतम् ११८

उदररोगे चव्यादिक्वाथः
चव्यचित्रकविश्वानां साधितो देवदारुणा
क्वाथस्त्रिवृच्चूर्णयुतो गोमूत्रेणोदराञ्जयेत् ११९

शोथोदरे पुनर्नवाऽदिक्वाथः
पुनर्नवाऽमृतादारुपथ्यानागरसाधितः
गोमूत्रगुग्गुलुयुतः क्वाथः शोथोदरापहः १२०

यकृत्प्लीहगुल्मोदरे पथ्याऽदिक्वाथः
पथ्यारोहितकक्वाथं यवक्षारकणायुतम्
पिबेत्प्रातर्यकृत्प्लीहगुल्मोदरनिवृत्तये १२१

शोथे पुनर्नवादिक्वाथः

पुनर्नवा दारुनिशा निशा शुराठी हरीतकी १२२

गुडूची चित्रको भार्ङ्गी देवदारु च तैः शृतः
पाणिपादोदरमुखप्राप्तं शोफं निवारयेत् १२३

वृषणशोथे फलत्रिकक्वाथः
फलत्रिकोद्भवं क्वाथं गोमूत्रेणैव पाययेत्
वातश्लेष्मकृतं हन्ति शोथं वृषणसम्भवम् १२४

अन्त्रवृद्धौ रास्नादिक्वाथः
रास्नाऽमृताबलायष्टीगोकराटैरराडजः शृतः
एरराडतैलसंयुक्तो वृद्धिमन्त्रभवां जयेत् १२५

गराडामालायां काञ्चनारत्वक्क्वाथः
काञ्चनारत्वचः क्वाथः शुराठीचूर्णेन नाशयेत्
गराडमालां तथा क्वाथः क्षौद्रेण वरुणत्वचः १२६

श्लीपदमेदोरोगयोः शाखोटकत्वक्क्वाथः
शाखोटवल्कलक्वाथं गोमूत्रेण युतं पिबेत्
श्लीपदानां विनाशाय मेदोदोषनिवृत्तये १२७

अन्तर्विद्रधौ क्वाथद्वयम्
पुनर्नवावरुणयोः क्वाथोऽन्तर्विद्रधीञ्जयेत्
तथा शिग्रुभवः क्वाथो हिङ्गुसैन्धवसंयुतः १२८

अपक्वान्तर्विद्रधौ वरुणादिगणक्वाथः
वरुणादिगणक्वाथमपक्वे मध्यविद्रधौ
ऊषकादिरजोयुक्तं पिबेच्छमनहेतवे १२९

वरुणादिगणः
वरुणो बकपुष्पश्च बिल्वापामार्गचित्रकाः

अग्निमन्थद्वयं शिग्रुद्वयं च बृहतीद्वयम् १३०

सैरेयकत्रयं मूर्वा मेषशृङ्गी किरातकः
अजशृङ्गी च बिम्बी च करञ्जश्च शतावरी १३१

वरुणादिगणक्वाथः कफमेदोहरः स्मृतः
हन्ति गुल्मं शिरः शूलन्तथाभ्यन्तरविद्रधीन् १३२

भगन्दरे खदिरादिक्वाथः
खदिरत्रिफलाक्वाथो महिषीघृतसंयुतः
विडङ्गचूर्णयुक्तश्च भगन्दरविनाशनः १३३

उपदंशे पटोलादिक्वाथः
पटोलत्रिफलानिम्बकिरातखदिरासनैः
क्वाथः पीतो जयेत्सर्वानुपदंशान्सगुग्गुलुः १३४

वातरक्तेऽमृतादिक्वाथः
अमृतैरराडवासानां क्वाथ एरराडतैलयुक्
पीतः सर्वाङ्गसञ्चारिवातरक्तं जयेद् ध्रुवम् १३५

वातरक्ते पटोलादिक्वाथः
पटोलं त्रिफला तिक्ता गुडूची च शतावरी
एतत्क्वाथो जयेत्पीतो वातास्रं दाहसंयुतम् १३६

श्वेतकुष्ठेऽवल्गुजचूर्णयुग्धात्र्यादिक्वाथः
क्वाथोऽवल्गुजचूर्णाढ्यो धात्रीखदिरसारयोः
जयेत्सुशीलितो नित्यं श्वित्रं पथ्याशिनां नृणाम् १३७

वातरक्तकुष्ठादौ लघुमञ्जिष्ठाऽदिक्वाथः
मञ्जिष्ठा त्रिफला तिक्ता वचा दारुनिशाऽमृता
निम्बश्चैषां कृतः क्वाथो वातरक्तविनाशनः

पामाकपालिकाकुष्ठरक्तमरडलजिन्मतः १३८

सर्वकुष्ठे बृहन्मञ्जिष्ठादिक्वाथः
मञ्जिष्ठामुस्तकुटजगुडूचीकुष्ठनागरैः
भार्ङ्गीचुद्रावचानिम्बनिशाद्वयफलत्रिकैः १३९

पटोलकटुकीमूर्वाविडङ्गासनचित्रकैः
शतावरीत्रायमाणाकृष्णेन्द्रयववासकैः १४०

भृङ्गराजमहादारुपाठाखदिरचन्दनैः
त्रिवृद्वरुणकैरातवाकुचीकृतमालकैः १४१

शाखोटकमहानिम्बकरञ्जातिविषाजलैः
इन्द्रवारुणिकानन्तासारिवापर्पटैः समैः १४२

एभिः कृतं पिबेत्क्वाथं कणागुग्गुलुसंयुतम्
अष्टादशसु कुष्ठेषु वातरक्तार्दिते तथा १४३

उपदंशे श्लीपदे च प्रसुप्तौ पचघातके
मेदोदोषे नेत्ररोगे मञ्जिष्ठादिः प्रशस्यते १४४

शिरोरोगे नेत्ररोगादौ च पथ्यादिषडङ्गक्वाथः
पथ्याऽचधात्रीभूनिम्बनिशानिम्बामृतायुतैः १४५

कृतः क्वाथः षडङ्गोऽय सगुडः शीर्षशूलहृत्
भ्रूशङ्खकर्णशूलानि तथाऽधशिरसो रुजम् १४६

सूर्यावर्त्तं शङ्खकं च दन्तपातं च तद्रुजम्
नक्तान्ध्यं पटलं शुक्रं चचुःपीडां व्यपोहति १४७

नेत्ररोगे वासादिक्वाथः

वासाविश्वामृतादार्वीरक्तचन्दनचित्रकैः
भूनिम्बनिम्बकटुकापटोलत्रिफलाऽम्बुदैः १४८

यवकालिङ्गकुटजैः क्वाथः सर्वाक्षिरोगहा
वैस्वर्यं पीनसं श्वासं नाशयेदुरसः क्षतम् १४६

नेत्ररोगेऽमृतादिक्वाथः
अमृतात्रिफलाक्वाथः पिप्पलीचूर्णसंयुतः
सक्षौद्रः शीलितो नित्यं सर्वनेत्रव्यथां जयेत् १५०

व्रणक्षालनादौ पञ्चवल्कलक्वाथः
अश्वत्थोदुम्बरप्लक्षवटवेतसजं शृतम्
व्रणशोथोपदंशानां नाशनं क्षालनात्स्मृतम् १५१

अथ प्रमथ्याऽदिकषायभेदानाह
तत्र प्रमथ्यापरिभाषा
प्रमथ्या प्रोच्यते द्रव्यपलात्कल्कीकृताच्छृतात्
तोयेऽष्टगुणिते यस्याः पानमाहुः पलद्वयम् १५२

रक्तातिसारे मुस्तकादिप्रमथ्या
मुस्तकेन्द्रयवैः सिद्धा प्रमथ्या द्विपलोन्मिता
सुशीता मधुसंयुक्ता रक्तातीसारनाशिनी १५३

यवागूपरिभाषा
साध्यं चतुष्पलं द्रव्यं चतुःषष्टिपले जले
तत्क्वाथेनार्धशिष्टेन यवागूं साधयेद्घनाम् १५४

ग्रहरयामाम्रादियवागूः
आम्राम्रातकजम्बूत्वक्कषाये विपचेद् बुधः
यवागूं शालिभिर्युक्तां तां भुक्त्वा ग्रहणीं जयेत् १५५

यूषपरिभाषा
कल्कद्रव्यपलं शुराठी पिप्पली चार्धकार्षिकी
वारिप्रस्थेन विपचेत्स द्रवो यूष उच्यते १५६

सन्निपातादौ सप्तमुष्टिकयूषः
कुलत्थयवकोलैश्च मुद्गैर्मूलकग्रन्थिकैः
शुराठीधान्याकयुक्तैश्च यूषः श्लेष्मानिलापहः १५७

सप्तमुष्टिक इत्येष सन्निपातज्वरं जयेत्
ग्रामवातहरः करठहृद्वक्त्राणां विशोधनः १५८

पानादिकल्पना
चुरणं द्रव्यपलं साध्यं चतुःषष्टिपले जले
ग्रर्द्धशिष्टं च तद्देयं पाने भक्तादिसंविधौ १५९

पिपासाज्वरघ्नषडङ्गपानम्
उशीरपर्पटोदीच्यमुस्तनागरचन्दनैः
जलं शृतं हिमं पेयं पिपासाज्वरनाशनम् १६०

उष्णोदकविधिः
ग्रष्टमेनांशशेषेण चतुर्थेनार्धकेन वा
ग्रथवा क्वथनेनैव सिद्धमुष्णोदकं वदेत् १६१

उष्णोदकसमयः
श्लेष्मामवातमेदोघ्नं बस्तिशोधनदीपनम्
कासश्वासज्वरहरं पीतमुष्णोदकं निशि १६२

क्षीरपाकविधिः
क्षीरमष्टगुणं द्रव्यात्क्षीरान्नीरं चतुर्गुणम्
क्षीरावशेषं तत्पीतं शूलमामोद्भवं जयेत् १६३

पञ्चमूलीश‍ृतपयः
सिर्वज्वराणां जीर्णानां त्तीरं भैषज्यमुत्तमम्
श्वासात्कासाच्छिरः शूलात्पार्श्वशूलात्सपीनसात्
मुच्यते ज्वरितः पीत्वा पञ्चमूलीश‍ृतं पयः १६४

त्रिकराटकादिश‍ृतपयः
त्रिकराटकबलाव्याघ्रीगुडनागरसाधितम्
वर्चोमूत्रविबन्धघ्नं कफज्वरहरं पयः १६५

अन्नप्रक्रिया तत्र यवागूकृशरासाधनविधिः
अथान्नप्रक्रियाऽत्रैव प्रोच्यते नातिविस्तरा
यवागूः षड्गुणजले सिद्धा स्यात्कृशरा घना १६६

तराडुलैर्मुद्गमाषैश्च तिलैर्वा साधिता हिता
यवागूर्ग्राहिणीबल्या तर्पणी वातनाशिनी १६७

विलेपीसाधनविधिः
विलेपी घनसिक्था स्यात्सिद्धा नीरे चतुर्गुणे
बृंहणी तर्पणी हृद्या मधुरा पित्तनाशिनी १६८

पेयायूषसाधनविधिः
द्रवाधिका स्वल्पसिक्था चतुर्दशगुणे जले
सिद्धा पेया बुधैर्ज्ञेया यूषः किञ्चिद् घनः स्मृतः १६९

पेयायूषयोर्गुणाः
पेया लघुतराज्ञेया ग्राहिणी धातुपुष्टिदा
यूषो बल्यस्ततः कराठ्यो लघुपाकः कफापहः १७०

भक्तसाधनविधिः
जले चतुर्दशगुणे तराडुलानां चतुष्पलम्
विपचेत्स्त्रावयेन्मराडं स भक्तो मधुरो लघुः १७१

मराडसाधनविधिः
नीरे चतुर्दशगुणे सिद्धो मराडस्त्वसिक्थकः
शुराठीसैन्धवसंयुक्तः पाचनो दीपनः परः १७२

अष्टगुणमराडः
धान्यत्रिकटुसिन्धूत्थमुद्गतराडुलयोजितः
भृष्टश्च हिङ्गुतैलाभ्यां स मराडोऽष्टगुणः स्मृतः १७३

दीपनः प्राणदो बस्तिशोधनो रक्तवर्धनः
ज्वरजित्सर्वदोषघ्नो मराडोऽष्टगुण उच्यते १७४

वाटयमराडः
सुकरिडतैस्तथा भृष्टैर्वाटयमराडो यवैर्भवेत्
कफपित्तहरः कराठयो रक्तपित्तप्रसादनः १७५

लाजमराडः
लाजैर्वा तराडुलैर्भृष्टैर्लाजमराडः प्रकीर्त्तितः
श्लेष्मपित्तहरो ग्राही पिपासाज्वरजिन्मतः १७६

इति श्रीशार्ङ्गधरसंहितायां मध्यखराडे क्वाथकल्पना नामद्वितीयोऽध्यायः

अथ फाराटादिकल्पना नाम तृतीयोऽध्यायः

फाराटकल्पना
क्षुराणे द्रव्यपले सम्यग्जलमुष्णं विनिक्षिपेत्
मृत्पात्रे कुडवोन्मानं ततस्तु स्रावयेत्पटात् १

स स्याच्चूर्णद्रवः फाराटस्तन्मानं द्विपलोन्मितम्
सितामधुगुडादींश्च क्वाथवत्तत्र निक्षिपेत् २

वातपित्तज्वरादौ बृहन्मधूकपुष्पादिफाराटः
मधूकपुष्पं मधुकं चन्दनं सपरूषकम्

मृणालं कमलं लोध्रं गम्भारीं नागकेशरम् ३

त्रिफलां सारिवां द्राक्षां लाजान्कोष्णजले क्षिपेत्
सितामधुयुतः पेयः फाराटो वाऽसौ हिमोऽथवा ४

वातपित्तज्वरं दाहं तृष्णामूर्च्छाऽरतिभ्रमान्
रक्तपित्तं मदं हन्यान्नात्र कार्या विचारणा ५

ज्वरादावाम्रादिफाराटः
स्राम्रजम्बूकिसलयैर्वटशुङ्गप्ररोहकैः
उशीरेण कृतः फाराटः सक्षौद्रो ज्वरनाशनः
पिपासाच्छर्द्यतीसारान्मूर्च्छां जयति दुस्तराम् ६

दाहपित्तादौ लघुमधूकपुष्पादिफाराटः
मधूकपुष्पगम्भारीचन्दनोशीरधान्यकैः ७

द्राक्षया च कृतः फाराटः शीतः शर्करया युतः
तृष्णापित्तहरः प्रोक्तो दाहमूर्च्छाभ्रमाञ्जयेत् ८

मन्थविधिः
मन्थोऽपि फाराटभेदः स्यात्तेन चात्रैव कथ्यते
जले चतुष्पले शीते क्षुराणं द्रव्यपलं क्षिपेत्
मृत्पात्रे मन्थयेत्सम्यक्तस्माच्च द्विपलं पिबेत् ९

मदात्ययादौ खर्जूरादिमन्थः
खर्जूरदाडिमीद्राक्षातिन्तिडीकाम्लिकामलैः
सपरूषैः कृतो मन्थः सर्वमद्यविकारनुत् १०

छर्द्यां मसूरादिमन्थः
क्षौद्रयुक्ता मसूराणां सक्तवो दाडिमाम्भसा
मथिता वारयन्त्याशु छर्दिं दोषत्रयोद्भवाम् ११

तृष्णादाहादौ यवसक्तुमन्थः
प्लावितैः शीतनीरेण सघृतैर्यवसक्तुभिः
नातिसान्द्रद्रवो मन्थस्तृष्णादाहास्रपित्तहा १२
इति श्रीशार्ङ्गधरसंहितायां मध्यखण्डे फाण्टादिकल्पना नाम
तृतीयोऽध्यायः

अथ हिमकल्पना नाम चतुर्थोऽध्यायः

हिमकल्पना
क्षुण्णं द्रव्यपलं सम्यक्षड्भिर्नीरपलैः प्लुतम्
निशोषितं हिमः स स्यात्तथा शीतकषायकः
तन्मानं फाण्टवज्ज्ञेयं सर्वत्रैवैष निश्चयः १

रक्तपित्ते आम्रादिहिमः
आम्रं जम्बूं च ककुभं चूर्णीकृत्य जले क्षिपेत्
हिमं तस्य पिबेत्प्रातः सक्षौद्रं रक्तपित्तजित् २

तृष्णादौ मरीच्यादिहिमः
मरिचं मधुयष्टी च काकोदुम्बरपल्लवाः
नीलोत्पलं हिमस्तज्ञस्तृष्णाच्छर्दिनिवारणः ३

वातपित्तज्वरादौ नीलोत्पलादिहिमः
नीलोत्पलं बला द्राक्षा मधूकं मधुकं तथा
उशीरं पद्मकं चैव काश्मरी च परूषकम् ४

एष शीतकषायश्च वातपित्तज्वराञ्जयेत्
सप्रलापभ्रमच्छर्दिमोहतृष्णानिवारणः ५

जीर्णज्वरे गुडूचीहिमो रक्तपित्ते वासाहिमश्च
अमृताया हिमः पेयो जीर्णज्वरहरः स्मृतः
वासायाश्च हिमः कासं रक्तपित्तज्वराञ्जयेत् ६

अन्तर्दाहादौ धान्याकहिमः
प्रातः सशर्करः पेयो हिमो धान्याकसम्भवः
अन्तर्दाहं तथा तृष्णां जयेत्स्रोतोविशोधनः ७

रक्तपित्तादौ धान्यकादिहिमः
धान्याकधात्रीवासानां द्राक्षापर्पटयोर्हिमः
रक्तपित्तं ज्वरं दाहं तृष्णां शोषं च नाशयेत् ८

इति श्रीशार्ङ्गधरसंहितायां मध्यखराडे हिमकल्पना नाम चतुर्थोऽध्यायः

अथ कल्ककल्पनानाम पञ्चमोऽध्यायः

कल्ककल्पना
द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत्
प्रक्षेपावापकल्कास्ते तन्मानं कर्षसंमितम् १

कल्के मधु घृतं तैलं देयं द्विगुणमात्रया
सिता गुडं समं दद्याद् द्रवा देयाश्चतुर्गुणाः २

वर्द्धमानपिप्पलीविधिः
त्रिवृद्ध्या पञ्चवृद्ध्या वा सप्तवृद्ध्याऽथवा कणाः
पिबेत्पिष्ट्वा दशदिनं तास्तथैवापकर्षयेत् ३

एवं विंशद्दिनैः सिद्धं पिप्पलीवर्द्धमानकम्
अनेन पाराडुवातास्त्रकासश्वासारुचिज्वराः
उदरार्शः क्षयश्लेष्मवाता नश्यन्त्युरोग्रहाः ४

निम्बकल्को व्रणच्छर्द्यादौ
लेपान्निम्बदलैः कल्को व्रणशोधनरोपणः
भक्षणाच्छर्दिकुष्ठानि पित्तश्लेष्मकृमीञ्जयेत् ५

महानिम्बकल्को गृध्रस्याम्

महानिम्बजटाकल्को गृध्रसीनाशनः स्मृतः ६

रसोनकल्को वातरोगविषमज्वरादिषु
शुद्धः कल्को रसोनस्य तिलतैलेन मिश्रितः
वातरोगाञ्जयेत्तीव्रान्विषमज्वरनाशनः ७

द्वितीयो रसोनकल्को वातव्याधौ
पक्वकन्दरसोनस्य गुलिका निस्तुषीकृता
पाटयित्वा च मध्यस्थं दूरीकुर्यात्तदङ्कुरम् ८

तदुग्रगन्धनाशाय रात्रौ तक्रे विनिक्षिपेत्
अपनीय च तन्मध्याच्छिलायां पेषयेत्ततः ९

तन्मध्ये पञ्चमांशेन चूर्णमेषां विनिक्षिपेत्
सौवर्चलं यवानीं च भर्जितं हिङ्गुसैन्धवम् १०

कटुत्रिकं जीरकं च समभागानि चूर्णयेत्
एकीकृत्य ततः सर्वं कल्कं कर्षप्रमाणतः ११

खादेदग्निबलापेक्षी ऋतुदोषाद्यपेक्षया
अनुपानं ततः कुर्यादेरण्डशृतमन्वहम् १२

सर्वाङ्गैकाङ्गजं वातमर्दितं चापतन्त्रकम्
अपस्मारमथोन्मादमूरुस्तम्भं च गृध्रसीम् १३

उरःपृष्ठकटीपार्श्वकुक्षिपीडां क्रिमीञ्जयेत्
अजीर्णमातपं रोषमतिनीरं पयो गुडम् १४

रसोनमश्नन्पुरुषस्त्यजेदेतन्निरन्तरम्
मद्यं मासं तथाऽम्ल च रसं सेवेत नित्यशः १५

पिप्पल्यादिकल्क ऊरुस्तम्भे
पिप्पली पिप्पलीमूलं भल्लातकफलानि च
एतत्कल्कश्च सक्षौद्र ऊरुस्तम्भनिवारणः १६

विष्णुक्रान्ताकल्कः परिणामशूले
विष्णुक्रान्ताजटाकल्कः सिताक्षौद्रघृतैर्युतः
परिणामभवं शूलं नाशयेत्सप्तभिर्दिनैः १७

शुराठीकल्कः परिणामशूलामवातयोः
शुराठीतिलगुडैः कल्कं दुग्धेन सह योजयेत्
परिणामभवं शूलमामवातं च नाशयेत् १८

अपामार्गकल्को रक्तार्शसि
अपामार्गस्य बीजानां कल्कस्तराडुलवारिणा
पीतो रक्तार्शसां नाशं कुरुते नात्र संशयः १९

बदरीमूलकल्को रक्तातीसारे
बदरीमूलकल्केन तिलकल्कश्च योजितः
मधुक्षारयुतः कुर्याद्रक्तातीसारनाशनम् २०

लाक्षाकल्को रक्तक्षये
कूष्माराडकरसोपेतां लाक्षां कर्षद्वयं पिबेत्
रक्तक्षयमुरोघातं क्षयरोगं च नाशयेत् २१

तराडुलीयकल्को रक्तप्रदरे
तराडुलीयजटाकल्कः सक्षौद्रः सरसाञ्जनः
तराडुलोदकसंपीतो रक्तप्रदरनाशनः २२

अङ्कोलमूलकल्कोऽतिसारविषयोः
अङ्कोलमूलकल्कश्च सक्षौद्रस्तराडुलाम्बुना
अतीसारहरः प्रोक्तस्तथा विषहरः स्मृतः २३

वन्ध्याकर्कोटिकाऽदीनां मूलकल्को विषे
वन्ध्याकर्कोटिकामूलं पाटलाया जटा तथा
घृतेन बिल्वमूलं वा द्विविधं नाशयेद्विषम् २४

अभयादिकल्कः त्रिदोषनाशने पथ्यादिकल्कः पाचनादौ च
अभयासैन्धवकणाशुण्ठीकल्कस्त्रिदोषहा
पथ्यासैन्धवशुण्ठीभिः कल्को दीपनपाचनः २५

त्रिवृदादिकल्कः कृमिरोगे
त्रिवृत्पलाशबीजानि पारसीकयवानिका
कम्पिल्लकं विडङ्गं च गुडश्च समभागकः
तक्रेण कल्कमेतेषां पिबेत्क्रिमिगणापहम् २६

तिलनागकेशरकल्को रक्तार्शसि
नवनीततिलैः कल्को जेता रक्तार्शसां स्मृतः
नवनीतसितानागकेशरैश्चापि तद्विधः २७

शुण्ठ्यादि बृहतीकल्कौ संग्रहण्याम्
पीतो मसूरयूषेण कल्कः शुण्ठीशलाटुजः
जयेत् संग्रहणीं तद्वत्तक्रेण बृहतीभवः २८

इति श्रीशार्ङ्गधरसंहितायां मध्यखण्डे कल्ककल्पनानाम पञ्चमोऽध्यायः

अथ चूर्णकल्पनानाम षष्ठोऽध्यायः

तत्रादौ चूर्णलक्षणम्
अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम्
तत्स्याच्चूर्णंरजः क्षोदस्तन्मात्रा कर्षसंमिता १

चूर्णे गुडादिमानकल्पना
चूर्णे गुडः समो देयः शर्कराद्विगुणा भवेत्
चूर्णेषु भर्जितं हिंगु देयं नोत्क्लेदकृद्भवेत् २

चूर्णानुपानमानव्यवस्था
लिहेच्चूर्णं द्रवैः सर्वैर्घृताद्यैर्द्विगुणोन्मितैः
पिबेच्चतुर्गुणैरेव चूर्णमालोडितं द्रवैः ३

चूर्णादीनां दोषानुसारेणानुपानमानकल्पना
चूर्णावलेहगुटिकाकल्कानामनुपानकम्
वातपित्तकफातङ्के त्रिद्व्येकपलमाहरेत् ४

अनुपानस्यावश्यकता
यथा तैलं जले क्षिप्तं क्षणेनैव प्रसर्पति
अनुपानबलादङ्गे तथा सर्पति भेषजम् ५

चूर्णार्थे भावनापरिमाणनिर्देशः
द्रवेण यावता सम्यक्चूर्णं सर्वं प्लुतं भवेत्
भावनायाः प्रमाणं तु चूर्णे प्रोक्तं भिषग्वरैः ६

आमलक्यादिचूर्णं सर्वज्वरादौ
आमलं चित्रकः पथ्या पिप्पली सैन्धवं तथा
चूर्णितोऽय गणो ज्ञेयः सर्वज्वरविनाशनः
भेदी रुचिकरः श्लेष्मजेता दीपनपाचनः ७

पिप्पलीचूर्णं हिक्काज्वरादिषु
मधुनापिप्पलीचूर्णं लिहेत्कासज्वरापहम्
हिक्काश्वासहरं कराठ्यं प्लीहघ्नं बालकोचितम् ८

त्रिफलाचूर्णं मेहादिषु
एका हरीतकी योज्या द्वौ च योज्यौ बिभीतकौ
चत्वार्यामलकान्येव त्रिफलैषा प्रकीर्त्तिता ९

त्रिफला मेहशोथघ्नी नाशयेद्विषमज्वरान्
दीपनी श्लेष्मपित्तघ्नी कुष्ठहन्त्री रसायनी १०

सर्पिर्मधुभ्यां संयुक्ता सर्वनेत्रामयाञ्जयेत् ११

त्र्यूषणचूर्णं दीपनादौ
पिप्पली मरिचंशुण्ठी त्रिभिस्त्र्यूषणमुच्यते
दीपनं श्लेष्ममेदोघ्नं कुष्ठपीनसनाशनम्
जयेदरोचकं सामं मेहगुल्मगलामयान् १२

पंचकोलचूर्णमरुच्यादौ
पिप्पलीचव्यविश्वाह्वपिप्पलीमूलचित्रकैः १३

पञ्चकोलमिति ख्यातं रुच्यं पाचनदीपनम्
आनाहप्लीहगुल्मघ्नं शूलश्लेष्मोदरापहम् १४

त्रिगन्धचतुर्जातचूर्णयोर्गुणाः
त्रिगन्धमेलात्वक्पत्रैश्चतुर्जातं सकेशरैः
त्रिगन्धं सचतुर्जातं रूक्षोष्णं लघु पित्तकृत्
वर्ण्यं रुचिकरं तीक्ष्णं पित्तश्लेष्मामयाञ्जयेत् १५

कृष्णादिचूर्णं शिशूनां ज्वरातिसारादौ
कृष्णारुणामुस्तकशृङ्गिकाणां तुल्येन चूर्णेन समाक्षिकेण
ज्वरातिसारः प्रशमं प्रयाति सश्वासकासः सवमिः शिशूनाम् १६

जीवनीयगणः
काकोली क्षीरकाकोली जीवकर्षभकौ तथा
मेदा चान्या महामेदा जीवन्ती मधुकं तथा १७

मुद्गपर्णी माषपर्णी जीवनीयो गणस्त्वयम्
जीवनीयो गणः स्वादुर्गर्भसन्धानकृद् गुरुः १८

स्तन्यकृद् बृंहणो वृष्यः स्निग्धः शीतस्तृषाऽपहः
रक्तपित्तं क्षतं शोषं ज्वरदाहानिलाञ्जयेत् १९

अष्टवर्गः
द्वे मेदे द्वे च काकोल्यौ जीवकर्षभकौ तथा २०

ऋद्धिवृद्धी च तैः सर्वैरष्टवर्ग उदाहृतः
अष्टवर्गो बुधैः प्रोक्तो जीवनीयसमो गुणैः २१

लवणपञ्चकचूर्णं सृष्टविण्मूत्रादौ
सिन्धु सौवर्चलं चैव विडं सामुद्रिकं गुडम्
एकद्वित्रिचतुः पञ्चलवणानि क्रमाद्विदुः २२

तेषु मुख्यं सैन्धवं स्यादनुक्ते तत्प्रयोजयेत्
सैन्धवाद्यं रोमकान्तं ज्ञेयं लवणपञ्चकम् २३

मधुरं सृष्टविण्मूत्रं स्निग्धं सूक्ष्मं बलापहम्
वीर्योष्णं दीपनं तीक्ष्णं कफपित्तविवर्द्धनम् २४

क्षारयोगः
स्वर्जिका यावशूकश्च क्षारयुग्ममुदाहृतम्
ज्ञेयौ वह्निसमौ क्षारौ स्वर्जिकायाव शूकजौ २५

क्षाराश्चान्येऽपि गुल्मार्शोग्रहणीरुक्छिदः सराः
पाचनाः कृमिपुंस्त्वघ्नाः शर्कराऽश्मरिनाशनाः २६

सुदर्शनचूर्णं सर्वज्वरादौ
त्रिफला रजनीयुग्मं कण्टकारीयुगं शटी
त्रिकटु ग्रन्थिकं मूर्वा गुडूची धन्वयासकः २७

कटुका पर्पटो मुस्तं त्रायमाणा च बालकम्
निम्बः पुष्करमूलं च मधुयष्टी च वत्सकम् २८

यवानीन्द्रयवो भार्ङ्गीशिग्रुबीजं सुराष्ट्रजा

वचात्वक्पद्मकोशीरचन्दनातिविषाबलाः २९

शालिपर्णी पृश्निपर्णी विडङ्गं तगरं तथा
चित्रको देवकाष्ठं च चव्यं पत्रं पटोलजम् ३०

जीवकर्षभकौ चैव लवङ्गं वंशलोचना
पुण्डरीकं च काकोली पत्रकं जातिपत्रकम् ३१

तालीसपत्रं च तथा समभागानि चूर्णयेत्
सर्वचूर्णस्य चार्द्धांशं कैरातं निक्षिपेत्सुधीः ३२

एतत्सुदर्शनं नाम चूर्णं दोषत्रयापहम्
ज्वरांश्च निखिलान्हन्यान्नात्र कार्या विचारणा ३३

पृथग्द्वन्द्वागन्तुजांश्च धातुस्थान्विषमज्वरान्
सन्निपातोद्भवांश्चापि मानसानपि नाशयेत् ३४

शीतज्वरैकाहिकादीन्मोहं तन्द्रां भ्रमं तृषाम्
श्वासं कासं च पाण्डुं च हृद्रोगं हन्ति कामलाम् ३५

त्रिकपृष्ठकटीजानुपार्श्वशूलनिवारणम्
शीताम्बुना पिबेद्धीमान्सर्वज्वरनिवृत्तये ३६

सुदर्शनं यथा चक्रं दानवानां विनाशनम्
तद्वज्ज्वराणां सर्वेषामिदं चूर्णं प्रणाशनम् ३७

त्रिफलापिप्पलीचूर्णं कासश्वासज्वरेषु
कासश्वासज्वरहरा त्रिफला पिप्पलीयुता
चूर्णिता मधुना लीढा भेदिनी चाग्निबोधिनी ३८

कट्फलादिचूर्णं ज्वरादौ

कट्फलं मुस्तकं तिक्ता शटी शृङ्गी च पौष्करम्
चूर्णमेषां च मधुना शृङ्गवेररसेन वा ३९

लिहेज्ज्वरहरं कराठ्यं कासश्वासारुचीर्जयेत्
वायुं छर्दिं तथा शूलं च्चयं चैव व्यपोहति ४०

बृहत्कट्फलादिचूर्णं शूलानिलादिषु
कट्फलं पौष्करं शृङ्गी मुस्ता त्रिकटुकं शटी
समस्तान्येकशो वाऽपि सूद्मचूर्णानि कारयेत् ४१

आर्द्रकस्वरसद्मौद्रैर्लिह्यात्कफविनाशनम्
शूलानिलारुचिच्छर्दिकासश्वासद्मयापहम् ४२

द्वितीयं कट्फलादिचूर्णं श्वासादिषु
कट्फलं पौष्करं कृष्णा शृङ्गी च मधुना सह
श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ४३

शृङ्ग्यादिचूर्णं विषाचूर्णं च शिशोः कासज्वरच्छर्दिषु
शृङ्गी प्रतिविषा कृष्णा चूर्णिता मधुना लिहेत्
शिशोः कासज्वरच्छर्दिशान्त्यै वा केवला विषा ४४

यवद्मारादिचूर्णं शिशोः कासे
यिवद्मारविषाशृङ्गीमागधीपौष्करोद्भवम्
चूर्णं द्मौद्रयुतं लीढंपञ्चकासाञ्जयेच्छिशोः ४५

शुराठ्यादिचूर्णमामातीसारे
शुराठीप्रतिविषाहिङ्गुमुस्ताकुटजचित्रकैः
चूर्णमुष्णाम्बुना पीतमामातीसारनाशनम् ४६

हरीतक्यादिचूर्णमामातीसारे
हरीतकी प्रतिविषा सिन्धु सौवर्चलं वचा

हिङ्गु चेति कृतं चूर्णं पिबेदुष्णेन वारिणा ४७

आमातीसारशमनं ग्राहि चाग्निप्रबोधनम्
लघुगङ्गाधरचूर्णं पक्वातिसारे
मुस्तमिन्द्रयवं बिल्वं लोध्रं मोचरसं तथा
धातकीं चूर्णयेत्तक्रगुडाभ्यां पाययेत्सुधीः ४८

सर्वातीसारशमनं निरुणद्धि प्रवाहिकाम्
लघुगङ्गाधरं नाम चूर्णं संग्राहकं परम् ४९

बृहद्गङ्गाधरचूर्णं प्रवाहिकादौ
मुस्तारलुकशुण्ठीभिर्धातकीलोध्रबालकैः
बिल्वमोचरसाभ्यां च पाठेन्द्रयववत्सकैः ५०

आम्रबीजं प्रतिविषा लज्जालुरिति चूर्णितम्
क्षौद्रतण्डुलपानीयैः पीतैर्याति प्रवाहिका ५१

सर्वातिसारा ग्रहणी प्रशमं याति वेगतः
वृद्धगङ्गाधरं चूर्णं सरिद्वेगविबन्धकम् ५२

अजमोदादिचूर्णमतीसारे
अजमोदा मोचरसं सशृङ्गवेरं सधातकीकुसुमम्
गोदधिमन्थितयुक्तं गङ्गामपि वाहिनीं रुन्ध्यात् ५३

मरिचादिचूर्णं ग्रहण्यादौ
तक्रेण यः पिबेन्नित्यं चूर्णं मरिचसंभवम् ५४

चित्रसौवर्चलोपेतं ग्रहणी तस्य नश्यति
उदरप्लीहमन्दाग्निगुल्मार्शोनाशनं भवेत् ५५

कपित्थाष्टकं चूर्णं ग्रहण्यादौ

अष्टौ भागाः कपित्थस्य षड्भागा शर्करा मता
दाडिमं तिन्तिडीकं च श्रीफलं धातकी तथा ५६

अजमोदा च पिप्पल्यः प्रत्येकं स्युस्त्रिभागिकाः
मरिचं जीरकं धान्यं ग्रन्थिकं बालकं तथा ५७

सौवर्चलं यवानी च चातुर्जातं सचित्रकम्
नागरं चैकभागाः स्युः प्रत्येकं सूक्ष्मचूर्णितम् ५८

कपित्थाष्टकसंज्ञं स्याच्चूर्णमेतद् गलामयान्
अतीसारं क्षयं गुल्मं ग्रहणीं च व्यपोहति ५९

लघुदाडिमाष्टकचूर्णमरुच्यादौ कासज्वरादिषु च
दाडिमी द्विपला ग्राह्या खंडा चाष्टपलाऽपि च
त्रिगंधस्य पलं चैकं त्रिकटु स्यात्पलत्रयम् ६०

एतदेकीकृतं सर्वं चूर्णं स्याद्दाडिमाष्टकम्
रुचिकृद्दीपनं कंठ्यं ग्राहि कासज्वरापहम् ६१

बृहद्दाडिमाष्टकचूर्णमतीसारादौ
दाडिमस्य पलान्यष्टौ शर्करायाः पलाष्टकम्
पिप्पली पिप्पलीमूलं यवानी मरिचं तथा ६२

धान्यकं जीरकं शुण्ठी प्रत्येकं पलसम्मितम्
कर्षमात्रा तुगाक्षीरीत्वक्पत्रैलाश्च केशरम् ६३

प्रत्येकं कोलमात्राः स्युस्तच्चूर्णं दाडिमाष्टकम्
अतीसारं क्षयं गुल्मं ग्रहणीं च गलग्रहम्
मन्दाग्निं पीनसं कासं चूर्णमेतद्व्यपोहति ६४

पिप्पल्यादिचूर्णं वातग्रहण्याम्

पिप्पली बृहती व्याघ्री यवक्षारकलिङ्गकाः
चित्रकं सारिवा पाठा शटी लवणपञ्चकम् ६५

तच्चूर्णं पाययेद्दध्ना सुरयोष्णाम्बुनाऽपि वा
मारुतग्रहणीदोषशमनं परमं हितम् ६६

लवङ्गादिचूर्णमरोचकादौ
लवङ्गं शुद्धकर्पूरमेलात्वङ्नागकेशरम्
जातीफलमुशीरं च नागरं कृष्णजीरकम् ६७

कृष्णागरुस्तुगाक्षीरी मांसी नीलोत्पलंकणा
चन्दनं तगरं बालं कङ्कोलंचेति चूर्णयेत् ६८

समभागानि सर्वाणि सर्वेभ्योऽद्धा सिता भवेत्
लवङ्गाद्यमिदं चूर्णं राजार्हं वह्निदीपनम् ६९

रोचनं तर्पणं वृष्यं त्रिदोषघ्नं बलप्रदम्
हृद्रोगं कण्ठरोगं च कासं हिक्कां च पीनसम् ७०

यक्ष्माणं तमकं श्वासमतीसारमुरःक्षतम्
प्रमेहारुचिगुल्मादीन्ग्रहणीमपि नाशयेत् ७१

जातीफलादिचूर्णं ग्रहण्यादौ
जातीफललवङ्गैलापत्रत्वङ्नागकेशरैः ७२

कर्पूरचन्दनतिलैस्त्वक्क्षीरीतगरामलैः
तालीसपिप्पलीपथ्यास्थूलजीरकचित्रकैः ७३

शुण्ठीविडङ्गमरिचैः समभागविचूर्णितैः
यावन्त्येतानि सर्वाणि कुर्याद्भङ्गां च तावतीम् ७४

सर्वचूर्णसमा देया शर्करा च भिषग्वरैः
कर्षमात्रं ततः खादेन्मधुना प्लावितं सुधीः ७५

अस्य प्रभावाद् ग्रहणीकासश्वासारुचिक्षयाः
वातश्लेष्मप्रतिश्यायाः प्रशमं यान्ति वेगतः ७६

महाखाराडवचूर्णमरुच्यादौ
मरिचं नागपुष्पाणि तालीसं लवणानि च
प्रत्येकमेकभागाः स्युः पिप्पलीमूलचित्रकैः ७७

त्वक्कणातिन्तिडीकं च जीरकं च द्विभागिकम्
धान्याम्लवेतसौ विश्वं भद्रैला बदराणि च ७८

अजमोदा जलधरः प्रत्येकं स्युस्त्रिभागिकाः
सर्वौषधिचतुर्थांशं दाडिमस्य फलं भवेत् ७९

द्रव्येभ्यो निखिलेभ्यश्च सिता देयाऽर्द्धमात्रया
महाखाराडवसंज्ञं स्याच्चूर्णमेतत्सुरोचनम् ८०

अग्निदीप्तिकरं हृद्यं कासातीसारनाशनम्
हृद्रोगकराठजठरमुखरोगप्रणाशनम् ८१

विषूचिकां तथाध्मानमर्शोगुल्मकृमीनपि
छर्दिं पञ्चविधां श्वासं चूर्णमेतद्व्यपोहति ८२

नारायणचूर्णमुदरादौ
चित्रकं त्रिफला व्योषं जीरकं हपुषा वचा
यवानी पिप्पलीमूलं शतपुष्पाऽजगन्धिका ८३

अजमोदा शटी धान्यं विडङ्गं स्थूलजीरकम्
हेमाह्वा पौष्करं मूलं क्षारौ लवणपञ्चकम् ८४

कुष्ठं चेति समांशानि विशाला स्याद् द्विभागिका
त्रिवृत्त्रिभागा विज्ञेया दन्त्या भागत्रयं भवेत् ८५

चतुर्भागा शातला स्यात्सर्वाण्येकत्र चूर्णयेत्
पाचनस्नेहनाद्यैश्च स्निग्धकोष्ठस्य रोगिणः ८६

दद्याच्चूर्णं विरेकाय सर्वरोगप्रणाशनम्
हृद्रोगे पाण्डुरोगे च कासे श्वासे भगन्दरे ८७

मन्देऽग्नौ च ज्वरे कुष्ठे ग्रहण्यां च गलग्रहे
दद्याद्युक्तानुपानेन तथाध्माने सुरादिभिः ८८

गुल्मे बदरनीरेण विड्भेदे दधिमस्तुना
उष्णाम्बुभिरजीर्णे च वृक्षाम्लैः परिकर्त्तिषु ८९

उष्ट्रीदुग्धेनोदरेषु तथा तक्रेण वा गवाम्
प्रसन्नया वातरोगे दाडिमाम्भोभिरर्शसि ९०

द्विविधे च विषे दद्याद् घृतेन विषनाशनम्
चूर्णं नारायणं नाम दुष्टरोगगणापहम् ९१

हपुषाद्यं चूर्णमजीर्णोदरादौ
हपुषा त्रिफला चैव त्रायमाणा च पिप्पली
हेमक्षीरी त्रिवृच्चैव शातला कटुका वचा ९२

नीलिनी सैन्धवं कृष्णं लवणं चेति चूर्णयेत्
उष्णोदकेन मूत्रेण दाडिमत्रिफलारसैः ९३

तथा मांसरसेनापि यथायोग्यं पिबेन्नरः
अजीर्णे प्लीह्नि गुल्मेषु शोफार्शोविषमाग्निषु ९४

पञ्चसमचूर्णं शूलादौ
शुराठी हरीतकी कृष्णा त्रिवृत्सौवर्चलं तथा
समभागानि सर्वाणि सूद्त्मचूर्णानि कारयेत् ९५

ज्ञेयं पञ्च समं चूर्णमेतच्छूलहरं परम्
ग्राध्मानजठरार्शोघ्नमामवातहरंस्मृतम् ९६

नाराचचूर्णमाध्मानशूलादौ
कर्षमात्रा भवेत्कृष्णा त्रिवृता स्यात्पलोन्मिता
खराडात्पलं च विज्ञेयं चूर्णमेकत्र कारयेत् ९७

कर्षोन्मितं लिहेदेतत्चौद्रेणाध्माननाशनम्
गाढविट्कोदरकफान्पित्तशूलं च नाशयेत् ९८

लवणत्रितयाद्यं चूर्णं यकृत्प्लीहादौ
लवणत्रितयं चारौ शतपुष्पाद्वयं वचा
ग्रजमोदाऽजगन्धा च हपुषा जीरकद्वयम् ९९

मरिचं पिप्पलीमूलं पिप्पली गजपिप्पली
हिङ्गु च हिङ्गुपत्री च शटी पाठोपकुञ्चिका १००

शुराठीचित्रकचव्यानि विडङ्गं चाम्लवेतसम्
दाडिमं तिन्तिडीकं च त्रिवद् दन्ती शतावरी १०१

इन्द्रवारुणिका भार्ङ्गी देवदारु यवानिका
कुस्तुम्बुरुस्तुम्बुरूणि पौष्करं बदराणि च १०२

शिवा चेति समांशानां चूर्णमेकत्र कारयेत्
भावयेदार्द्रकरसैर्बीजपूररसैस्तथा १०३

तत्पिबेत्सर्पिषा जीर्णमद्येनोष्णोदकेन वा

कोलाम्भसा वा तक्रेण दुग्धेनौष्ट्रेण मस्तुना १०४

यकृत्प्लीहकटीशूलगुदकुक्षिहृदामयान्
अर्शोविष्टम्भमन्दाग्निगुल्मप्लीहोदराणि च १०५

हिक्काध्मानश्वासकासाञ्जयेदेतान्न संशयः
एतैरेवौषधैः सम्यग्घृतं वा साधयेद्भिषक् १०६

तुम्बुर्वादिचूर्णं शूलादौ
तुम्बुरूणि त्रिलवणं यवानी पुष्कराह्वयम् १०७

यवक्षाराभयाहिङ्गुविडङ्गानि समानि च
त्रिवृत् त्रिभागा विज्ञेया सूक्ष्मचूर्णानि कारयेत् १०८

पिबेदुष्णेन तोयेन यवक्वाथेन वा पिबेत्
जयेत्सर्वाणि शूलानि गुल्माध्मानोदराणि च १०९

चित्रकाद्यं चूर्णं मन्दाग्न्यादौ
चित्रको नागरं हिङ्गु पिप्पली पिप्पलीजटा
चव्याजमोदामरिचं प्रत्येकं कर्षसम्मितम् ११०

स्वर्जिका च यवक्षारः सिन्धु सौवर्चलं बिडम्
सामुद्रकं रोमकं च कोलमात्राणि कारयेत् १११

एकीकृत्याखिलं चूर्णं भावयेन्मातुलुङ्गजैः
रसैर्दाडिमजैर्वाऽपि शोषयेदातपेन च ११२

एतच्चूर्णं जयेद् गुल्मं ग्रहणीमामजां रुजम्
अग्निं च कुरुते दीप्तं रुचिकृत्कफनाशनम् ११३

वडवानलचूर्णं मन्दाग्न्यादौ

सैन्धवं पिप्पलीमूलं पिप्पलीचव्य चित्रकम्
शुराठी हरीतकी चेति क्रमवृद्धानि चूर्णयेत् ११४

वडवानलनामैतच्चूर्णं स्यादग्निदीपनम् ११४

अजमोदादिचूर्णमामवातशोथादौ
अजमोदा विडङ्गानि सैन्धवं देवदारु च
चित्रकः पिप्पलीमूलं शतपुष्पा च पिप्पली ११५

मरिचं चेति कर्षांशं प्रत्येकं कारयेद् बुधः
कर्षास्तु पञ्च पथ्याया दश स्युर्वृद्धदारुकात् ११६

नागराच्च दशैव स्युः सर्वारयेकत्र चूर्णयेत्
पिबेत्कोष्णजलेनैव चूर्णं श्वयथुनाशनम् ११७

आमवातरुजं हन्ति सन्धिपीडां च गृध्रसीम्
कटिपृष्ठगुदस्थां च जङ्घयोश्च रुजं जयेत् ११८

तूनीप्रतूनीविश्वाचीकफवातामयाञ्जयेत्
समेन वा गुडेनास्य वटकान्कारयेद्भिषक् ११९

शुराठ्यादिचूर्णं श्वासादौ
शुराठी सौवर्चलं हिङ्गु दाडिमं चाम्लवेतसम्
चूर्णमुष्णाम्बुना पेयं श्वासहृद्रोगशान्तये १२०

हिङ्ग्वादिचूर्णं शूलादौ
हिङ्गु पाठाऽभया धान्यं दाडिमं चित्रकः शटी १२१

अजमोदा त्रिकटुकं हपुषा चाम्लवेतसम्
अजगन्धा तिन्तिडीकं जीरकं पौष्करं वचा १२२

चव्यं क्षारद्वयं पञ्च लवणानि विचूर्णयेत्
प्राग्भोजनस्य मध्ये वा चूर्णमेतत्प्रयोजयेत् १२३

पिबेद्वा जीर्णमद्येन तक्रेणोष्णोदकेन वा
गुल्मे वातकफोद्भूते हृद्ग्रहेऽष्ठीलिकासु च १२४

हृद्वस्तिपार्श्वशूलेषु शूले च गुदयोनिजे
मूत्रकृच्छ्रे तथानाहे पाण्डुरोगेऽरुचौ तथा १२५

हिक्कायां यकृति प्लीह्नि कासे श्वासे गलग्रहे
ग्रहण्यर्शोविकारेषु चूर्णमेतत्प्रशस्यते १२६

भावितं मातुलुङ्गस्य बहुशः स्वरसेन वा
कुर्याच्च गुटिका बह्व्यो वातश्लेष्मामयापहाः १२७

यवानीखाण्डवचूर्णमरोचकादौ
यवानी दाडिमं शुण्ठी तिन्तिडीकाम्लवेतसौ
बदराम्लं च कुर्वीत चतुःशाणमितानि च १२८

सार्धद्विशाणंमरिचं पिप्पली दशशाणिका
त्वक्सौवर्चलधान्याकं जीरकं द्विद्विशाणकम् १२९

चतुःषष्टिमितैः शाणैः शर्करामत्र योजयेत्
चूर्णितं सर्वमेकत्र यवानीखाण्डवाभिधम् १३०

चूर्णं जयेत्पाण्डुरोगं हृद्रोगं ग्रहणीं ज्वरम्
छर्दिशोकातिसारांश्च प्लीहानाहविबन्धताः
अरुचिं शूलमन्दाग्निमर्शोजिह्वागलामयान् १३१

तालीसादिचूर्णमरोचकादौ
तालीसं मरिचं शुण्ठी पिप्पली वंशरोचना

एकद्वित्रिचतुःपञ्चकर्षैर्भागान्प्रकल्पयेत् १३२

एलात्वचोस्तु कर्षार्द्धं प्रत्येकं भागमाचरेत्
द्वात्रिंशत्कर्षतुलिता प्रदेया शर्करा बुधैः १३३

तालीसाद्यमिदं चूर्णं रोचनं पाचनं स्मृतम्
कासश्वासज्वरहरं छर्द्यतीसारनाशनम् १३४

शोषाध्मानहरं प्लीहाग्रहणीपाण्डुरोगजित्
पक्त्वा वा शर्करां चूर्णं क्षिपेत्स्याद् गुटिका ततः १३५

सितोपलादिचूर्णं कासक्षयपित्तदाहादौ
सितोपला षोडश स्यादष्टौ स्याद्वंशरोचना
पिप्पली स्याच्चतुष्कर्षा स्यादेला च द्विकार्षिकी १३६

एकः कर्षस्त्वचः कार्यश्चूर्णयेत्सर्वमेकतः
सितोपलादिकं चूर्णं मधुसर्पिर्युतं लिहेत् १३७

श्वासकासक्षयहरं हस्तपादाङ्गदाहजित्
मन्दाग्निं सुप्तजिह्वत्वं पार्श्वशूलमरोचकम्
ज्वरमूर्ध्वगतं रक्तं पित्तमाशु व्यपोहति १३८

लवणभास्करचूर्णं ग्रहणीगुल्मादौ
समुद्रलवणं कार्यमष्टकर्षमितं बुधैः
पञ्चसौवर्चलं ग्राह्यं बिडं सैन्धवधान्यके १३९

पिप्पली पिप्पलीमूलं कृष्णजीरकपत्रकम्
नागकेशरतालीसमम्लवेतसकं तथा १४०

द्विकर्षमात्राण्येतानि प्रत्येकं कारयेद् बुधः
मरिचं जीरकं विश्वमेकैकं कर्षमात्रकम् १४१

दाडिमंस्याच्चतुष्कर्षं त्वगेला चार्द्धकार्षिकी
एतच्चूर्णीकृतं सर्वं लवणं भास्कराभिधम् १४२

शाणप्रमाणं देयं तु मस्तुतक्रसुरासवैः
वातश्लेष्मभवं गुल्मं प्लीहानमुदरं क्षयम् १४३

अर्शांसि ग्रहणीं कुष्ठं विबन्धं च भगन्दरम्
शोफं शूलं श्वासकासावामवातं च हृद्रुजम् १४४

मन्दाग्निं नाशयेदेतद् दीपनं पाचनं परम्
सर्वलोकहितार्थाय भास्करेणोदितं पुरा १४५

एलादिचूर्णं छर्दिरोगे
एलाप्रियङ्गुमुस्तानि कोलमज्ञा च पिप्पली
श्रीचन्दनं तथा लाजा लवङ्गं नागकेशरम् १४६

एतच्चूर्णीकृतं सर्वं सिताक्षौद्रयुतं लिहेत्
वातपित्तकफोद्भूतां छर्दिं हन्त्यतिवेगतः १४७

व्याघ्रीचूर्णमूर्ध्ववातमहाश्वासादौ
व्याघ्रीजीरकधात्रीणां चूर्णं मधुयुतंलिहेत्
ऊर्ध्ववातमहाश्वासतमकैर्मुच्यते क्षणात् १४८

पञ्चनिम्बचूर्णं कुष्ठादौ
मूलं पत्रं फलं पुष्पं त्वचं निम्बात्समाहरेत्
सूक्ष्मचूर्णमिदंकुर्यात्पलैः पञ्चदशोन्मितैः १४९

लोहभस्महरीतक्यौ चक्रमर्दकचित्रकौ
भल्लातकं बिडङ्गानि शर्करामलकं निशा १५०

पिप्पली मरिचं शुण्ठी वाकुची कृतमालकः

गोक्षुरश्च पलोन्मानमेकैकं कारयेद् बुधः १५१

सर्वमेकीकृतं चूर्णं भृङ्गराजेन भावयेत्
अष्टभागावशिष्टेन खदिरासनवारिणा १५२

भावयित्वा च संशुष्कं कर्षमात्रं ततः पिबेत्
खदिरासनतोयेन सर्पिषा पयसाथवा १५३

मासेन सर्वकुष्ठानि विनिहन्ति रसायनम्
पञ्चनिम्बमिदं चूर्णं सर्वरोगप्रणाशनम् १५४

शतावरीचूर्णं वाजीकरणे
शतावरी गोक्षुरश्च बीजं च कपिकच्छुजम्
गाङ्गेरुकी चातिबला बीजमिक्षुरकोद्भवम् १५५

चूर्णितं सर्वमेकत्र गोदुग्धेन पिबेन्निशि
न तृप्तिं याति नारीभिर्नरश्चूर्णप्रभावतः १५६

अश्वगन्धादिचूर्णं वाजीकरणे
अश्वगन्धा दशपला तन्मात्रो वृद्धदारकः
चूर्णीकृत्योभयं विद्वान्घृतभाण्डे निधापयेत् १५७

कर्षैकं पयसा पीत्वा नारीभिर्नैव तृप्यति
अगत्वा प्रमदां भूयाद्वलीपलितवर्जितः १५८

मुसल्यादिचूर्णं क्लीवतायाम्
मुसलीकन्दचूर्णं तु गुडूचीसत्त्वसंयुतम्
वानरीगोक्षुराभ्यां च शाल्मलीशर्करामलैः
आलोडच घृतदुग्धेन पाययेत्कामवर्धनम् १५९

नवायसचूर्णं पाण्डुरोगादौ

चित्रकं त्रिफला मुस्तं विडङ्गं त्र्यूषणानि च
समभागानि कार्याणि नव भागा हतायसः १६०

एतदेकीकृतं चूर्णं मधुसर्पिर्युतं लिहेत्
गोमूत्रमथवा तक्रमनुपाने प्रशस्यते १६१

पाण्डुरोगं जयत्युग्रं हृद्रोगं च भगन्दरम्
शोथकुष्ठोदरार्शांसि मन्दाग्निमरुचिं कृमीन् १६२

आकारकरभादिचूर्णं स्तम्भने
आकारकरभः शुण्ठी कङ्कोलं कुङ्कुमं कणा
जातीफलं लवङ्गं च चन्दनं चेति कार्षिकान् १६३

चूर्णानि मानतः कुर्यादहिफेनं पलोन्मितं
सर्वमेकीकृतं चूर्णं माषैकं मधुना लिहेत् १६४

शुक्रस्तम्भकरं चूर्णं पुंसामानन्दकारकम्
नारीणां प्रीतिजननं सेवेत निशि कामुकः १६५

बकुलत्वक्चूर्णं दन्तदार्ढ्ये
बकुलत्वग्भवं चूर्णं घर्षयेद्दन्तपङ्क्तिषु
वज्रादपि दृढीभूता दन्ताः स्युश्चपला ध्रुवम् १६६

इति श्रीशार्ङ्गधरसंहितायां मध्यखण्डे चूर्णकल्पनानाम षष्ठोऽध्यायः

अथ वटककल्पनानाम सप्तमोऽध्यायः

वटकनामानि
वटकाश्चाथ कथ्यन्ते तन्नाम गुटिका वटी
मोदको वटिका पिण्डी गुडो वर्त्तिस्तथोच्यते १

वह्निसाध्यवटीनिर्माणविधिः

लेहवत्साध्यते वह्नौ गुडो वा शर्करा तथा
गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्मिता वटी २

अवह्निसाध्यवटीनिर्माणविधिः
कुर्यादवह्निसिद्धेन क्वचिद् गुग्गुलुना वटीम्
द्रवेण मधुना वाऽपि गुटिकां कारयेद् बुधः ३

वटिकायां गुडशर्करामाननिर्णयः
सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः
चूर्णाच्चूर्णसमः कार्यो गुग्गुलुर्मधु तत्समम्
द्रवं च द्विगुणं देयं मोदकेषु भिषग्वरैः ४

वटीमात्रानिर्देशः
कर्षप्रमाणा तन्मात्रा बलं दृष्ट्वा प्रयुज्यताम् ५

श्रीबाहुशालगुडोऽशआदौ
इन्द्रवारुणिका मुस्तं शुण्ठी दन्ती हरीतकी
त्रिवृच्छटी विडङ्गानि गोक्षुरश्चित्रकस्तथा ६

तेजोह्वा च द्विकर्षाणि पृथग्द्रव्याणि कारयेत्
सूरणस्य पलान्यष्टौ वृद्धदारु चतुष्पलम् ७

चतुष्पलं स्याद् भल्लातः क्वाथयेत्सर्वमेकतः
जलद्रोणे चतुर्थांशं गृह्णीयात्क्वाथमुत्तमम् ८

क्वाथ्यद्रव्यात्त्रिगुणितं गुडं क्षिप्त्वा पुनः पचेत्
सम्यक्पक्वं च विज्ञाय चूर्णमेतत्प्रदापयेत् ९

चित्रकत्रिवृतादन्तीतेजोह्वाःपलिकाः पृथक्
पृथक्त्रिपलिकाः कार्या व्योषैलामरिचत्वचः १०

निक्षिपेन्मधु शीते च तस्मिन्प्रस्थप्रमाणतः
एवं सिद्धो भवेच्छ्रीमान्बाहुशालगुडः शुभः ११

जयेदर्शांसि सर्वाणि गुल्मं वातोदरं तथा
आमवातप्रतिश्यायग्रहणीक्षयपीनसान्
हलीमकं पाण्डुरोगं प्रमेहं च रसायनम् १२

मरिचादिगुटिका कासादौ
मरिचं कर्षमात्रं स्यात्पिप्पली कर्षसंमिता १३

अर्धकर्षो यवक्षारः कर्षयुग्मं च दाडिमम्
एतच्चूर्णीकृतं युञ्ज्यादष्टकर्षगुडेन हि १४

शाणप्रमाणां गुटिकां कृत्वा वक्त्रे विधारयेत्
अस्याः प्रभावात्सर्वेऽपि कासा यान्त्येव सङ्क्षयम् १५

गुडवटिका बिभीतकप्रयोगश्च श्वासकासादौ
गुडशुण्ठीशिवामुस्तैर्गुटिकां धारयेन्मुखे
श्वासकासेषु सर्वेषु बिभीतं वाऽपि केवलम् १६

आमलक्यादिगुटिका तृष्णादौ
आमलं कमलं कुष्ठं लाजाश्च वटरोहकम्
एतच्चूर्णस्य मधुना गुटिकां धारयेन्मुखे
तृष्णां प्रवृद्धां हन्त्येषा मुखशोषं च दारुणम् १७

सञ्जीवनीवटी सन्निपातज्वरे सर्पदष्टादौ च
विडङ्गं नागरं कृष्णा पथ्यामलबिभीतकम् १८

वचागुडूची भल्लातं सविषं चात्र योजयेत्
एतानि समभागानि गोमूत्रेणैव पेषयेत् १९

गुञ्जाभा गुटिका कार्या दद्यादार्द्रकजै रसैः
एकामजीर्णगुल्मेषु द्वे विषूच्यां प्रदापयेत् २०

तिस्रश्च सर्पदष्टे तु चतस्रः सान्निपातिके
वटी सञ्जीवनी नाम्ना सञ्जीवयति मानवम् २१

व्योषादिगुटिका पीनसादौ
व्योषाम्लवेतसंचव्यं तालीसं चित्रकं तथा
जीरकंतिन्तिडीकं च प्रत्येकं कर्षभागिकम् २२

त्रिसुगन्धं त्रिशाणं स्याद् गुडः स्यात्कर्षविंशतिः
व्योषादिगुटिका सामपीनसश्वासकासजित्
रुचिस्वरकरा ख्याता प्रतिश्यायप्रणाशिनी २३

गुडचतुष्टयगुटिका आमादौ
आमेषु सगुडां शुराठीमजीर्णे गुडपिप्पलीम्
कृच्छ्रे जीरगुडं दद्यादर्शःसु सगुडाभयाम् २४

वृद्धदारुमोदकोऽशोरोगे
वृद्धदारुकभल्लातशुराठीचूर्णेन योजितः
मोदकः सगुडो हन्यात्षड्विधार्शःकृतां रुजम् २५

शूरणपिराडी अर्शोरोगे
शुष्कशूरणचूर्णस्य भागान्द्वात्रिंशदाहरेत्
भागान्षोडश चित्रस्य शुराठ्या भागचतुष्टयम् २६

द्वौ भागौ मरिचस्यापि सर्वाराययेकत्र चूर्णयेत्
गुडेन पिरािडकां कुर्यादर्शसां नाशनीं पराम् २७

शूरणवटकोऽश प्रभृतिरोगेषु
शूरणो वृद्धदारुश्च भागैः षोडशभिः पृथक् २८

मुसलीचित्रकौ ज्ञेयावष्टभागमितौ पृथक्
शिवा बिभीतकी धात्री विडङ्गं नागरं कणा २९

भल्लातः पिप्पलीमूलं तालीसं च पृथक्पृथक्
चतुर्भागप्रमाणानि त्वगेलामरिचं तथा ३०

द्विभागमात्राणि पृथक् ततस्त्वेकत्र चूर्णयेत्
द्विगुणेन गुडेनाथ वटकान्कारयेद् बुधः ३१

प्रबलाग्निकरा एते तथाऽशोनाशनाः पराः
ग्रहणीं वातकफजां श्वासं कासं क्षयामयम् ३२

प्लीहानं श्लीपदं शोथं हिक्कां मेहं भगन्दरम्
निहन्युः पलितं वृद्ध्या तथा मेध्या रसायनाः ३३

मण्डूरवटकः कामलादौ
त्रिफला त्र्यूषणं चव्यं पिप्पलीमूलचित्रकौ
दारुमाक्षिकधातुस्त्वग्दार्वी मुस्तं विडङ्गकम् ३४

प्रत्येकं कर्षमात्राणि सर्वंद्विगुणितं तथा
मण्डूरं चूर्णयेत्सर्वं गोमूत्रेऽष्टगुणे क्षिपेत् ३५

पक्त्वा च वटकान्कृत्वा दद्यात्तक्रानुपानतः
कामलापाण्डुमेहार्शः शोथकुष्ठकफामयान्
ऊरुस्तम्भमजीर्णं च प्लीहानं नाशयेदपि ३६

पिप्पलीमोदको धातुगतज्वरादौ
क्षौद्राद् द्विगुणितं सर्पिर्घृताद् द्विगुणपिप्पली ३७

सिता द्विगुणिता तस्याः क्षीरं देयं चतुर्गुणम्
चातुर्जातं क्षौद्रतुल्यं पक्त्वा कुर्याच्च मोदकान् ३८

धातुस्थांश्च ज्वरान्सर्वान् श्वासं कासं च पाराडुताम्
धातुन्तयं वह्निमान्द्यं पिप्पलीमोदको जयेत् ३९

चन्द्रप्रभावटी प्रमेहादौ
चन्द्रप्रभां वचां मुस्तं भूनिम्बामृतदारुकम्
हरिद्राऽतिविषा दार्वी पिप्पलीमूलचित्रकौ ४०

धान्यकं त्रिफला चव्यं विडङ्गं गजपिप्पली
व्योषं मान्तिकधातुश्च द्वौ न्तारौ लवरात्रयम् ४१

एतानि शाणमात्राणि प्रत्येकं कारयेद् बुधः
त्रिवृद्दन्ती पत्रकं च त्वगेला वंशरोचना ४२

प्रत्येकं कर्षमात्राणि कुर्यादेतानि बुद्धिमान्
द्विकर्षं हतलोहं स्याच्चतुष्कर्षा सिताभवेत् ४३

शिलाजत्वष्टकर्षं स्यादष्टौ कर्षाश्च गुग्गुलोः
एभिरेकत्रसंन्तुराणैः कर्त्तव्या गुटिका शुभा ४४

चन्द्रप्रभेति विख्याता सर्वरोगप्रणाशिनी
प्रमेहान्विंशतिं कृच्छ्रं मूत्राघातं तथाऽश्मरीम् ४५

विबन्धानाहशूलानि मेहनं ग्रन्थिमर्बुदम्
अराडवृद्धिं तथा पाराडुं कामलां च हलीमकम् ४६

अन्त्रवृद्धिं कटीशूलं श्वासं कासं विचर्चिकाम्
कुष्ठान्यर्शांसि कराडूं च प्लीहोदरभगन्दरं ४७

दन्तरोगं नेत्ररोगं स्त्रीणामार्त्तवजां रुजम्
पुंसां शुक्रगतान्दोषान्मन्दाग्निमरुचिं तथा ४८

वायुं पित्तं कफं हन्याद् बल्या वृष्या रसायनी
चन्द्रप्रभायां कर्षस्तु चतुःशाणो विधीयते ४९

काङ्कायनगुटिका गुल्मादौ
यवानी जीरकं धान्यं मरिचं गिरिकर्णिका
अजमोदोपकुञ्ची च चतुःशाणाः पृथक्पृथक् ५०

हिङ्गु षट्शाणिकं कार्यं क्षारौ लवणपञ्चकम्
त्रिवृच्चाष्टमितैः शाणैः प्रत्येकं कल्पयेत्सुधीः ५१

दन्ती शटी पौष्करं च विडङ्गं दाडिमं शिवा
चित्रोऽम्लवेतसः शुण्ठी शाणैः षोडशभिः पृथक् ५२

बीजपूररसेनैषां गुटिकां कारयेद् बुधः
घृतेन पयसा मद्यैरम्लैरुष्णोदकेन वा ५३

पिबेत्काङ्कायनप्रोक्तां गुटिकां गुल्मनाशिनीम्
मद्येन वातिकं गुल्मं गोक्षीरेण च पैत्तिकम् ५४

मूत्रेण कफगुल्मं च दशमूलैस्त्रिदोषजम्
उष्ट्रीदुग्धेन नारीणां रक्तगुल्मं निवारयेत्
हृद्रोगं ग्रहणीं शूलं कृमीनर्शांसि नाशयेत् ५५

योगराजगुग्गुलुर्वातरोगे आमवाते वा
नागरं पिप्पलीमूलं पिप्पली चव्यचित्रकौ ५६

भृष्टं हिङ्ग्वजमोदा च सर्षपो जीरकद्वयम्
रेणुकेन्द्रयवाः पाठा विडङ्गं गजपिप्पली ५७

कटुकाऽतिविषा भार्ङ्गी वचा मूर्वेति भागतः
प्रत्येकं शाणिकानि स्युर्द्रव्याणीमानि विंशतिः ५८

द्रव्येभ्यः सकलेभ्यश्च त्रिफला द्विगुणा भवेत्
एभिश्चूर्णीकृतैः सर्वैः समो देयश्च गुग्गुलुः ५९

विङ्गं रौप्यं च नागं च लोहसारस्तथाभ्रकम्
मराडूरं रससिन्दूरं प्रत्येकं पलसम्मितम् ६०

गुडपाकसमं कृत्वा इमं दद्याद्यथोचितम्
एकपिराडं ततः कृत्वा धारयेद् घृतभाजने ६१

गुटिकाः शाणमात्रास्तु कृत्वा ग्राह्या यथोचिताः
गुग्गुलुर्योगराजोऽय त्रिदोषघ्नो रसायनः ६२

मैथुनाहारपानानां त्यागो नैवात्र विद्यते
सर्वान्वातामयान्कुष्ठानर्शांसि ग्रहणीगदम् ६३

प्रमेहं वातरक्तं च नाभिशूलं भगन्दरम्
उदावर्तं क्षयं गुल्ममपस्मारमुरोग्रहम् ६४

मन्दाग्निश्वासकासांश्च नाशयेदरुचिं तथा
रेतोदोषहरः पुंसां रजोदोषहरः स्त्रियाः ६५

पुंसामपत्यजनको वन्ध्यानां गर्भदस्तथा
रास्नादिक्वाथसंयुक्तो विविधं हन्ति मारुतम् ६६

काकोल्यादिशृतात्पित्तं कफमारग्वधादिना
दार्वीशृतेन मेहांश्च गोमूत्रेण च पाराडुताम् ६७

मेदोवृद्धिं च मधुना कुष्ठं निम्बशृतेन वा
छिन्नाक्वाथेन वातास्रं शोथं शूलं कणाशृतात् ६८

पाटलाक्वाथसहितो विषं मूषकजं जयेत्

त्रिफलाक्वाथसहितो नेत्रार्त्तिं हन्ति दारुणाम्
पुनर्नवादिक्वाथेन हन्यात्सर्वोदरान्यपि ६९

कैशोरगुग्गुलुर्वातरक्तादौ
त्रिफलायास्त्रयः प्रस्थाः प्रस्थैका चामृता भवेत् ७०

संकुटय लोहपात्रे तु सार्धद्रोणाम्बुना पचेत्
जलमर्धशृतंज्ञात्वा गृह्णीयाद्वस्त्रगालितम् ७१

ततः क्वाथे क्षिपेच्छुद्धं गुग्गुलुं प्रस्थसम्मितम्
पुनः पचेदयः पात्रे दर्व्या सङ्घट्टयेन्मुहुः ७२

सान्द्रीभूतं च तं ज्ञात्वा गुडपाकसमाकृतिम्
चूर्णीकृत्य ततस्तत्र द्रव्याणीमानि निक्षिपेत् ७३

त्रिफला द्विपला ज्ञेया गुडूची पलिका मता
षडक्षंत्र्यूषणं प्रोक्तं विडङ्गानां पलार्धकम् ७४

दन्ती कर्षमिता कार्या त्रिवृत्कर्षमिता स्मृता
ततः पिण्डीकृतं सर्वं घृतपात्रे विनिक्षिपेत् ७५

गुटिकाः शाणमात्रेण युञ्ज्याद् दोषाद्यपेक्षया
अनुपाने भिषग्दद्यात्कोष्णं नीरं पयोऽथवा ७६

मञ्जिष्ठादिशृतं वाऽपि युक्तियुक्तमतः परम्
जयेत्सर्वाणि कुष्ठानि वातरक्तं त्रिदोषजम् ७७

सर्वव्रणांश्च गुल्मांश्च प्रमेहपिडिकास्तथा
प्रमेहोदरमन्दाग्निकासश्वयथुपाण्डुजान् ७८

हन्ति सर्वामयान्नित्यमुपयुक्तो रसायनः

केशोरकाभिधानोऽय गुग्गुलुः कान्तिकारकः ७९

वासादिना नेत्रगदान्गुल्मादीन्वरुणादिना
क्वाथेन खदिरस्यापि व्रणकुष्ठानि नाशयेत् ८०

अम्लं तीक्ष्णमजीर्णं च व्यवायं श्रममातपम्
मद्यंरोषंत्यजेत्सम्यग्गुणार्थी पुरसेवकः ८१

त्रिफलागुग्गुलुर्भगन्दरादौ
त्रिपलं त्रिफलाचूर्णं कृष्णाचूर्णं पलोन्मितम्
गुग्गुलुः पाञ्चपलिकः क्षोदयेत्सर्वमेकतः ८२

ततस्तुगुटिकां कृत्वा प्रयुञ्ज्याद्वह्न्यपेक्षया
भगन्दरं गुल्मशोथावर्शांसि च विनाशयेत् ८३

गोक्षुरादिगुग्गुलः प्रमेहादौ
अष्टाविंशतिसंख्यानि पलान्यानीय गोक्षुरात्
विपचेत्षड्गुणेनीरे क्वाथो ग्राह्योऽद्धशेषितः ८४

ततः पुनः पचेत्तत्र पुटं सप्तपलं क्षिपेत्
गुडपाकसमाकारं ज्ञात्वा तत्र विनिक्षिपेत् ८५

त्रिकटु त्रिफला मुस्तं चूर्णितं पलसप्तकम्
ततः पिराडीकृतस्यास्य गुटिकामुपयोजयेत् ८६

हन्यात्प्रमेहं कृच्छ्रं च प्रदरं मूत्रघातकम्
वातास्त्रं वातरोगांश्च शुक्रदोषं तथाऽश्मरीम् ८७

त्रिफलामोदकः कुष्ठादौ
त्रिफलाऽष्टपला कार्या भल्लातं च चतुष्पलम्
बाकुची पञ्चपलिका विडङ्गानां चतुष्पलम्  ८८

हतलोहं त्रिवृच्चैव गुग्गुलुश्च शिलाजतु
एकैकं पलमात्रं स्यात्पलार्द्धं पौष्करं भवेत् ८९

चित्रकस्य पलार्धंस्याद् द्विशाणं मरिचं भवेत्
नागरं पिप्पली मुस्ता त्वगेलापत्रकुङ्कुमम् ९०

शाणोन्मितं स्यादेकैकं चूर्णयेत्सर्वमेकतः
ततस्तत्प्रक्षिपेच्चूर्णं पक्वखण्डे च तत्समे ९१

मोदकान्पलिकान्कृत्वा प्रयुञ्जीत यथोचितान्
हन्युः सर्वाणि कुष्ठानि त्रिदोषप्रभवामयान् ९२

भगन्दरप्लीहगुल्माञ्जिह्वातालुगलामयान्
शिरोऽक्षिभ्रूगतान्रोगान्हन्यात्पृष्ठगतानपि ९३

प्राग्भोजनस्य देयं स्यादधः कायस्थिते गदे
भेषजं भक्तमध्ये च रोगे जठरसंस्थिते
भोजनस्योपरि ग्राह्यमूर्ध्वजत्रुगदेषु च ९४

काञ्चनारगुग्गुलुगण्डमालापचीग्रन्थिभगन्दरादौ
काञ्चनारत्वचो ग्राह्यं पलानां दशकं बुधैः ९५

त्रिफला षट्पला कार्या त्रिकटु स्यात्पलत्रयम्
पलैकं वरुणं कुर्यादेलात्वक्पत्रकं तथा ९६

एकैकं कर्षमात्रं स्यात्सर्वाण्येकत्र चूर्णयेत्
यावच्चूर्णमिदं सर्वं तावन्मात्रस्तु गुग्गुलुः ९७

सङ्कुटय सर्वमेकत्र पिण्डं कृत्वा च धारयेत्
गुटिकाः शाणिकाः कार्याः प्रातर्ग्राह्या यथोचितम् ९८

गराडमालां जयत्युग्रामपचीमर्बुदानि च
ग्रन्थीन्व्रणांश्च गुल्मांश्च कुष्ठानि च भगन्दरम् ९९

प्रदेयश्चानुपानार्थं क्वाथो मुराडतिकाभवः
क्वाथः खदिरसारस्य पथ्याक्वाथोष्णकं जलम् १००

माषादिमोदकः पुष्टौ
निस्तुषं माषचूर्णं स्यात्तथा गोधूमसम्भवम्
निस्तुषं यवचूर्णं च शालितराडुलजं तथा १०१

सूक्ष्मं च पिप्पलीचूर्णं पलिकान्युपकल्पयेत्
एतदेकीकृतं सर्वं भर्जयेद्गोघृतेन च १०२

अर्धमात्रेण सर्वेभ्यस्ततः खराडं समं क्षिपेत्
जलं च द्विगुणं दत्त्वा पाचयेत्तं शनैः शनैः १०३

ततः पक्वं समुद्धृत्य वृत्तान्कुर्वीत मोदकान्
भुक्त्वा सायं पलैकं च पिबेत्क्षीरं चतुर्गुणम् १०४

वर्जनीयौ विशेषेण क्षाराम्लौ द्वौ रसावपि
कृत्वैवं रमयेन्नारीर्बह्वीर्न क्षीयते नरः १०५

इति श्रीशार्ङ्गधरसंहितायां मध्यखराडे वटककल्पनानाम सप्तमोऽध्यायः

अथ अवलेहकल्पनानामाष्टमोऽध्यायः

अवलेहस्य लक्षणनाममात्रानिर्देशः
क्वाथादीनां पुनः पाकाद्घनत्वं सा रसक्रिया
सोऽवलेहश्च लेहः स्यात्तन्मात्रा स्यात्पलोन्मिता १

अनुक्ते सितादीनां परिमाणनिर्देशः
सिता चतुर्गुणा कार्या चूर्णाच्च द्विगुणो गुडः

द्रवं चतुर्गुणं दद्यादिति सर्वत्र निश्चयः २

अवलेहस्य सिद्धिलक्षणम्
सुपक्वे तन्तुमत्त्वं स्यादवलेहोऽप्सु मज्जति
खरत्वं पीडिते मुद्रागन्धवर्णरसोद्भवः ३

अवलेहस्यानुपानानि
दुग्धमिक्षुरसो यूषः पञ्चमूलकषायजः
वासाक्वाथो यथायोग्यमनुपानं प्रशस्यते ४

कण्टकार्यवलेहः कासश्वासादौ
कण्टकारीतुलां नीरद्रोणे पक्त्वा कषायकम्
पादशेषं गृहीत्वा च तस्मिंश्चूर्णानि दापयेत् ५

पृथक्पलानि चैतानि गुडूचीचव्यचित्रकाः
मुस्तं कर्कटशृङ्गी च त्र्यूषणं धन्वयासकः ६

भार्ङ्गी रास्ना शटी चैव शर्करा पलविंशतिः
प्रत्येकं च पलान्यष्टौ प्रदद्याद् घृततैलयोः ७

पक्त्वा लेहत्वमानीय शीते मधुपलाष्टकम्
चतुष्पलं तुगाक्षीर्याः पिप्पलीनां चतुष्पलम् ८

क्षिप्त्वा निदध्यात्सुदृढे मृण्मये भाजने शुभे
लेहोऽय हन्ति हिक्काऽत्तिश्वासकासानशेषतः ९

च्यवनप्राशः क्षयक्षीणादौ
पाटलाऽरणिकाश्मर्यबिल्वारलुकगोक्षुराः
पर्ण्यौ बृहत्यौ पिप्पल्यः शृङ्गी द्राक्षाऽमृताऽभया १०

बला भूम्यामली वासाऽऋद्धिर्जीवन्तिका शटी

जीवकर्षभकौ मुस्तं पौष्करं काकनासिका ११

मुद्गपर्णी माषपर्णी विदारी च पुनर्नवा
काकोल्यौ कमलं मेदे सूक्ष्मैलागरुचन्दनम् १२

एकैकं पलसम्मानं स्थूलचूर्णितमौषधम्
एकीकृत्य बृहत्पात्रे पञ्चामलशतानि च १३

पचेद्द्रोणजलेक्षिप्त्वाग्राह्यमष्टांशशेषितम्
ततस्तुतान्यामलानिनिष्कुलीकृत्यवाससा १४

दृढहस्तेन सम्पीड्यक्षिप्त्वा तत्र ततोघृतम्
पलसप्तमितं तानि किञ्चिद् भृष्ट्वाऽल्पवह्निना १५

ततस्तत्र क्षिपेत्क्वाथं खण्डं चार्धतुलोन्मितम्
लेहवत्साधयित्वा च चूर्णानीमानि दापयेत् १६

पिप्पली द्विपला देया तुगाक्षीरी चतुष्पला
प्रत्येकं च त्रिशाणं स्यात्त्वगेलापत्रकेशराः १७

ततस्त्वेकीकृते तस्मिन्क्षिपेत्क्षौद्रं च षट्पलम्
इत्येतच्च्यवनप्रोक्तं च्यवनप्राशसंज्ञितम् १८

लेहं वह्निबलं दृष्ट्वा खादेत्क्षीणो रसायनम्
बालवृद्धक्षतक्षीणा नारीक्षीणाश्च शोषिणः १९

हृद्रोगिणः स्वरक्षीणा ये नरास्तेषु युज्यते
कासं श्वासं पिपासां च वातास्त्रमुरसो ग्रहम् २०

वातपित्तं शुक्रदोषं मूत्रदोषं च नाशयेत्
मेधां स्मृतिं स्त्रीषु हर्षं कान्तिं वर्णप्रसन्नताम्

अस्य प्रयोगादाप्नोति नरो जीर्णविवर्जितः २१

कूष्माण्डावलेहो रक्तपित्तादौ
निष्कुलीकृत्य कूष्माण्डखण्डान्पलशतं पचेत्
निक्षिप्य द्वितुलं नीरमर्धशिष्टं च गृह्यते २२

तानि कूष्माण्डखण्डानि पीडयेद् दृढवाससा
आतपे शोषयेत्किञ्चिच्छूलाग्रैर्बहुशोव्यधेत् २३

क्षिप्त्वा ताम्रकटाहे च दद्यादष्टपलं घृतम्
तेन किञ्चिद्भर्जयित्वा पूर्वोक्तं तज्जलं क्षिपेत् २४

खण्डं पलशतं दत्त्वा सर्वमेकत्र पाचयेत्
सुपक्वे पिप्पली शुण्ठी जीरकं द्विपलं पृथक् २५

पृथक्पलार्धं धान्याकं पत्रैलामरिचंत्वचम्
चूर्णीकृत्य क्षिपेत्तत्र घृतार्धं क्षौद्रमावहेत् २६

खादेदग्निबलं दृष्ट्वा रक्तपित्ती क्षयी ज्वरी
शोषतृष्णाभ्रमच्छर्दिश्वासकासक्षतातुरः २७

कूष्माण्डकावलेहोऽय बालवृद्धेषु युज्यते
उरःसन्धानकृद् वृष्यो बृंहणो बलकृन्मतः २८

खण्डशूरणावलेहोऽशोरोगे
युक्त्या कूष्माण्डखण्डस्य शूरणं विपचेत्सुधीः
अर्शसां मूढवातानां मन्दाग्नीनां च युज्यते २९

अगस्त्यहरीतक्यवलेहः क्षयादौ
हरीतकीशतं भद्रं यवानामाढकं तथा ३०

पलानि दशमूलस्य विंशतिं च नियोजयेत्
चित्रकः पिप्पलीमूलमपामार्गः शटी तथा ३१

कपिकच्छूः शंखपुष्पी भार्ङ्गी च गजपिप्पली
बला पुष्करमूलं च पृथग्द्विपलमात्रया ३२

पचेत्पञ्चाढके नीरे यवैः स्विन्नैः शृतं नयेत्
तच्चाभयाशतंदद्यात्क्वाथे तस्मिन्विचक्षणः ३३

सर्पिस्तैलाष्टपलकं क्षिपेद्गुडतुलां तथा
पक्त्वा लेहत्वमानीय सिद्धे शीते पृथक्पृथक् ३४

क्षौद्रं च पिप्पलीचूर्णं दद्यात्कुडवमात्रया
हरीतकीद्वयं खादेत्तेन लेहेन नित्यशः ३५

क्षयं कासं ज्वरं श्वासं हिक्काऽशोऽरुचिपीनसान्
ग्रहणीं नाशयेदेष वलीपलितनाशनः ३६

बलवर्णकरः पुंसामवलेहो रसायनम्
विहितोऽगस्त्यमुनिना सर्वरोगप्रणाशनः ३७

कुटजावलेहोऽश आदिरोगेषु
कुटजत्वक्तुलां द्रोणे जलस्य विपचेत्सुधीः
कषायं पादशेषं च गृह्णीयाद्वस्त्रगालितम् ३८

त्रिंशत्पलंगुडस्यात्र दत्त्वा च विपचेत्पुनः
सान्द्रत्वमागतं ज्ञात्वा चूर्णानीमानि दापयेत् ३९

रसाञ्जनं मोचरसं त्रिकटु त्रिफलां तथा
लज्जालुं चित्रकं पाठां बिल्वमिन्द्रयवं त्वचम् ४०

भल्लातकं प्रतिविषां विडङ्गानि च बालकम्
प्रत्येकं पलसंमानं घृतस्य कुडवं तथा ४१

सिद्धशीते ततो दद्यान्मधुनः कुडवं तथा
जयेदेषोऽवलेहस्तु सर्वाण्यर्शांसि वेगतः ४२

दुर्नामप्रभवान्रोगानतीसारमरोचकम्
ग्रहणीं पाण्डुरोगं च रक्तपित्तं च कामलाम् ४३

अम्लपित्तं तथा शोथं कार्श्यं चैव प्रवाहिकाम्
अनुपाने प्रयोक्तव्यमाजं तक्रं पयो दधि
घृतं जलं वा जीर्णे च पथ्यभोजी भवेन्नरः ४४

कुटजाष्टकाद्यवलेहोऽतीसारादौ
कुटजत्वक्तुलामार्द्रां द्रोणनीरे विपाचयेत्
पादशेषं शृतं नीत्वा चूर्णान्येतानि दापयेत् ४५

लज्जालुर्धातकी बिल्वं पाठा मोचरसस्तथा
मुस्तं प्रतिविषा चैव प्रत्येकं स्यात्पलं पलम् ४६

ततस्तु विपचेद् भूयो यावद्दर्वीप्रलेपनम्
जलेन छागदुग्धेन पीतो मण्डेन वा जयेत् ४७

सर्वातिसारान्घोरांस्तु नानावर्णान्सवेदनान्
असृग्दरं समस्तं च सर्वार्शांसि प्रवाहिकाम् ४८

इति श्रीशार्ङ्गधरसंहितायां मध्यखण्डेऽवलेहकल्पनानामाष्टमोऽध्यायः

## अथ स्नेहकल्पनानाम नवमोऽध्यायः

घृततैलकल्पना
कल्काच्चतुर्गुणीकृत्य घृतं वा तैलमेव वा

चतुर्गुणे द्रवे साध्यं तस्य मात्रा पलोन्मिता १

स्नेहसाधनार्थं क्वाथपरिभाषा
निक्षिप्य क्वाथयेत्तोयं क्वाथ्यद्रव्याच्चतुर्गुणम्
पादशिष्टं गृहीत्वा च स्नेहं तेनैव साधयेत् २

मृदुद्रव्यादौ क्वथने जलप्रमाणम्
चतुर्गुणं मृदुद्रव्ये कठिनेऽष्टगुणं जलम्
तथा च मध्यमे द्रव्ये दद्यादष्टगुणं पयः
अत्यन्तकठिने द्रव्ये नीरं षोडशकं मतम् ३

मतान्तरे परिमाणविशेषः
कर्षादितः पलं यावत्क्षिपेत्षोडशकं जलम् ४

तदूर्ध्वं कुडवं यावद्धवेदष्टगुणं पयः
प्रस्थादितः क्षिपेन्नीरं खारीं यावच्चतुर्गुणम् ५

अम्ब्वादिभिर्यत्र स्नेहसाधनं तत्र कल्कप्रमाणम्
अम्बुक्वाथरसैर्यत्र पृथक्स्नेहस्य साधनम्
कल्कस्यांशं तत्र दद्याच्चतुर्थं षष्ठमष्टमम् ६

दुग्धादिपाकपरिभाषा
दुग्धे दध्नि रसे तक्रे कल्को देयोऽष्टमांशकः
कल्कस्य सम्यक्पाकार्थं तोयमत्र चतुर्गुणम् ७

स्नेहे पञ्चाधिकद्रवव्यवस्था
द्रवाणि यत्र स्नेहेषु पञ्चादीनि भवन्ति हि
तत्र स्नेहसमान्याहुर्यथापूर्वं चतुर्गुणम् ८

केवलद्रव्यस्य स्नेहपाकार्थं मानम्
द्रव्येण केवलेनैव स्नेहपाको भवेद्यदि

तत्राम्बुपिष्टः कल्कः स्याज्जलं चात्र चतुर्गुणम् ९

केवलक्वाथस्य स्नेहपाकार्थं मानम्
क्वाथेन केवलेनैव पाको यत्रेरितः क्वचित्
क्वाथ्यद्रव्यस्य कल्कोऽपि तत्र स्नेहे प्रयुज्यते १०

कल्कहीनस्नेहपाकविधिः
कल्कहीनस्तु यः स्नेहः स साध्यः केवले द्रवे ११

पुष्पकल्कस्नेहपाकविधिः
पुष्पकल्कस्तु यः स्नेहस्तत्र तोयं चतुर्गुणम्
स्नेहे स्नेहाष्टमांशश्च पुष्पकल्कः प्रयुज्यते १२

स्नेहसिद्धलक्षणम्
वर्त्तिवत्स्नेहकल्कः स्याद्यदाङ्गुल्याविमर्दितः
शब्दहीनोग्निनिक्षिप्तःस्नेहःसिद्धोभवेत्तदा १३

घृततैलपाकयोः सिद्धौ स्वरूपनिर्देशः
यदा फेनोद्गमस्तैले फेनशान्तिश्च सर्पिषि
गन्धवर्णरसोत्पत्तिः स्नेहः सिद्धस्तदा भवेत् १४

स्नेहपाकस्य भेदास्तल्लक्षणानि च
स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा
ईषत्सरसकल्कस्तु स्नेहपाको मृदुर्भवेत् १५

मध्यपाकस्य सिद्धिश्च कल्के नीरसकोमले
ईषत्कठिनकल्कश्च स्नेहपाको भवेत्खरः
तदूर्ध्वं दग्धपाकः स्याद्दाहकृन्निष्प्रयोजनः १६

आमपाकस्नेहगुणाः
आमपाकश्च निर्वीर्यो वह्निमान्द्यकरो गुरुः १७

मृद्वादिपाकस्नेहानां नियमाः
नस्यार्थं स्यान्मृदुः पाको मध्यमः सर्वकर्मसु
अभ्यङ्गार्थं खरः प्रोक्तो युञ्ज्यादेवं यथोचितम् १८

घृतादिसाधने कालनिर्देशः
घृततैलगुडादींश्च साधयेन्नैकवासरे
प्रकुर्वन्त्युषिता ह्येते विशेषाद् गुणसञ्चयम् १९

अथ घृतकल्पना
क्षीरषट्पलघृतं विषमज्वरादौ
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः
ससैन्धवैश्च पलिकैर्घृतप्रस्थं विपाचयेत्
क्षीरं चतुर्गुणं दत्त्वा तद् घृतं प्लीहनाशनम्
विषमज्वरमन्दाग्निहरं रुचिकरं परम् २०

चाङ्गेरीघृतमतीसारग्रहण्योः
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली
श्वदंष्ट्रा नागरं धान्यं पाठा बिल्वं यवानिका २१

द्रव्यैश्च पलिकैरेतैश्चतुः षष्टिपलं घृतम्
घृताच्चतुर्गुणं दद्याच्चाङ्गेरीस्वरसं बुधः २२

तथा चतुर्गुणं दत्त्वा दधि सर्पिर्विपाचयेत्
शनैः शनैर्विपक्तव्यं चाङ्गेरीघृतमुत्तमम् २३

तद् घृतं कफवातघ्नं ग्रहण्यर्शोविकारनुत्
हन्त्यानाहं गुदभ्रंशं मूत्रकृच्छ्रं प्रवाहिकाम् २४

मसूरघृतमतीसारादौ
मसूराणां पलशतं नीरद्रोणे विपाचयेत्
पादशेषं शृतं नीत्वा दत्त्वा बिल्वपलाष्टकम् २५

घृतप्रस्थं पचेत्तेन सर्वातीसारनाशनम्
ग्रहणीं भिन्नविट्कं च नाशयेच्च प्रवाहिकाम् २६

कामदेवघृतं रक्तपित्तादौ
अश्वगन्धा तुलैका स्यात्तदर्धो गोक्षुरः स्मृतः
बलाऽमृता शालिपर्णी विदारी च शतावरी २७

अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा
काश्मर्याश्च फलं चैव माषबीजं तथैव च २८

पृथग्दशपलान् भागाँश्चतुर्द्रोणेऽम्भसि पचेत्
द्रोणशेषे रसे तस्मिन् पचेच्चैव घृताढकम् २९

मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम्
पत्रकं नागपुष्पं च आत्मगुप्ताफलं तथा ३०

नीलोत्पलं सारिवे द्वे जीवनीयो गणस्तथा
पृथक् कर्षसमा भागाः शर्करायाः पलद्वयम् ३१

रसश्च पौण्ड्रकेक्षूणामाढकैकं समाहरेत्
चतुर्गुणेन पयसा घृताढकं विपाचयेत् ३२

घृतमेतन्निहन्त्याशु रक्तपित्तमुरःक्षतम्
हलीमकं पाण्डुरोगं वर्णभेदं स्वरक्षयम् ३३

मूत्रकृच्छ्रमुरोदाहं पार्श्वशूलं च नाशयेत्
एतत् सर्पिः प्रयोक्तव्यं बह्वन्तः पुरवासिनाम् ३४

स्त्रीणां चैवाप्रजातानां दुर्बलानां च देहिनाम्
श्रेष्ठं बलकरं वर्ण्यं हृद्यं पुष्टिरसायनम् ३५

ओजस्तेजस्करं हृद्यमायुष्यं प्राणवर्द्धनम्
संवर्द्धयति शुक्रस्य पुरुषं दुर्बलेन्द्रियम् ३६

सर्वरोगविनिर्मुक्तः पयःसिक्तो यथा द्रुमः
कामदेव इति ख्यातं सर्पिरुक्तं महागुणम् ३७

पानीयकल्याणकं घृतमपस्मारादौ
त्रिफला द्वे निशे कौन्ती सारिवे द्वे प्रियङ्गुका
शालिपर्णी पृष्ठिपर्णी देवदार्व्येलवालुकम् ३८

नतं विशाला दन्ती च दाडिमं नागकेशरम्
नीलोत्पलैला मञ्जिष्ठा विडङ्गं कुष्ठपद्मकम् ३९

जातिपुष्पं चन्दनं च तालीसं बृहती तथा
एतैः कर्षसमैः कल्कैर्जलं दत्त्वा चतुर्गुणम् ४०

घृतप्रस्थं पचेद्धीमानपस्मारे ज्वरे क्षये
उन्मादे वातरक्ते च कासे मन्दानले तथा ४१

प्रतिश्याये कटीशूले तृतीयक चतुर्थके
मूत्रकृच्छ्रे विसर्पे च कण्डूपाण्ड्वामये तथा ४२

विषद्वये प्रमेहेषु सर्वथैवोपयुज्यते
वन्ध्यानां पुत्रदं भूतयक्षरक्षोहरं स्मृतम् ४३

अमृताघृतं कुष्ठादौ
अमृताक्वाथकल्काभ्यां सक्षीरं विपचेद् घृतम्
वातरक्तं जयत्याशु कुष्ठं जयति दुस्तरम् ४४

महातिक्तकघृतं वातरक्तकुष्ठादौ
सप्तच्छदः प्रतिविषा शम्याकः कटुरोहिणी

पाठा मुस्तमुशीरं च त्रिफला पर्पटस्तथा ४५

पटोलनिम्बमञ्जिष्ठाः पिप्पली पद्मकं शटी
चन्दनं धन्वयासश्च विशाले द्वे निशे तथा ४६

गुडूची सारिवे द्वे च मूर्वा वासा शतावरी
त्रायन्तीन्द्रयवा यष्टी भूनिम्बश्चाक्षभागिकाः ४७

घृतं चतुर्गुणं दद्यात् घृतादामलकीरसः
द्विगुणः सर्पिषश्चात्र जलमष्टगुणं भवेत् ४८

तत्सिद्धं पाययेत्सर्पिर्वातरक्तेषु सर्वथा
कुष्ठानि रक्तपित्तं च रक्तार्शांसि च पाण्डुताम् ४९

हृद्रोगगुल्मवीसर्पप्रदरं गण्डमालिकाम्
क्षुद्ररोगाञ्ज्वरांश्चैव महातिक्तमिदं जयेत् ५०

कासीसाद्यघृतं कुष्ठे दद्रूपामाशिरः स्फोटादौ
कासीसं द्वे निशे मुस्तं हरितालं मनः शिलाम्
कम्पिल्लकं गन्धकं च विडङ्गं गुग्गुलुं तथा ५१

सिक्थकं मरिचं कुष्ठं तुत्थकं गौरसर्षपान्
रसाञ्जनं च सिन्दूरं श्रीवासं रक्तचन्दनम् ५२

इरिमेदं निम्बपत्रं करञ्जं सारिवां वचाम्
मञ्जिष्ठां मधुकं मांसीं शिरीषं लोध्रपद्मकम् ५३

हरीतकीं प्रपुन्नाटं चूर्णयेत्कार्षिकान्पृथक्
ततस्तच्चूर्णमालोड्य त्रिंशत्पलमिते घृते ५४

स्थापयेत्ताम्रपात्रे च घर्मे सप्तदिनानि वै

अस्याभ्यङ्गेन कुष्ठानि दद्रुपामाविचर्चिकाः ५५

शूकदोषा विसर्पाश्च विस्फोटा वातरक्तजाः
शिरः स्फोटोपदंशाश्च नाडीदुष्टव्रणानि च ५६

शोथो भगन्दरश्चैव लूताः शाम्यन्ति देहिनाम्
शोधनं रोपणं चैव सवर्णकरणं घृतम् ५७

जात्यादिघृतं व्रणे
जातीनिम्बपटोलाश्च द्वे निशे कटुरोहिणी
मञ्जिष्ठा मधुकं सिक्थं करञ्जोशीरसारिवाः ५८

तुत्थं च विपचेत्सम्यक्कल्कैरेभिर्घृतं बुधः
अस्य लेपात्प्ररोहन्ति सूक्ष्मनाडीव्रणा अपि ५९

मर्माश्रिताः क्लेदिनश्च गम्भीराः सरुजो व्रणाः ६०

बिन्दुघृतं जलोदरविरेचनादौ
चित्रकः शङ्खिनी पथ्या कंपिल्लास्त्रिवृतायुगम्
वृद्धदारुश्च शम्याको दन्ती दंतीफलं तथा ६१

कोशातकी देवदाली नीलिनी गिरिकर्णिका
सातला पिप्पलीमूलं विडङ्गं कुटकी तथा ६२

हेमक्षीरी च विपचेत्कल्कैरेभिः पिचून्मितैः
घृतप्रस्थं स्नुहीक्षीरे षट्पले तु पलद्वये ६३

अर्कक्षीरस्य मतिमांस्तत्सिद्धं गुल्मकुष्ठहृत्
हन्ति शूलमुदावर्त्तं शोथाध्मानं भगन्दरम् ६४

शमयत्युदराण्यष्टौ निपातं बिन्दुसङ्ख्यया

गोदुग्धेनोष्ट्रदुग्धेन कौलत्थेन शृतेन वा ६५

उष्णोदकेन वा पीत्वा बिन्दुवेगैर्विरेचयेत्
एतद्बिन्दुघृतं नाम नाभिलेपाद्वि रेचयेत् ६६

त्रिफलाद्यं घृतं नेत्ररोगे तिमिरादौ
त्रिफलाया रसप्रस्थं प्रस्थं वासारसोद्भवम्
भृङ्गराजरसप्रस्थं प्रस्थमाजं पयः स्मृतम्
दत्त्वा तत्र घृतप्रस्थं कल्कैः कर्षमितैः पृथक् ६७

त्रिफला पिप्पली द्राक्षा चन्दनं सैन्धवं बला
काकोली क्षीरकाकोली मेदा मरिचनागरम् ६८

शर्करा पुण्डरीकं च कमलं च पुनर्नवा
निशायुग्मं च मधुकं सर्वै रेभिर्विपाचयेत् ६९

नक्तान्ध्यं नकुलान्ध्यं च कण्डूं पिल्लं तथैव च
नेत्रस्त्रावं च पटलं तिमिरं काचकं जयेत् ७०

अन्येऽपि प्रशमं यान्ति नेत्ररोगाः सुदारुणाः
त्रैफलं घृतमेतद्धि पाने नस्यादिषूचितम् ७१

गौराद्यं घृतं व्रणे
द्वे हरिद्रे स्थिरा मूर्वा सारिवा चन्दनद्वयम्
मधुपर्णी च मधुकपद्मकेशरपद्मकैः ७२

उत्पलोशीरमेदाभिस्त्रिफलापञ्चवल्कलैः
कल्कैः कर्षमितैरेतैर्घृतप्रस्थं विपाचयेत् ७३

विसर्पलूताविस्फोटविषकीटव्रणापहम्
गौराद्यमिति विख्यातं सर्पिर्विषहरं परम् ७४

मयूरघृतं शिरोरोगादौ
बलामधुकरास्नाभिर्दशमूलफलत्रिकैः
पृथग्द्विपलिकैरेभिर्द्रोणनीरेण पाचयेत् ७५

मयूरं पक्षपित्तान्त्रयकृत्पादास्यवर्जितम्
पादशेषं शृतं नीत्वा क्षीरं दत्त्वा च तत्समम् ७६

घृतप्रस्थं पचेत्सम्यग्जीवनीयैः पिचून्मितैः
तत्सिद्धं शिरसः पीडां मन्यापृष्ठग्रहं तथा ७७

अर्दितं कर्णनासाऽक्षिजिह्वागलरुजो जयेत्
पाने नस्ये तथाऽभ्यङ्गे कर्णपूरेषु युज्यते ७८

हेमन्तकालशिशिरवसन्तेषु च शस्यते ७९

फलघृतं वन्ध्यादोषे
त्रिफला मधुकं कुष्ठं द्वे निशे कटुरोहिणी
विडङ्गं पिप्पली मुस्ता विशाला कट्फलं वचा ८०

द्वे मेदे द्वे च काकोल्यौ सारिवे द्वे प्रियङ्गुका
शतपुष्पा हिङ्गु रास्ना चन्दनं रक्तचन्दनम् ८१

जाती पुष्पं तुगाक्षीरी कमलं शर्करा तथा
अजमोदा च दन्ती च कल्कैरेतैश्च कार्षिकैः ८२

जीवद्वत्सैकवर्णाया घृतप्रस्थं च गोः क्षिपेत्
चतुर्गुणेन पयसा पचेदारगयगोमयैः ८३

सुतिथौ पुष्यनक्षत्रे मृद्भाराडे ताम्रजे तथा
ततः पिबेच्छुभदिने नारी वा पुरुषोऽथवा ८४

एतत्सर्पिर्नरः पीत्वा स्त्रीषु नित्यं वृषायते
पुत्रानुत्पादयेद्धीमान्वन्ध्याऽपि लभते सुतम् ८५

अनायुषं या जनयेद्या च सूता पुनः स्थिता
पुत्रं प्राप्नोति सा नारी बुद्धिमन्तं शतायुषम् ८६

एतत्फलघृतं नाम भरद्वाजेन भाषितम्
अनुक्तं लक्ष्मणामूलं क्षिपेत्तत्र चिकित्सकः ८७

लघुफलघृतं योनिरोगे
त्रिफलां द्वे सहचरे गुडूचीं सपुनर्नवाम्
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम् ८८

कल्कीकृत्य घृतप्रस्थं पचेत्क्षीरे चतुर्गुणे
तत्सिद्धंपाययेन्नारीं योनिशूलनिपीडिताम् ८९

पीडिता चलिता या च निःसृता विवृता च या
पित्तयोनिश्च विभ्रान्ता षण्ढयोनिश्च या स्मृता ९०

प्रपद्यन्ते हिताः स्थानं गर्भं गृह्णन्ति चासकृत्
एतत्फलघृतं नाम योनिदोषहरं परम् ९१

पञ्चतिक्तकं घृतं विषमज्वरादौ
वृषनिम्बामृताव्याघ्रीपटोलानां शृतेन च
कल्केन पक्वं सर्पिस्तु निहन्याद्विषमज्वरान्
पाण्डुं कुष्ठं विसर्पं च कृमीनर्शांसि नाशयेत् ९२

अथ तैल कल्पना
लाक्षादितैलं विषमज्वरादौ
लाक्षाढकं क्वाथयित्वा जलस्य चतुराढकैः
चतुर्थांशं शृतं नीत्वा तैलप्रस्थे विनिक्षिपेत् ९३

मस्त्वाढकं च गोदध्नस्तत्रैव विनियोजयेत्
शतपुष्पामश्वगन्धां हरिद्रां देवदारु च ९४

कुटकीं रेणुकां मूर्वां कुष्ठं च मधुयष्टिकाम्
चन्दनं मुस्तकं रास्नां पृथक्कर्षप्रमाणतः ९५

चूर्णयेत्तत्र निक्षिप्य साधयेन्मृदुवह्निना
अस्याभ्यङ्गात्प्रशाम्यन्ति सर्वेऽपि विषमज्वराः ९६

कासश्वासप्रतिश्यायत्रिकपृष्ठग्रहास्तथा
वातं पित्तमपस्मारमुन्मादं यक्षराक्षसान् ९७

कण्डूशूलं च दौर्गन्ध्यं गात्राणां स्फुरणं जयेत्
पुष्टगर्भा भवेदस्य गर्भिण्यभ्यङ्गतो भृशम् ९८

अङ्गारतैलं सर्वज्वरेषु
मूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी
बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी ९९

आरनालाढके तत्र तैलप्रस्थं विपाचयेत्
तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम् १००

नारायणतैलं वातरोगादौ
अश्वगन्धां बलां बिल्वं पाटलां बृहतीद्वयम्
श्वदंष्ट्राऽतिबलानिम्बं स्योनाकं च पुनर्नवाम् १०१

प्रसारिणीमग्निमन्थं कुर्याद्दशपलं पृथक्
चतुर्द्रोणे जले पक्त्वा पादशेषं शृतं नयेत् १०२

तैलाढकेन संयोज्य शतावर्या रसाढकम्
क्षिपेत्तत्र च गोक्षीरं तैलात्तस्माच्चतुर्गुणम् १०३

शनैर्विपाचयेदेभिः कल्कैर्द्विपलिकैः पृथक्
कुष्ठैलाचन्दनं मूर्वा वचा मांसी ससैन्धवैः १०४

अश्वगन्धावचारास्नाशतपुष्पेन्द्रदारुभिः
पर्णीचतुष्टयेनैव तगरेण च साधयेद् १०५

तत्तैलं नावनेऽभ्यङ्गे पाने बस्तौ न योजयेत्
पक्षाघातं हनुस्तम्भं मन्यास्तम्भं गलग्रहम् १०६

खल्लत्वं बधिरत्वं च गतिभङ्गं कटिग्रहम्
गात्रशोषेन्द्रियध्वंसावसृक्शुक्रज्वरक्षयान् १०७

अन्त्रवृद्धिं कुरण्डं च दन्तरोगं शिरोग्रहम्
पार्श्वशूलं च पाङ्गुल्यं बुद्धिहानिं च गृध्रसीम् १०८

अन्यांश्च विषमान्वाताञ्जयेत्सर्वाङ्गसंश्रयान्
अस्य प्रभावाद्वन्ध्याऽपि नारी पुत्रं प्रसूयते १०९

मर्त्यो गजो वा तुरगस्तैलादस्मात्सुखी भवेत्
यथा नारायणो देवो दुष्टदैत्यविनाशनः ११०

तथैव वातरोगाणां नाशनं तैलमुत्तमम् १११

वारुणीतैलं कम्परोगे
वारुण्या औत्तरं मूलं कुट्टितं तु पलत्रयम्
पलद्वादशकं तैलं क्षणं वह्नौ विपाचितम् ११२

निष्कत्रयं भक्तयुक्तं सेवेतास्माद्विनश्यति
हस्तकम्पः शिरःकम्पः कम्पो मन्याशिराभवः ११३

बलाद्यं तैलं वातव्याधौ

बलामूलकषायेण दशमूलश्रृतेन च
कुलत्थयवकोलानां क्वाथेन पयसा तथा ११४

अष्टाष्टभागयुक्तेन भागमेकं च तैलकम्
गणेन जीवनीयेन शतावर्येन्द्रदारुणा ११५

मञ्जिष्ठाकुष्ठशैलेयतगरागरुसैन्धवैः
वचापुनर्नवामांसीसारिवाद्वयपत्रकैः ११६

शतपुष्पाऽश्वगंधाभ्यामेलया च विपाचयेत्
गर्भार्थिनीनां नारीणां नराणांक्षीणरेतसाम् ११७

व्यायामक्षीणगात्राणां सूतिकानां च युज्यते
राजयोग्यमिदं तैलं सुखिनां च विशेषतः
बलातैलमिति ख्यातं सर्ववातामयापहम् ११८

प्रसारिणीतैलं वातकफरोगादौ
प्रसारिणीपलशतं जलद्रोणे विपाचयेत्
पादशिष्टः श्रृतो ग्राह्यस्तैलं दधि च तत्समम् ११९

काञ्जिकं च समं तैलात्क्षीरं तैलाच्चतुर्गुणम्
तैलात्तथाऽष्टमांशेन सर्वकल्कानि योजयेत् १२०

मधुकं पिप्पलीमूलं चित्रकः सैन्धवं वचा
प्रसारिणी देवदारु रास्ना च गजपिप्पली १२१

भल्लातः शतपुष्पा च मांसी चैभिर्विपाचयेत्
एतत्तैलं वरं पक्वं वातश्लेष्मामयाञ्जयेत् १२२

कौब्जं पङ्गुत्वखञ्जत्वे गृध्रसीमर्दितं तथा
हनुपृष्ठशिरोग्रीवाकटिस्तम्भान्विनाशयेत् १२३

अन्यांश्च विषमान्वातान्सर्वानाशु व्यपोहति १२४

माषादितैलं वातविकारादौ
माषा यवातसी क्षुद्रा मर्कटी च कुरण्टकः
गोकण्टष्टुण्टुकश्चैषां कुर्यात्सप्तपलं पृथक् १२५

चतुर्गुणाम्बुना पक्त्वा पादशेषं शृतं नयेत्
कर्पासास्थीनि बदरं शणबीजं कुलत्थकम् १२६

पृथक्चतुर्दशपलं चतुर्गुणजले पचेत्
चतुर्थांशावशिष्टं च गृह्णीयात्क्वाथमुत्तमम् १२७

प्रस्थैकं छागमांसस्य चतुःषष्टिपले जले
निक्षिप्य पाचयेद्धीमान्पादशेषं शृतं नयेत् १२८

तैलप्रस्थे ततः सर्वान्क्वाथानेतान्विनिक्षिपेत्
कल्कैरेभिश्च विपचेदमृताकुष्ठनागरैः १२९

रास्नापुनर्नवैरण्डैः पिप्पल्या शतपुष्पया
बलाप्रसारिणीभ्यां च मांस्या कटुकया तथा १३०

पृथगर्द्धपलैरेतैः साधयेन्मृदुवह्निना
हन्यात्तैलमिदं शीघ्रं ग्रीवास्तम्भापबाहुकौ १३१

अर्धाङ्गशोषमाक्षेपमूरुस्तम्भापतानकौ
शाखाकम्पं शिरः कम्पं विश्वाचीमर्दितं तथा
माषादिकमिदं तैलं सर्ववातविकारनुत् १३२

शतावरीतैलं वातादौ
शतावरी बलायुग्मं पर्ण्यौ गन्धर्वहस्तकः
अश्वगन्धा श्वदंष्ट्रश्च बिल्वः काशः कुरण्टकः १३३

एषां सार्द्धपलान्भागान्कल्पयेच्च विपाचयेत्
चतुर्गुणेन नीरेण पादशेषं शृतं नयेत् १३४

नियोज्य तैलप्रस्थे च क्षीरप्रस्थं विनिक्षिपेत्
शतावरीरसप्रस्थं जलप्रस्थं च योजयेत् १३५

शतावरीदेवदारुमांसीतगरचन्दनम्
शतपुष्पा बला कुष्ठमेला शैलेयमुत्पलम् १३६

ऋद्धिर्मेदा च मधुकं काकोली जीवकस्तथा
एषां कर्षसमैः कल्कैस्तैलं गोमयवह्निना १३७

पचेत्तेनैव तैलेन स्त्रीषु नित्यं वृषायते
नारी च लभते पुत्रं योनिशूलं च नश्यति १३८

अङ्गशूलं शिरः शूलं कामलां पाराडुतां गरम्
गृध्रसीप्लीहशोषांश्च मेहान्दराडापतानकम् १३९

सदाहं वातरक्तं च वातपित्तगदार्दितम्
असृग्दरं तथाध्मानं रक्तपित्तं च नश्यति १४०

शतावरीतैलमिदं कृष्णात्रेयेण भाषितम्
ओं नारायरायै स्वाहा उत्तराभिमुखो भूत्वा खनेत्खदिरशङ्कुना १४१

ओं सर्वव्याधिनाशिन्यै स्वाहा इत्युत्पाटनमन्त्रः
ओं कुमारजीविन्यै स्वाहा इति पानमन्त्रः १४२

कासीसाद्यं तैलमर्श आदौ
कासीसं लाङ्गली कुष्ठं शुराठी कृष्णा च सैन्धवम्
मनः शिलाश्वमारश्च विडङ्गं चित्रको वृषः १४३

दन्ती कोशातकीबीजं हेमाह्वा हरितालकम्
कल्कैः कर्षमितैरेतैस्तैलप्रस्थं विपाचयेत् १४४

स्नुह्यर्कपयसी दद्यात्पृथग्द्विपलसंमिते
चतुर्गुणं गवां मूत्रं दत्त्वा सम्यक्प्रसाधयेत् १४५

कथितं खरनादेन तैलमर्शोविनाशनम्
क्षारवत्पातयत्येतदर्शांस्यभ्यङ्गतो भृशम्
वलीर्न दूषयत्येतत्क्षारकर्मकरं स्मृतम् १४६

पिण्डतैलं वातरक्ते
मञ्जिष्ठासारिवासर्जयष्टीसिक्थैः पलोन्मितैः
पिण्डाख्यं साधयेत्तैलमभ्यङ्गात् वातरक्तनुत् १४७

अर्कतैलं कुष्ठरोगादौ
अर्कपत्ररसे पक्वं हरिद्राकल्कसंयुतम्
नाशयेत्सार्षपं तैलं पामां कच्छूं विचर्चिकाम् १४८

मरिचादितैलं कुष्ठव्रणादौ
मरिचं हरितालं च त्रिवृतं रक्तचन्दनम्
मुस्तं मनःशिला मांसी द्वे निशे देवदारु च १४९

विशाला करवीरं च कुष्ठमर्कपयस्तथा
तथैव गोमयरसं कुर्यात्कर्षमितान्पृथक् १५०

विषं चार्द्धपलं देयं प्रस्थं च कटुतैलकम्
गोमूत्रं द्विगुणं दद्याज्जलं च द्विगुणं भवेत् १५१

मरिचाद्यमिदं तैलं सिध्मकुष्ठहरं परम्
जयेत्कुष्ठानि सर्वाणि पुण्डरीकं विचर्चिकाम्
पामां श्वित्राणि रक्तं च कण्डूं कच्छूं प्रणाशयेत् १५२

त्रिफलादितैलमरूंषिकायाम्
त्रिफलाऽरिष्टभूनिम्बं द्वे निशे रक्तचन्दनम्
एतैः सिद्धमरूंषीणां तैलमभ्यञ्जने हितम् १५३

निम्बबीजतैलं पलिते
भावयेन्निम्बबीजानि भृङ्गराजरसेन हि
तथाऽसनस्य तोयेन तत्तैलं हन्ति नस्यतः १५४

अकालपलितं सद्यः पुंसां दुग्धान्नभोजिनाम् १५५

यष्टीमधुकतैलं खलिते
यष्टीमधुकक्षाराभ्यां नवधात्रीफलैः शृतम्
तैलं नस्यकृतं कुर्यात्केशाञ्श्मश्रूणि सङ्घशः १५६

करञ्जतैलमिन्द्रलुप्तरोगे
करञ्जश्चित्रको जाती करवीरश्च पाचितम्
तैलमेभिर्द्रुतं हन्यादभ्यङ्गादिन्द्रलुप्तकम् १५७

नीलिकाद्यं तैलं केशकल्पादौ
नीलिका केतकीकन्दं भृङ्गराजः कुरण्टकः
तथाऽर्जुनस्य पुष्पाणि बीजकात्कुसुमान्यपि १५८

कृष्णास्तिलाश्च तगरं समूलं कमलं तथा
अयोरजः प्रियङ्गुश्च दाडिमत्वग्गुडूचिका १५९

त्रिफला पद्मपङ्कश्च कल्कैरेभिः पृथक्पृथक्
कर्षमात्रः पचेत्तैलं त्रिफलाक्वाथसंयुतम् १६०

भृङ्गराजरसेनैव सिद्धं केशस्थिरीकृतम्
अकालपलितं हन्ति दारुणं चोपजिह्विकाम् १६१

भृङ्गराजतैलमकालपलितादौ
भृङ्गराजरसेनैव लोहकिट्टं फलत्रिकम्
सारिवां च पचेत्कल्कैस्तैलं दारुणनाशनम्
अकालपलितं कण्डूमिन्द्रलुप्तं च नाशयेत् १६२

इरिमेदाद्यं तैलं मुखदन्तरोगादौ
इरिमेदत्वचं क्षुण्णां पचेच्छतपलोन्मिताम्
जलद्रोणेततः क्वाथं गृह्णीयात्पादशेषितम् १६३

तैलस्यार्द्धाढकं दत्त्वा कल्कैः कर्षमितैः पचेत्
इरिमेदलवङ्गाभ्यां गैरिकागरुपद्मकैः १६४

मञ्जिष्ठालोध्रमधुकैर्लाक्षान्यग्रोधमुस्तकैः
त्वग्जातीफलकर्पूरकङ्कोलखदिरैस्तथा १६५

पतङ्गधातकीपुष्पसूक्ष्मैलानागकेशरैः
कट्फलेन च संसिद्धं तैलं मुखरुजं जयेत् १६६

प्रदुष्टमांसं पलितं शीर्णदन्तं च सौषिरम्
श्यावदन्तं प्रहर्षं च विद्रधिं कृमिदन्तकम् १६७

दन्तस्फुटं च दौर्गन्ध्यं जिह्वाताल्वोष्ठजां रुजम् १६८

जात्यादितैलं नाडीव्रणादौ
जातीनिम्बपटोलानां नक्तमालस्य पल्लवाः
सिक्थं समधुकं कुष्ठं द्वेनिशे कटुरोहिणी १६९

मञ्जिष्ठापद्मकं लोध्रमभया नीलमुत्पलम्
तुत्थकं सारिवाबीजं नक्तमालस्य दापयेत् १७०

एतानि समभागानि पिष्ट्वा तैलं विपाचयेत्

नाडीव्रणे समुत्पन्ने स्फोटके कच्छुरोगिषु १७१

सद्यः शस्त्रप्रहारेषु दग्धविद्धेषु चैव हि
नखदन्तक्षते देहे व्रणे दुष्टे प्रशस्यते १७२

हिङ्ग्वादितैलं कर्णशूले
हिङ्गुतुम्बुरुशुण्ठीभिः कटुतैलं विपाचयेत्
तस्य पूरणमात्रेण कर्णशूलं प्रणश्यति १७३

बिल्वादितैलं बाधिर्ये
बालबिल्वानि गोमूत्रे पिष्ट्वा तैलं विपाचयेत्
साजक्षीरं च नीरं च बाधिर्यं हन्ति पूरणात् १७४

क्षारतैलं कर्णरोगेषु
बालमूलकशिम्बीनां क्षारः क्षारयुगं तथा
लवणानि च पञ्चैव हिङ्गुशिग्रु महौषधम् १७५

देवदारु वचा कुष्ठं शतपुष्पा रसाञ्जनम्
ग्रन्थिकं भद्रमुस्तं च कल्कैः कर्षमितैः पृथक् १७६

तैलप्रस्थं च विपचेत्कदलीबीजपूरयोः
रसाभ्यां मधुशुक्तेन चातुर्गुण्यमितेन च १७७

पूयस्रावं कर्णनादं शूलं बधिरतां कृमीन्
अन्यांश्च कर्णजान्रोगान्मुखरोगांश्च नाशयेत् १७८

मधुशुक्तम्
जम्बीराणां फलरसः प्रस्थैकः कुडवोन्मितम्
माक्षिकं तत्र दातव्यं पलैका पिप्पली स्मृता १७९

एतदेकीकृतं सर्वं मृद्भाण्डे च निधापयेत्

यवाम्भो मधुसंयुक्तं शृङ्गवेरगुडान्वितम्
धान्यराशौ त्रिरात्रस्थं मधुशुक्तमुदाहृतम् १८०

पाठादितैलं पीनसे
पाठा द्वे च निशे मूर्वा पिप्पली जातिपल्लवैः
दन्त्या च तैलं संसिद्धं नस्यं स्याद्दुष्टपीनसे १८१

व्याघ्रीतैलं पीनसे
व्याघ्रीदन्तीवचाशिग्रुतुलसीव्योषसैन्धवैः
कल्कश्च पाचनं तैलं पूतिनासागदापहम् १८२

कुष्ठादितैलं छिक्कायां
कुष्ठंबिल्वकणाशुण्ठीद्राक्षाकल्ककषायवत्
साधितं तैलमाज्यं वा नस्यात्क्षवथुनाशनम् १८३

गृहधूमतैलं नासार्शसि
गृहधूमकणादारुक्षारनक्ताह्वसैन्धवैः
सिद्धं शिखरिबीजैश्च तैलं नासार्शसां हितम् १८४

वज्रतैलं कुष्ठादौ
वज्रीक्षीरं रविक्षीरं द्रवं धत्तूरचित्रजम् १८५

महिषीविड्भवं द्रावं सर्वांशं तिलतैलकम्
पचेत्तैलावशेषं च गोमूत्रेऽथ चतुर्गुणे १८६

तैलावशेषं पक्त्वा च तत्तैलं प्रस्थमात्रकम्
गन्धकाग्निशिलातालं विडङ्गातिविषाविषम् १८७

तिक्तकोशातकीकुष्ठवचामांसीकटुत्रयम्
पीतदारु च यष्ट्याह्वं स्वर्जिकाक्षारजीरकम् १८८

देवदारु च कर्षांशं चूर्णं तैले विनिक्षिपेत्
वज्रतैलमिदं ख्यातमभ्यङ्गात्सर्वकुष्ठनुत् १८९

करवीरतैलं लोमशातनार्थम्
करवीरशिफादन्ती त्रिवृत्कोशातकी फलम्
रम्भाक्षारोदके तैलं प्रशस्तं लोमशातनम् १९०

चन्दनादितैलं क्षयरोगादौ
चन्दनाम्बुनखैर्याम्यं यष्टीशैलेयपद्मकम्
मञ्जिष्ठा सरलं दारु सेव्यैलं पूतिकेसरम् १९१

पत्रकैलं मुरामांसी कङ्कोलं वनिताऽम्बुदम्
हरिद्रा सारिवा तिक्ता लवङ्गागरुकुङ्कुमम् १९२

त्वग्रेणुनलिका चेति तैलं मस्तु चतुर्गुणम्
लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्द्धनम् १९३

अपस्मारज्वरोन्मादकृत्याऽलक्ष्मीविनाशनम्
आयुः पुष्टिकरं चैव वशीकरणमुत्तमम्
विशेषात्क्षयरोगघ्नं रक्तपित्तहरं परम् १९४

वचादितैलं गण्डमालायाम्
वचां शटीं हरिद्रे द्वे देवदारु महौषधी
हरीतकीमतिविषां मुस्तकेन्द्रयवान्समान् १९५

एतान्दशपलान्भागांश्चतुर्द्रोणेऽम्भसः पचेत्
चक्रमर्दरसैस्तैलं कटुकं मृदुनाऽग्निना १९६

पादशेषे विनिक्षिप्य सिन्दूरमवतारयेत्
एतत्तैलं निहन्त्याशु गण्डमालां सुदारुणाम् १९७

लाङ्गलीतैलं गगडमालायाम्
निर्गुगडीस्वरसे तैलं लाङ्गलीमूलकल्कितम्
तैलं नस्यान्निहन्त्याशु गगडमालां सुदारुणाम् १९८

धत्तूरादितैलं वातरोगादौ
धत्तूररसमादाय हयमारान्तिकारसम्
भृङ्गराजरसश्चैव सारिणी निम्बपत्रकम् १९९

शोभाञ्जनश्चित्रकश्च ग्रश्वगन्धा प्रसारिणी
शिरीषः कुटजोऽनन्ता शाल्मली नक्तपत्रकम् २००

रविप्रियो महानिम्बो डिगिडघोषा महेरणा
बला ज्योतिष्मती चैव श्यामाकश्चक्रमर्दकः २०१

एतैस्तु रसमादाय तैलतुल्यं च दीयते
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् २०२

मरिचं त्रिवृता दन्ती हरितालं मनः शिला
कम्पिल्लको गन्धकश्च खदिरः पिप्पली वचा २०३

रसाञ्जनं च सिन्दूरं श्रीवासो रक्तचन्दनम्
इरिमेदस्तथा तुम्बी मञ्जिष्ठा सिन्दुवारकः २०४

करवीरजटा रास्ना विश्वा श्रेष्ठा च पौष्करम्
शटी तालीसपत्रं च प्रियङ्गू रेणुका तथा २०५

चातुर्जातकमञ्जीरं कङ्कोलं जातिपत्रिका
ज्योतिष्मती च पलिका विषस्य द्विपलं भवेत् २०६

ग्राढकं कटुतैलस्य गोमूत्रं च चतुर्गुणम्
मृत्पात्रे लोहपात्रे च शनैर्मृद्वग्नि पचेत् २०७

मज्जाश्रितं त्वग्गतं च वातं चास्थिगतं तथा
ऊरुग्रहं चाढ्यवातं कृच्छ्रं दराडापतानकम् २०८

कुब्जत्वं चाथ शोथं च पद्माघातं तथाऽदितम्
हनुस्तम्भं शिरः कम्पं मूर्च्छितं दृष्टिविभ्रमम् २०९

अपस्मारं तथोन्मादं तथा चैवापतन्त्रकम्
आद्मेपकं चास्थिभग्नं सन्धिभग्नं च नाशयेत् २१०

इति श्रीशार्ङ्गधरसंहितायां मध्यखराडे स्नेहकल्पनानाम नवमोऽध्यायः

अथासवारिष्टादिसन्धानकल्पनानाम दशमोऽध्यायः

आसवारिष्टसंज्ञा
द्रवेषु चिरकालस्थं द्रव्यं यत्संधितं भवेत्
आसावारिष्टभेदैस्तु प्रोच्यते भेषजोचितम् १

आसवारिष्टयोर्भेदः
यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः
अरिष्टः क्वाथसाध्यः स्यात्तयोर्मानं पलोन्मितम् २

अनुक्तमानारिष्टेषु जलादिमानव्यवस्था
अनुक्तमानारिष्टेषु द्रवद्रोणे तुलां गुडम्
द्मौद्रं द्मिपेद् गुडादर्द्धं प्रद्मेपं दशमांशिकम् ३

ज्ञेयः शीतरसःसीधुरपक्वमधुरद्रवैः
सिद्धः पक्वरसः सीधुः सम्पक्वमधुरद्रवैः ४

सुराप्रसन्नादीनां मद्यभेदानां लद्मणानि
परिपक्वान्नसन्धानसमुत्पन्नां सुरां जगुः
सुरामराडः प्रसन्ना स्यात्ततः कादम्बरी घना ५

तदधो जगलो ज्ञेयो मेदको जगलाद्घनः
पक्वोऽसौ हृतसारः स्यात्सुराबीजं च किरावकम् ६

वारुणीशुक्तयोर्लक्षणे
यत्तालखर्जूररसैः संधिता सा हि वारुणी
कन्दमूलफलादीनि सस्नेहलवणानि च
यत्र द्रवेऽभिषूयन्ते तच्छुक्तमभिधीयते ७

चुक्रलक्षणम्
विनष्टमम्लतां यातं मद्यं वा मधुरद्रवः
विनष्टः सन्धितो यस्तु तच्चुकमभिधीयते ८

गुडशुक्तेक्षुशुक्तद्राक्षाशुक्तानां लक्षणानि
गुडाम्बुना सतैलेन कन्दमूलफलैस्तथा
सन्धितं चाम्लतां यातं गुडशुक्तं तदुच्यते ९
एवमेवेक्षुशुक्तं स्यान्मृद्वीकासम्भवं तथा १०

तुषाम्बुसौवीरयोर्लक्षणे
तुषाम्बु सन्धितं ज्ञेयमामैर्विदलितैर्यवैः
यवैस्तु निस्तुषैः पक्वैः सौवीरं सन्धितं भवेत् ११

काञ्जिकसण्डाक्योर्लक्षणे
कुल्माषधान्यमण्डादिसन्धितं काञ्जिकं विदुः
सण्डाकी सन्धिता ज्ञेया मूलकैः सर्षपादिभिः १२

अथासवाः
तत्रादावुशीरासवो रक्तपित्तादौ
उशीरं बालकं पद्मं काश्मरीं नीलमुत्पलम्
प्रियङ्गुं पद्मकं लोध्रं मञ्जिष्ठां धन्वयासकम् १३

पाठां किराततिक्तं च न्यग्रोधोदुम्बरं शटीम्

पर्पटं पुरडरीकं च पटोलं काञ्चनारकम् १४

जंबूशाल्मलिनिर्यासं प्रत्येकं पलसम्मितान्
भागान्सुचूर्णितान्कृत्वा द्राक्षायाः पलविंशतिम् १५

धातकीं षोडशपलां जलद्रोणद्वये क्षिपेत्
शर्करायास्तुलां दत्त्वा क्षौद्रस्यैकतुलां तथा १६

मासैकं स्थापयेद्भारडे मांसीमरिचधूपिते
उशीरासव इत्येष रक्तपित्तविनाशनः
पारडुकुष्ठप्रमेहार्शः कृमिशोथहरस्तथा १७

कुमार्यासवः प्रमेहादौ
सुपक्वरससंशुद्धं कुमार्याः पत्रमाहरेत्
यत्नेन रसमादाय पात्रे पाषाणमृरमये १८

द्रोणे गुडतुलां दत्त्वा घृत भारडे निधापयेत्
माक्षिकं पक्वलोहं च तस्मिन्नर्द्धतुलां क्षिपेत् १९

कटुत्रिकं लवङ्गं च चातुर्जातकमेव च
चित्रकं पिप्पलीमूलं विडङ्गं गजपिप्पली २०

चविकं हपुषा धान्यं क्रमुकं कटुरोहणी
मुस्ता फलत्रिकं रास्ना देवदारु निशाद्वयम् २१

मूर्वा मधुरसा दन्ती मूलं पुष्करसम्भवम्
बला चातिबला चैव कपिकच्छुस्त्रिकरटकम् २२

शतपुष्पा हिङ्गुपत्री आकल्लकमुटिङ्गणम्
पुनर्नवाद्वयं लोध्रं धातुमाक्षिकमेव च २३

एषां चार्द्धपलं दत्त्वा धातक्यास्तु पलाष्टकम्
पलं चार्द्धपलं चैव पलद्वयमुदाहृतम् २४

वपुर्वयः प्रमाणेन बलवर्णाग्निदीपनम्
बृंहणं रोचनं वृष्यं पक्तिशूलनिवारणम् २५

अष्टावुदरजान्रोगान्क्षयमुग्रं च नाशयेत्
विंशतिं मेहजान्रोगानुदावर्त्तमपस्मृतिम् २६

मूत्रकृच्छ्रमपस्मारं शुक्रदोषं तथाऽश्मरीम्
कृमिजं रक्तपित्तं च नाशयेत्तु न संशयः २७

पिप्पल्याद्यासवः क्षयादौ
पिप्पली मरिचं चव्यं हरिद्रा चित्रको घनः २८

विडङ्गं क्रमुको लोध्रः पाठा धात्र्येलवालुकम्
उशीरं चन्दनं कुष्ठं लवंगं तगरं तथा २९

मांसी त्वगेलापत्रं च प्रियङ्गुर्नागकेशरम्
एषामर्द्धपलान्भागान्सूक्ष्मचूर्णीकृताञ्छुभान् ३०

जलद्रोणद्वये क्षिप्त्वा दद्याद् गुडतुलात्रयम्
पलानि दश धातक्या द्राक्षा षष्टिपला भवेत् ३१

एतान्येकत्र संयोज्य मृद्भाण्डे च विनिक्षिपेत्
ज्ञात्वागतरसं सर्वं पाययेदग्न्यपेक्षया ३२

क्षयं गुल्मोदरं कार्श्यं ग्रहणीं पांडुतां तथा
अर्शांसि नाशयेच्छीघ्रं पिप्पल्याद्यासवस्त्वयम् ३३

लोहासवः पाण्ड्वादौ

लोहचूर्णं त्रिकटुकं त्रिफलां च यवानिकाम्
विडङ्गं मुस्तकं चित्रं चतुःसङ्ख्यापलंपृथक् ३४

धातकीकुसुमानां तु प्रक्षिपेत्पलविंशतिम्
चूर्णीकृत्य ततः क्षौद्रं चतुःषष्टिपलं क्षिपेत् ३५

दद्याद् गुडतुलां तत्र जलद्रोणद्वयं तथा
घृतभाराडे विनिक्षिप्य निदध्यान्मासमात्रकम् ३६

लोहासवममुं मत्तर्यः पिबेद्वह्निकरं परम्
पाराडुश्वयथुगुल्मानि जठरारायर्शसां रुजम् ३७

कुष्ठं प्लीहामयं कराडूं कासं श्वासं भगन्दरम्
अरोचकं च ग्रहणीं हृद्रोगं च विनाशयेत् ३८

अथारिष्टाः
तत्रादौ मृदीकारिष्टोऽश प्रभृतिरोगेषु
मृद्वीकायाः पलशतं चतुर्द्रोणेऽम्भसः पचेत्
द्रोणशेषे सुशीते च पूते तस्मिन्प्रदापयेत् ३९

तुले द्वे क्षौद्रखराडाभ्यां धातक्याः प्रस्थमेव च
कङ्कोलकं लवङ्गं च फलं जात्यास्तथैव च ४०

पलांशकं च मरिचत्वगेलापत्रकेसराः
पिप्पली चित्रकं चव्यं पिप्पलीमूलरेणुके ४१

घृतभाराडे विनिक्षिप्य चन्दनागरुधूपिते
कर्पूरवासितो ह्येष ग्रहराया दीपनः परः ४२

अर्शसां नाशने श्रेष्ठ उदावर्त्तस्य गुल्मनुत्
जठरकृमिकुष्ठानि व्रणास्तु विविधास्तथा ४३

कुटजारिष्टो ज्वरादौ
तुलां कुटजमूलस्य मृद्वीकाऽर्द्धतुलां तथा
मधूकपुष्पकाश्मर्यौ भागान्दशपलोन्मितान् ४४

चतुर्द्रोणेऽम्भसः पक्त्वा क्वाथे द्रोणावशेषिते
धातक्या विंशतिपलं गुडस्य च तुलां क्षिपेत् ४५

मासमात्रं स्थितो भाण्डे कुटजारिष्टसञ्ज्ञितः
ज्वरान्प्रशमयेत्सर्वान्कुर्यात्तीक्ष्णं धनञ्जयम् ४६

विडङ्गारिष्टो विद्रध्यादौ
विडङ्गं ग्रन्थिकं रास्ना कुटजत्वक्फलानि च ४७

पाठैलवालुकं धात्री भागान्पञ्चपलान्पृथक्
अष्टद्रोणेऽम्भसः पक्त्वा कुर्याद् द्रोणावशेषितम् ४८

पूते शीते क्षिपेत्तत्र क्षौद्रं पलशतत्रयम्
धातकीं विंशतिपलां त्रिजातं द्विपलं तथा ४९

प्रियङ्गुकाञ्चनाराणां सलोध्राणां पलंपलम्
व्योषस्य च पलान्यष्टौ चूर्णीकृत्य प्रदापयेत् ५०

घृतभाण्डे विनिक्षिप्य मासमेकं विधारयेत्
ततः पिबेद्यथाऽह तु जयेद्विद्रधिमूर्जितम् ५१

ऊरुस्तम्भाश्मरीमेहान्प्रत्यष्ठीलाभगन्दरान्
गण्डमालां हनुस्तम्भं विडङ्गारिष्टसञ्ज्ञितः ५२

देवदार्वाद्यरिष्टः प्रमेहादौ
तुलाऽर्द्ध देवदारु स्याद्वासा च पलविंशतिः
मञ्जिष्ठेन्द्रयवा दन्ती तगरं रजनीद्वयम् ५३

रास्रा कृमिघ्नं मुस्तं च शिरीषं खदिरार्जुनौ
भागान्दशपलान्दद्याद्यवान्या वत्सकस्य च ५४

चन्दनस्य गुडूच्याश्च रोहिरायाश्चित्रकस्य च
भागानष्टपलानेतानष्टद्रोरोऽम्भसः पचेत् ५५

द्रोराशेषे कषाये च पूते शीते प्रदापयेत्
धातक्याः षोडशपलं माच्चिकस्य तुलात्रयम् ५६

व्योषस्य द्विपलं दद्यात् त्रिजातस्य चतुष्पलम्
चतुष्पलं प्रियङ्गोश्च द्विपलं नागकेशरम् ५७

सर्वारायेतानि सञ्चूरार्य घृतभाराडे निधापयेत्
मासादूर्ध्वं पिबेदेनं प्रमेहं हन्ति दुर्जयम् ५८

वातरोगान्ग्रहरायर्शो मूत्रकृच्छ्राणि नाशयेत्
देवदार्वादिकोऽरिष्टः कराडूकुष्ठविनाशनः ५९

खदिरारिष्टः कुष्ठादौ
खदिरस्य तुलाऽर्द्ध तु देवदारु च तत्समम्
वाकुची द्वादशपला दार्वी स्यात्पलविंशतिः ६०

त्रिफला विंशतिपला ह्यष्टद्रोरोऽम्भसः पचेत्
कषाये द्रोराशेषे च पूते शीते विनिच्चिपेत् ६१

तुलाद्वयं माच्चिकस्य तुलैका शर्करा मता
धातक्या विंशतिपलं कङ्कोलं नागकेशरम् ६२

जातीफलं लवङ्गैलात्वक्पत्राणि पृथक्पृथक्
पलोन्मितानि कृष्णाया दद्यात्पलचतुष्टयम् ६३

घृतभाराडे विनिक्षिप्य मासादूर्ध्वं पिबेन्नरः
महाकुष्ठानि हृद्रोगं पाराडुरोगार्बुदे तथा ६४

गुल्मं ग्रन्थिं कृमीन्कासं श्वासं प्लीहोदरं जयेत्
एष वै खदिरारिष्टः सर्वकुष्ठनिवारणः ६५

बब्बूलारिष्टः क्षयकासादौ
तुलाद्वयं तु बब्बूल्याश्चतुर्द्रोणे जले पचेत्
द्रोणशेषे रसे शीते गुडस्य त्रितुलां क्षिपेत् ६६

धातकीं षोडशपलां कृष्णां च द्विपलां तथा
जातीफलानि कङ्कोलमेलात्वक्पत्रकेशरम् ६७

लवङ्गं मरिचं चैव पलिकान्युपकल्पयेत्
मासं भाराडे स्थितस्त्वेष बब्बूलारिष्टको जयेत्
क्षयं कुष्ठमतीसारं प्रमेहश्वासकासकम् ६८

द्राक्षाऽरिष्टः पुष्टयादौ
द्राक्षातुलाऽर्द्ध द्विद्रोणे जलस्य विपचेत् सुधीः
पादशेषे कषाये च पूते शीते विनिक्षिपेत् ६९

गुडस्य द्वितुलां तत्र त्वगेलापत्रकेशरम्
प्रियङ्गुर्मरिचं कृष्णा विडङ्गं चेति चूर्णयेत् ७०

पृथक्पलोन्मितैर्भागैस्ततो भाराडे निधापयेत्
समन्ततो घट्टयित्वा पिबेज्जातरसंततः ७१

उरःक्षतं क्षयं हन्ति कासश्वासगलामयान्
द्राक्षाऽरिष्टाह्वयः प्रोक्तो बलकृन्मलशोधनः ७२

रोहितकारिष्टो गुदजग्रहरायादौ

रोहितकतुलामेकां चतुर्द्रोणे जले पचेत्
पादशेषे रसे शीते पूते पलशतद्वयम् ७३

दद्याद् गुडस्य धातक्याः पलषोडशिका मता
पञ्चकोलं त्रिजातं च त्रिफलां च विनिक्षिपेत् ७४

चूर्णयित्वापलांशेन ततोभाण्डेनिधापयेत्
मासादूर्ध्वं च पिबतां गुदजा यान्ति संक्षयम् ७५

ग्रहणीपाण्डुहृद्रोगप्लीहगुल्मोदराणि च
कुष्ठशोफारुचिहरो रोहितारिष्टसञ्ज्ञितः ७६

दशमूलारिष्टो वातादौ
पर्ण्यौ बृहत्यौ गोकण्टो बिल्वोऽग्निमन्थकोऽरलुः ७७

पाटला काश्मरी चेति दशमूलमिहोच्यते
दशमूलानि कुर्वीत भागैः पञ्चपलैःपृथक् ७८

पञ्चविंशत्पलं कुर्याच्चित्रकं पौष्करं तथा
कुर्याद्विंशपलं लोध्रं गुडूची तत्समा भवेत् ७९

पलैः षोडशभिर्धात्री रविसङ्ख्यैर्दुरालभा
खदिरो बीजसारश्च पथ्या चेति पृथक्पलैः ८०

अष्टभिर्गणितः कुष्ठं मञ्जिष्ठा देवदारु च
विडङ्गं मधुकं भार्ङ्गी कपित्थोऽक्ष पुनर्नवा ८१

चव्यं मांसी प्रियङ्गुश्च सारिवा कृष्णजीरकम्
त्रिवृता रेणुकं रास्ना पिप्पली क्रमुकः शटी ८२

हरिद्रा शतपुष्पा च पद्मकं नागकेशरम्

मुस्तमिन्द्रयवः शुण्ठी जीवकर्षभकौ तथा ८३

मेदा चान्या महामेदा काकोल्यौ ऋद्धिवृद्धिके
कुर्यात्पृथग्द्विपलिकान्पचेदष्टगुणे जले ८४

चतुर्थांशं शृतं नीत्वा मृद्भाण्डे संनिधापयेत्
चतुःषष्टिपलां द्राक्षां पचेन्नीरे चतुर्गुणे ८५

त्रिपादशेषं शीतं च पूर्वक्वाथे शृतं क्षिपेत्
द्वात्रिंशत्पलिकं क्षौद्रं दद्याद् गुणचतुःशतम् ८६

त्रिंशत्पलानि धातक्याः कङ्कोलं जलचन्दनम्
जातीफलं लवङ्गं च त्वगेलापत्रकेशरम् ८७

पिप्पली चेति संचूर्ण्य भागैर्द्विपलिकः पृथक्
शाणमात्रां च कस्तूरीं सर्वमेकत्र निक्षिपेत् ८८

भूमौ निखातयेद्भाण्डं ततो जातरसं पिबेत्
कतकस्य फलं क्षिप्त्वा रसं निर्मलतां नयेत् ८९

ग्रहणीमरुचिं श्वासं कासं गुल्मं भगन्दरम्
वातव्याधिं क्षयं छर्दिं पाण्डुरोगं च कामलाम् ९०

कुष्ठान्यर्शांसि मेहांश्च मन्दाग्निमुदराणि च
शर्करामश्मरीं मूत्रकृच्छ्रं धातुक्षयं जयेत् ९१

कृशानां पुष्टिजननो वन्ध्यानां गर्भदः परः
अरिष्टो दशमूलाख्यस्तेजः शुक्रबलप्रदः ९२

इति श्रीशार्ङ्गधरसंहितायां मध्यखण्डे आसवारिष्टादिसन्धानकल्पना नाम दशमोऽध्यायः

## अथ धातुशोधनमारणकल्पनानामैकादशोऽध्यायः

अथ धातूनां समुदायेन शोधनमारणम्
तत्रादौ धातूनां संख्या नामानि च
स्वर्णताराारताम्राणि नागवङ्गौ च तीक्ष्णकम्
धातवः सप्त विज्ञेयास्ततस्ताञ्छोधयेद् बुधः १

धातुशोधनविधिः
स्वर्णताराारताम्रायः पत्राण्यग्नौ प्रतापयेत्
निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके २

गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा
एवं स्वर्णादिलोहानां विशुद्धिः सम्प्रजायते ३

नागवङ्गयोः शोधनविधिः
नागवङ्गौ प्रतप्तौ च गालितौ तौ निषेचयेत्
त्रिधा त्रिधा विशुद्धिः स्याद्रविदुग्धेन च त्रिधा ४

अथ स्वर्णमारणम्
स्वर्णाच्च द्विगुणं सूतमम्लेन सह मर्दयेत्
तद्गोलकसमं गन्धं निदध्यादधरोत्तरम् ५

गोलकं च ततो रुन्ध्याच्छरावदृढसम्पुटे
त्रिंशद्वनोपलैर्दद्यात्पुटान्येवं चतुर्दश
निरुत्थं जायते भस्म गन्धो देयः पुनः पुनः ६

स्वर्णमारणे द्वितीयो विधिः
काञ्चने गालिते नागं षोडशांशेन निक्षिपेत् ७

चूर्णयित्वा तथाऽम्लेन घृष्ट्वा कृत्वा च गोलकम्
गोलकेन समं गन्धं दत्त्वा चैवाधरोत्तरम् ८

शरावसम्पुटे धृत्वा पुटेत् त्रिंशद्वनोपलैः
एवं सप्तपुटैर्हेम निरुत्थं भस्म जायते ९

तृतीयो विधिः
काञ्चनाररसैर्घृष्ट्वा समसूतकगन्धयोः
कज्जल्या हेमपत्राणि लेपयेत्सममात्रया १०

काञ्चनारत्वचः कल्को मूषायुग्मं प्रकल्पयेत्
धृत्वा तत्संपुटे गोलं मृगमूषासंपुटे च तत् ११

निधाय संधिरोधं च कृत्वा संशोष्य गोमयैः
वह्निं खरतरं कुर्यादेवं दद्यात्पुटत्रयम्
निरुत्थं जायते भस्म सर्वकार्येषु योजयेत् १२

चतुर्थो विधिः
काञ्चनारप्रकारेण लाङ्गली हन्ति काञ्चनम्
ज्वालामुखी यथा हन्यात्तथा हन्ति मनः शिला १३

पञ्चमो विधिः
शिलासिन्दूरयोश्चूर्णं समयोरर्कदुग्धकैः १४

सप्तैव भावना दद्याच्छोषयेच्च पुनः पुनः
ततस्तु गालिते हेम्नि कल्कोऽय दीयते समः १५

पुनर्धमेदतितरां यथा कल्को विलीयते
एवं वेलात्रयं दद्यात्कल्कं हेममृतिर्भवेत् १६

षष्ठो विधिः
पारावतमलैर्लिम्पेदथवा कुक्कुटोद्भवैः
हेमपत्राणि तेषां च प्रदद्यादधरोत्तरम् १७

गन्धचूर्णं समं दत्त्वा शरावयुगसम्पुटे
प्रदद्यात्कुक्कुटपुटं पञ्चभिर्गोमयोपलैः १८

एवं नवपुटान्दद्याद्दशमं च महापुटम्
त्रिंशद्वनोपलैर्देयं जायते हेमभस्मकम् १९

स्वर्णभस्मगुणाः
सुवर्णं च भवेत्स्वादु तिक्तं स्निग्धं हिमं गुरु
बुद्धिविद्यास्मृतिकरं विषहारि रसायनम् २०

रजतमारणे प्रथमो विधिः
भागैकं तालकं मर्द्यं जम्भेनाम्लेन केनचित्
तेन भागत्रयं तारपत्राणि परिलेपयेत् २१

धृत्वा मूषापुटे रुद्ध्वा पुटेत्त्रिंशद्वनोपलैः
समुद्धृत्य पुनस्तालं दत्त्वा रुद्ध्वा पुटे पचेत्
एवं चतुर्दशपुटैस्तारभस्म प्रजायते २२

द्वितीयो विधिः
स्नुहीक्षीरेण सम्पिष्टं माक्षिकं तेन लेपयेत् २३

तालकस्य प्रकारेण तारपत्राणि बुद्धिमान्
पुटेच्चतुर्दशपुटैस्तार भस्म प्रजायते २४

आर [पित्तल] मारणविधिः
अर्कक्षीरेण सम्पिष्टो गन्धकस्तेन लेपयेत्
समेनारस्य पत्राणि शुद्धान्यम्लद्रवैर्मुहुः २५

ततो मूषापुटे धृत्वा पुटेद्गजपुटेन च
एवं पुटद्वयेनैव भस्मारं भवति ध्रुवम्
आरवत्कांस्यमप्येवं भस्मतां याति निश्चितम् २६

ताम्रपित्तल कांस्यमारणविधिः
अर्कक्षीरवदाजं स्यात्क्षीरं निर्गुण्डिका तथा
ताम्ररीतिध्वनिवधे समगन्धकयोगतः २७

ताम्रमारणविधिः
सूक्ष्माणि ताम्रपत्राणि कृत्वा संस्वेदयेद् बुधः
वासरत्रयमम्लेन ततः खल्वे विनिक्षिपेत् २८

पादांशं सूतकं दत्त्वा याममम्लेन मर्दयेत्
तत उद्धृत्य पत्राणि लेपयेद् द्विगुणेन च २९

गन्धकेनाम्लघृष्टेन तस्य कुर्याच्च गोलकम्
ततः पिष्ट्वा च मीनाक्षीं चाङ्गेरीं वा पुनर्नवाम् ३०

तत्कल्केन बहिर्गोलं लेपयेदङ्गुलोन्मितम्
धृत्वा तद्गोलकं भाण्डे शरावेण च रोधयेत् ३१

वालुकाभिः प्रपूर्याथ विभूतिलवणांबुभिः
दत्त्वा भांडमुखे मुद्रां ततश्चुल्यां विपाचयेत् ३२

क्रमवृद्धाग्निना सम्यग्यावद्याम चतुष्टयम्
स्वाङ्गशीतलमुद्धृत्य मर्दयेत्सूरणद्रवैः ३३

दिनैकं गोलकं कुर्यादर्द्धगन्धेन लेपयेत्
सघृतेन ततो मूषां पुटे गजपुटे पचेत् ३४

स्वाङ्गशीतं समुद्धृत्य मृतं ताम्रं शुभं भवेत्
वांतिं भ्रांतिं क्लमं मूर्च्छां न करोति कदाचन ३५

सीसकमारणे प्रथमो विधिः
ताम्बूलीरससम्पिष्टशिलालेपात्पुनः पुनः

द्वात्रिंशद्भिः पुटैर्नागो निरुत्थो याति भस्मताम् ३६

द्वितीयो विधिः
अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निक्षिपेत्
मृत्पात्रे द्राविते नागे लोहदर्व्या प्रचालयेत् ३७

यामैकेन भवेद्भस्म तत्तुल्यां च मनःशिलाम्
काञ्जिकेन द्वयं पिष्ट्वा पचेद् दृढपुटेन च ३८

स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन च
पुनः पुटेच्छरावाभ्यामेवं षष्टिपुटैर्मृतिः ३९

वङ्गमारणविधिः
मृत्पात्रे द्राविते वङ्गे चिञ्चाऽश्वत्थत्वचो रजः ४०

क्षिप्त्वा तेन चतुर्थांशमयोदर्व्या प्रचालयेत्
ततो द्वियाममात्रेण वङ्गभस्म प्रजायते ४१

अथ भस्मसमं तालं क्षिप्त्वाऽम्लेन प्रमर्दयेत्
ततो गजपुटे पक्त्वा पुनरम्लेन मर्दयेत् ४२

तालेन दशमांशेन याममेकं ततः पुटेत्
एवं दशपुटैः पक्वो वङ्गस्तु म्रियते ध्रुवम् ४३

लौहमारणे प्रथमो विधिः
शुद्धं लोहभवं चूर्णं पातालगरुडीरसैः
मर्दयित्वा पुटेद्वह्नौ दद्यादेवं पुटत्रयम् ४४

पुटत्रयं कुमार्या च कुठारच्छिन्निकारसैः
पुटषट्कं ततो दद्यादेवं तीक्ष्णमृतिर्भवेत् ४५

द्वितीयो विधिः
क्षिपेत्तु द्वादशांशेन दरदं तीक्ष्णचूर्णतः
मर्दयेत्कन्यकाद्रावैर्यामयुग्मं ततः पुटेत् ४६

एवं सप्तपुटैर्मृत्युं लोहचूर्णमवाप्नुयात्
रसैः कुठारच्छिन्नायाः पातालगरुडीरसैः
स्तन्येन चार्कदुग्धेन तीक्ष्णस्यैवं मृतिर्भवेत् ४७

तृतीयो विधिः
सूतकाद् द्विगुणं गन्धं दत्वा कुर्याच्च कज्जलीम्
द्वयोः समं लोहचूर्णं मर्दयेत्कन्यकाद्रवैः ४८

यामयुग्मं ततः पिण्डं कृत्वा ताम्रस्य पात्रके
घर्मे धृत्वा रुबूकस्य पत्रैराच्छादयेद् बुधः ४९

यामार्द्धेनोष्णतां यायाद्धान्यराशौ न्यसेत्ततः
दत्त्वोपरि शरावं तु त्रिदिनान्ते समुद्धरेत् ५०

पिष्ट्वा च गालयेद्वस्त्रादेवं वारितरं भवेत्
एवं सर्वाणि लोहानि स्वर्णादीन्यपि मारयेत् ५१

सर्वधातूनां मारणे सामान्यविधिः
शिलागन्धार्कदुग्धाक्ताः स्वर्णाद्याः सर्वधातवः
म्रियन्ते द्वादशपुटैः सत्यं गुरुवचो यथा ५२

अथोपधातूनां शोधनमारणप्रकाराः
उपधातूनां गणना
माक्षिकं तुत्थकाभ्रौ च नीलाञ्जनशिलालकाः
रसकश्चेति विज्ञेया एते सप्तोपधातवः ५३

स्वर्णमाक्षिकस्य शोधनविधिः

माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च
मातुलुङ्गद्रवैर्वाऽथ जम्बीरोत्थद्रवैः पचेत् ५४

चालयेल्लोहजे पात्रे यावत्पात्रं सुलोहितम्
भवेत्तप्तं तु संशुद्धिं स्वर्णमाक्षिकमृच्छति ५५

तस्य मारणविधिः
कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत्
तक्रेण वाजमूत्रेण म्रियते स्वर्णमाक्षिकम् ५६

रौप्यमाक्षिकशोधनविधिः
कर्कोटीमेषशृङ्ग्युत्थैर्द्रवैर्जम्बीरजैर्दिनम्
भावयेदातपे तीव्रे विमला शुद्ध्यति ध्रुवम् ५७

तुत्थशोधनविधिः
विष्ठया मर्दयेत् तुत्थं मार्जारककपोतयोः ५८

दशांशं टङ्कणं दत्त्वा पचेन्मृदुपुटे ततः
पुटं दध्ना तथा क्षौद्रैर्देयं तुत्थविशुद्धये ५९

अभ्रकशोधनविधिः
कृष्णाभ्रकं धमेद्वह्नौ ततः क्षीरे विनिक्षिपेत्
भिन्नपत्रं तु तत्कृत्वा तण्डुलीयाम्लयोर्द्रवैः
भावयेदष्टयामं तदेवं शुद्ध्यति चाभ्रकम् ६०

अभ्रकमारणे प्रथमो विधिः
कृत्वा धान्याभ्रकं तत्तु शोषयित्थाऽथ मर्दयेत्
अर्कक्षीरैर्दिनं खल्वे चक्राकारं च कारयेत् ६१

वेष्टयेदर्कपत्रैश्च सम्यग्गजपुटे पचेत्
पुनर्मर्द्यं पुनः पाच्यं सप्तवारं प्रयत्नतः ६२

ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयम्
म्रियते नात्र संदेहः सर्वयोगेषु योजयेत् ६३

मृताभ्रकस्यामृतीकरणविधिः
तुल्यं घृतं मृताभ्रेण लोहपात्रे विपाचयेत्
घृते जीर्णे तदभ्रं तु सर्वयोगेषु योजयेत् ६४

मृताभ्रकगुणाः
मृतं त्वभ्रं हरेन्मृत्युं जरापलितनाशनम्
अनुपानैश्च संयुक्तं तत्तद्रोगहरं परम् ६५

अभ्रकमारणे द्वितीयो विधिः
शुद्धं धान्याभ्रकं मुस्तशुण्ठीषड्भागयोजितम्
मर्दयेत्काञ्जिकेनैव दिनं चित्रकजै रसैः ६६

ततो गजपुटं दद्यात्तस्मादुद्धृत्य मर्दयेत्
त्रिफलावारिणा तद्वत्पुटेदेवं पुटैस्त्रिभिः ६७

वलागोमूत्रमुसलीतुलसीसूरणद्रवैः
मर्दितं पुटितं वह्नौ त्रित्रिवेलं व्रजेन्मृतिम् ६८

अभ्रकसत्त्वप्रकारः
धान्याभ्रकस्य भागैकं द्वौ भागौ टङ्कणस्य च ६९

पिष्ट्वा तदन्धमूषायां रुद्ध्वा तीव्राग्निना पचेत्
स्वभावं शीतलं चूर्णं सर्वरोगेषु योजयेत् ७०

नीलाञ्जनशोधनविधिः
नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितम्
दिनैकमातपे शुद्धं भवेत्कार्येषु योजयेत् ७१

गैरिककासीसादिशोधनविधिः
एवं गैरिककासीसटङ्कणानि वराटिका
तौरी शङ्खं च कङ्कुष्ठं शुद्धिमायाति निश्चितम् ७२

मनः शिलाशोधनविधिः
पचेत्त्र्यहमजामूत्रैर्दोलायन्त्रे मनः शिलाम्
भावयेत्सप्तधा पित्तैरजायाः शुद्धिमृच्छति ७३

हरितालशोधनविधिः
तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके क्षिपेत्
दोलायन्त्रेण यामैकं ततः कूष्माण्डजैर्द्रवैः ७४

तिलतैले पचेद्यामं यामं च त्रिफलाजलैः
एवं यन्त्रे चतुर्यामं पाच्यं शुद्ध्यति तालकम् ७५

रसकखर्परि शोधनविधिः
नृमूत्रेवाऽथ गोमूत्रे सप्ताहं रसकं पचेत्
दोलायन्त्रेण शुद्धिः स्यात्ततः कार्येषु योजयेत् ७६

धातूनां सत्त्वपातनविधिः
लाक्षामीनपयश्छागं टङ्कणं मृगशृङ्गकम्
पिण्याकं सर्षपाः शिग्रुर्गुञ्जोर्णागुडसैन्धवाः
यवतिक्ता घृतं क्षौद्रं यथालाभं विचूर्णयेत् ७७

एभिर्विमिश्रिताः सर्वे धातवो गाढवह्निना
मूषाध्माताः प्रजायन्ते मुक्तसत्त्वा न संशयः ७८

अथ रत्नानां शोधनमारणप्रकाराः
तत्रादौ वज्रशोधनविधिः
कुलत्थकोद्रवक्वाथैर्दोलायन्त्रे विपाचयेत्
व्याघ्रीकन्दगतं वज्रं त्रिदिनं शुद्धिमृच्छति ७९

वज्रशोधने द्वितीयो विधिः
तप्तं तप्तं तु तद्वज्रं खरमूत्रैर्निषेचयेत्
पुनस्तप्यं पुनः सेच्यमेवं कुर्यात्त्रिसप्तधा ८०

वज्रमारणे प्रथमो विधिः
मत्कुणैस्तालकं पिष्ट्वा यावद्भवति गोलकम्
तद्गोले निहितं वज्रं तद्गोलं वह्निना धमेत् ८१

सिञ्चयेदश्वमूत्रेण तद्गोले च क्षिपेत्पुनः
रुद्ध्वा ध्मातं पुनः सेच्यमेवं कुर्यात्त्रिसप्तधा ८२

एवं च म्रियते वज्रं चूर्णं सर्वत्र योजयेत् ८३

द्वितीयो विधिः
हिङ्गुसैन्धवसंयुक्ते क्वाथे कौलत्थजे क्षिपेत्
तप्तं तप्तं पुनर्वज्रं भूयाच्चूर्णं त्रिसप्तधा ८४

तृतीयो विधिः
मण्डूकं कांस्यजे पात्रे निगृह्य स्थापयेत्सुधीः
स भीतो मूत्रयेत्तत्र तन्मूत्रे वज्रमावपेत्
तप्तं तप्तं च बहुधा वज्रस्यैवं मृतिर्भवेत् ८५

वैक्रान्तस्य संशोधनमारणविधिः
वैक्रान्तं वज्रवच्छोद्ध्यं नीलं वा लोहितं तथा
हयमूत्रेण तत्सेच्यं तप्तं तप्तं द्विसप्तधा ८६

ततस्तु मेषशृङ्गयुक्तपञ्चाङ्गे गोलके क्षिपेत्
पुटेन्मूषापुटे रुद्ध्वा कुर्यादेवं च सप्तधा ८७

वैक्रान्तं भस्मतां याति वज्रस्थाने नियोजयेत् ८८

अवशिष्टरत्नानां शोधनविधिः
स्वेदयेद्दोलिकायन्त्रे जयन्त्याः स्वरसेन च
मणिमुक्ताप्रवालानां यामकं शोधनं भवेत् ८९

तेषामेव मारणविधिः
कुमार्यास्तराडुलीयेन स्तन्येन च निषेचयेत्
प्रत्येकं सप्तवेलं च तप्ततप्तानि कृत्स्नशः ९०

मौक्तिकानि प्रवालानि तथा रत्नान्यशेषतः
क्षणाद्विविधवर्णानि म्रियन्ते नात्र संशयः ९१

उक्तमाक्षिकवन्मुक्ताः प्रवालानि च मारयेत्
वज्रवत्सर्वरत्नानि शोधयेन्मारयेत्तथा ९२

शिलाजतुनः प्रथमः शोधनविधिः
शिलाजतु समानीय ग्रीष्मतप्तशिलाच्युतम्
गोदुग्धैस्त्रिफलाक्वाथैर्भृङ्गद्रावैश्च मर्दयेत्
आतपे दिनमेकैकं तच्छुष्कं शुद्धतां व्रजेत् ९३

द्वितीयो विधिः
मुख्यां शिलाजतुशिलां सूक्ष्मखराडप्रकल्पिताम्
निक्षिप्यात्युष्णपानीये यामैकं स्थापयेत्सुधीः ९४

मर्दयित्वा ततो नीरं गृह्णीयाद्वस्त्रगालितम्
स्थापयित्वा च मृत्पात्रे धारयेदातपे बुधः ९५

उपरिस्थं घनं यत्स्यात्तत्क्षिपेदन्यपात्रके
धारयेदातपे धीमानुपरिस्थं घनं नयेत् ९६

एवं पुनः पुनर्नीत्वा द्विमासाभ्यां शिलाजतु
भूयात्कार्यक्षमं वह्नौ क्षिप्तं लिङ्गोपमं भवेत् ९७

निर्धूमं च ततः शुद्धं सर्वकर्मसु योजयेत्
अधः स्थितं च यच्छेषं तस्मिन्नीरं विनिक्षिपेत् ९८

विमर्द्य धारयेद्घर्मे पूर्ववच्चैव तन्नयेत् ९९

मण्डूरस्य शोधनमारणविधिः
अक्षाङ्गारैर्धमेत्किट्टं लोहजं तद्द्रवां जलैः
सेचयेत्तप्ततप्तं तत्सप्तवारं पुनः पुनः १००

चूर्णयित्वा ततः क्वाथैर्द्विगुणैस्त्रिफलाभवैः
आलोड्य भर्जयेद्वह्नौ मण्डूरं जायते वरम् १०१

क्षारकल्पना
क्षीरवृक्षस्य काष्ठानि शुष्काण्यग्नौ प्रदीपयेत्
नीत्वा तद्भस्म मृत्पात्रे क्षिप्त्वा नीरे चतुर्गुणे
विमर्द्य धारयेद्रात्रौ प्रातरच्छं जलं नयेत् १०२

तन्नीरं क्वाथयेद्वह्नौ यावत्सर्वं विशुष्यति
ततः पात्रात्समुल्लिख्य क्षारो ग्राह्यः सितप्रभः १०३

चूर्णाभः प्रतिसार्यः स्यात्पेयः स्यात्क्वाथवत्स्थितः
इति क्षारद्वयं धीमानुक्तकार्येषु योजयेत् १०४

इति श्रीशार्ङ्गधरसंहितायां मध्यखण्डे धातुशोधनमारणनामैकादशोऽध्यायः

अथ रसादिशोधनमारणकल्पनानाम द्वादशोऽध्यायः

तत्रादौ रसप्रशंसा
पारदः सर्वरोगाणां जेता पुष्टिकरः स्मृतः
सुज्ञेन साधितः कुर्यात्संसिद्धिं देहलोहयोः १

रसनामानि

रसेन्द्रः पारदः सूतो हरजः सूतको रसः
मिश्रकश्चेति नामानि ज्ञेयानि रसकर्मसु २

ताम्रादिधातूनां सूर्यादीनामधिष्ठाननिर्देशः
ताम्रतारारनागाश्च हेमवङ्गौ च तीद्दगकम्
कांस्यकं कान्तलोहं च धातवो नव ये स्मृताः
सूर्यादीनां ग्रहाणां ते कथिता नामभिः क्रमात् ३

पारदशोधनविधिः
राजीरसोनमूषायां रसं द्मिप्त्वा विबन्धयेत्
वस्त्रेण दोलिकायन्त्रे स्वेदयेत्काञ्जिकैस्त्र्यहम् ४

दिनैकं मर्दयेत्सूतं कुमारीसम्भवैर्द्रवैः
तथा चित्रकजैः क्वाथैर्मर्दयेदेकवासरम् ५

काकमाचीरसैस्तद्वद् दिनमेकं च मर्दयेत्
त्रिफलायास्तथा क्वाथै रसो मर्द्यः प्रयत्नतः ६

ततस्तेभ्यः पृथक्कुर्यात्सूतं प्रद्माल्य काञ्जिकैः
ततः द्मिप्त्वा रसं खल्वे रसादर्द्धं च सैन्धवम् ७

मर्दयेन्निम्बुकरसैर्दिनमेकमनारतम्
ततो राजी रसोनश्च मुख्यश्च नवसादरः ८

एतै रससमैस्तद्वत्सूतो मर्द्यस्तुषाम्बुना
ततः संशोध्य चक्राभंकृत्वा लिप्त्वा च हिङ्गुना ९

द्विस्थालीसम्पुटे धृत्वा पूरयेल्लवणेन च
अधः स्थाल्यां ततो मुद्रां दद्याद् दृढतरां बुधः १०

विशोष्याग्निं विधायाधो निषिञ्चेदम्बुनोपरि

ततस्तु कुर्यात्तीव्राग्निं तदधः प्रहरत्रयम् ११

एवं निपातयेदूर्ध्वंरसो दोषविवर्जितः
अथोर्ध्वपिठरीमध्ये लग्नो रसो रसोत्तमः १२

गन्धकशोधनविधिः
लोहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत्
तप्ते घृते तत्समानं क्षिपेद्गन्धकजं रजः १३

विद्रुतं गन्धकं ज्ञात्वा दुग्धमध्ये विनिःक्षिपेत्
एवं गंधकशुद्धिः स्यात्सर्वकार्येषु योजयेत् १४

हिङ्गुलशोधनविधिः
मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम्
सप्तवारं प्रयत्नेन शुद्धिमायाति निश्चितम् १५

हिङ्गुलात्पारदनिष्कासनविधिः
निम्बूरसैर्निम्बपत्ररसैर्वा याममात्रकम् १६

पिष्ट्वा दरदमूर्ध्वं च पातयेत्सूतयुक्तिवत्
ततः शुद्धरसं तस्मान्नीत्वा कार्येषु योजयेत् १७

पारदस्य मुखकरणविधिः
कालकूटो वत्सनाभः शृङ्गकश्च प्रदीपकः
हालाहलो ब्रह्मपुत्रो हारिद्रः सक्तुकस्तथा १८

सौराष्ट्रिक इति प्रोक्ता विषभेदा अमी नव
अर्कसेहुण्डधत्तूरलाङ्गलीकरवीरकम् १९

गुञ्जाऽहिफेनावित्येताः सप्तोपविषजातयः
एतैर्विमर्दितः सूतश्छिन्नपक्षः प्रजायते

मुखं च जायते तस्य धातूंश्च ग्रसते क्षणात् २०

द्वितीयो रसमुखकरणविधिः
अथवा त्रिकटुक्षारौ राजी लवणपञ्चकम् २१

रसोनो नवसारश्च शिग्रुश्चैकत्र चूर्णितैः
समांशैः पारदादेतैर्जम्बीरेण द्रवेण वा
निम्बुतोयैः काञ्जिकैर्वा सोष्णखल्वे विमर्दयेत् २२

अहोरात्रत्रयेण स्याद्रसे धातुचरं मुखम्
तृतीयो रसमुखकरणविधिः
अथवा बिन्दुलीकीटै रसो मर्द्यस्त्रिवासरम्
लवणाम्लैर्मुखं तस्य जायते धातुघस्मरम् २३

कच्छपयन्त्रेण गन्धकजारणविधिः
अथ कच्छपयन्त्रेण गन्धजारणमुच्यते
मृत्कुराडे निक्षिपेत्तोयं तन्मध्ये च शरावकम् २४

महत्कुराडपिधानाभं मध्ये मेखलया युतम्
लिप्त्वा च मेखलामध्यं चूर्णेनात्र रसं क्षिपेत् २५

रसस्योपरि गन्धस्य रजो दद्यात्समांशकम्
दत्त्वोपरि शरावं च भस्ममुद्रां प्रदापयेत् २६

तस्योपरि पुटं दद्याच्चतुर्भिर्गोमयोपलैः
एवं पुनः पुनर्गन्धं षड्गुणं जारयेद् बुधः २७

गन्धे जीर्णे भवेत्सूतस्तीक्ष्णाग्निः सर्वकर्मकृत् २८

पारदमारणविधिः
धूमसारं रसं तोरीं गन्धकं नवसादरम् २९

यामैकं मर्दयेदम्लैर्भागं कृत्वा समांशकम्
काचकूप्यां विनिक्षिप्य तां च मृद्वस्त्रमुद्रया ३०

विलिप्य परितो वक्त्रे मुद्रां दत्त्वा च शोषयेत्
अधः सच्छिद्रपिठरीमध्ये कूपीं निवेशयेत् ३१

पिठरीं वालुकापूरैर्भृत्वा चाकूपिकागलम्
निवेश्य चुल्ल्यां तदधः कुर्याद्वह्निं शनैः शनैः ३२

तस्मादप्यधिकं किञ्चित्पावकं ज्वालयेत्क्रमात्
एवं द्वादशभिर्यामैर्म्रियते सूतकोत्तमः ३३

स्फोटयेत्स्वाङ्गशीतं तमूर्ध्वगं गन्धकं त्यजेत्
अधः स्थं मृतसूतं च सर्वकर्मसु योजयेत् ३४

द्वितीयः पारदमारणविधिः
अपामार्गस्य बीजानां मूषायुग्मं प्रकल्पयेत्
तत्सम्पुटे न्यसेत्सूतं मलयूदुग्धमिश्रितम् ३५

द्रोणपुष्पीप्रसूनानि विडङ्गमिरिमेदकः
एतच्चूर्णमधोर्ध्वं च दत्त्वा मुद्रा प्रदीयते ३६

तं गोलं सन्धयेत्सम्यङ्मृण्मूषासम्पुटे सुधीः
मुद्रां दत्त्वा शोधयित्वा ततो गजपुटे पचेत्
एवमेकपुटेनैव जायते भस्म सूतकम् ३७

तृतीयः पारदमारणविधिः
काकोदुम्बरिकादुग्धरसं किञ्चिद्विमर्दयेत् ३८

तद्दुग्धघृष्टहिङ्गोश्च मूषायुग्मं प्रकल्पयेत्
क्षिप्त्वा तत्सम्पुटे सूतं तत्र मुद्रां प्रदापयेत् ३९

धृत्वा तं गोलकं प्राज्ञो मृरमूषासम्पुटेऽधिके
पचेन्मृदुपुटेनैव सूतको याति भस्मताम् ४०

चतुर्थः पारदमाररविधिः
नागवल्लीरसैर्घृष्टः कर्कोटीकन्दगर्भितः
मृरमूषासम्पुटे पक्त्वा सूतो यात्येव भस्मताम् ४१

अथ ज्वरादौ रसाः प्रोच्यन्ते
तत्र ज्वराङ्कुशरसः
खरिडतं हरिरशृङ्गं ज्वालामुख्या रसैः समम्
रुद्ध्वा भारडे पचेच्चुल्ल्यां यामयुग्मं ततो नयेत् ४२

अष्टांशं त्रिकटुं दद्यान्निष्कमात्रं च भक्षयेत्
नागवल्लीरसैः सार्द्धं वातपित्तज्वरापहम् ४३

अयं ज्वराङ्कुशो नाम रसः सर्वज्वरापहः
एकाहिकं द्व्याहिकं च त्र्याहिकं वा न संशयः ४४

ज्वरारिरसः
पारदं रसकं तालं तुत्थं टङ्करगन्धके
सर्वमेतत्समं शुद्धं कारवेल्लीरसैर्दिनम् ४५

मर्दयेल्लेपयेत्तेन ताम्रपात्रोदरं भिषक्
अङ्गुल्यर्धप्रमारोन ततो रुद्ध्वा च तन्मुखम् ४६

पचेत्तं वालुकायन्त्रे क्षिप्त्वा धान्यानि तन्मुखे
यदा स्फुटन्ति धान्यानि तदा सिद्धं विनिर्दिशेत् ४७

ततो नयेत्स्वाङ्गशीतं ताम्रपात्रोदराद्भिषक्
रसं ज्वरारिनामानं विचूरर्य मरिचैः समम् ४८

माषैकं पर्णखराडेन भन्नयेन्नाशयेज्ज्वरम्
त्रिदिनैर्विषमं तीव्रमेकद्वित्रिचतुर्थकम् ४९

शीतज्वरारिरसः
तालकं तुत्थकं ताम्रं रसं गन्धं मनःशिलाम्
कर्षं कर्षं प्रयोक्तव्यं मर्दयेत् त्रिफलाऽम्बुभिः ५०

गोलं न्यसेत्सम्पुटके पुटं दद्यात् प्रयत्नतः
ततो नीत्वाऽकदुग्धेन वज्रीदुग्धेन सप्तधा ५१

क्वाथेन दन्त्याः श्यामायाः भावयेत्सप्तधा पुनः
माषमात्रं रसं दिव्यं पञ्चाशन्मरिचैर्युतम् ५२

गुडं गद्याणकं चैव तुलसीदलयुग्मकम्
भन्नयेत्त्रिदिनं भक्त्या शीतारिर्दुर्लभः परः ५३

पथ्यं दुग्धौदनं देयं विषमं शीतपूर्वकम्
दाहपूर्वं हरत्याशु तृतीयकचतुर्थकौ
द्व्याहिकं सततं चैव वैवरार्यं च नियच्छति ५४

ज्वरघ्नी गुटिका
भागैकः स्याद्रसाच्छुद्धादैलेयः पिप्पली शिवा
स्राकारकरभो गन्धः कटुतैलेन शोधितः ५५

फलानि चेन्द्रवारुरायाश्चतुर्भागमिता स्रमी
एकत्र मर्दयेच्चूर्णमिन्द्रवारुणिकारसैः ५६

माषोन्मितां गुटीं कृत्वा दद्यात्सद्योज्वरे बुधः
छिन्नारसानुपानेन ज्वरघ्नी गुटिका मता ५७

न्नयादौ लोकनाथरसः

शुद्धो बुभुक्षितः सूतो भागद्वयमितो भवेत्
तथा गन्धस्य भागौ द्वौ कुर्यात्कज्जलिकां तयोः ५८

सूताच्चतुर्गुणेष्वेव कपर्देषु विनिक्षिपेत्
भागैकं टङ्कणं दत्त्वा गोक्षीरेण विमर्दयेत् ५९

तथा शङ्खस्य खण्डानां भागानष्टौ प्रकल्पयेत्
क्षिपेत्सर्वं पुटस्यान्तश्चूर्णलिप्तशरावयोः ६०

गर्त्ते हस्तोन्मिते धृत्वा पुटेद्गजपुटेन च
स्वाङ्गशीतं समुद्धृत्य पिष्ट्वा तत्सर्वमेकतः
षड्गुञ्जासम्मितं चूर्णमेकोनत्रिंशदूषणैः ६१

तत्रानुपानानि
घृतेन वातजे दद्यान्नवनीतेन पित्तजे
क्षौद्रेण श्लेष्मजे दद्यादतीसारे क्षये तथा ६२

अरुचौ ग्रहणीरोगे कार्श्ये मन्दानले तथा
कासश्वासेषु गुल्मेषु लोकनाथरसो हितः ६३

तद्भक्षणविधिः
तस्योपरि घृतान्नं च भुञ्जीत कवलत्रयम्
मञ्चे क्षणैकमुत्तानः शयीतानुपधानके ६४

पथ्यभोजनम्
अनम्लमन्नं सघृतं भुञ्जीत मधुरं दधि
प्रायेण जाङ्गलं मांसं प्रदेयं घृतपाचितम् ६५

सुदुग्धभक्तंदद्याच्च जातेऽग्नौ सान्ध्यभोजने
सघृतान्मुद्गवटकान्व्यञ्जनेष्ववचारयेत् ६६

तत्र स्नानव्यवस्था
तिलामलककल्केन स्नापयेत्सर्पिषाऽथवा
अभ्यञ्जयेत्सर्पिषा च स्नानं कोष्णोदकेन च ६७

सेवनसमये त्याज्यपदार्थाः
क्वचित्तैलं न गृह्णीयान्न बिल्वं कारवेल्लकम्
वार्ताकं शफरीं चिञ्चां त्यजेद्व्यायाममैथुने ६८

मद्यं सन्धानकं हिङ्गु शुण्ठीं माषान्मसूरकान्
कूष्माण्डं राजिकां कोपं काञ्जिकं चैव वर्जयेत् ६९

त्यजेदयुक्तनिद्रां च कांस्यपात्रे च भोजनम्
ककारादियुतं सर्वं त्यजेच्छाकफलादिकम् ७०

पथ्योऽय लोकनाथेऽस्तु शुभनक्षत्रवासरे
सेवनविधिः
पूर्णातिथौ सिते पक्षे जाते चन्द्रबले तथा ७१

पूजयित्वा लोकनाथं कुमारीं भोजयेत्ततः
दानं दत्त्वा द्विघटिकामध्ये ग्राह्यो रसोत्तमः ७२

रसजदाहशान्त्युपायः
रसाच्चेज्जायते तापस्तदा शर्करया युतम् ७३

सत्त्वं गुडूच्या गृह्णीयाद्वंशरोचनया युतम्
खर्जूरं दाडिमं द्राक्षामिक्षुखण्डानि दापयेत् ७४

रोगानुसारेणानुपानानि
अरुचौ निस्तुषं धान्यं घृतभृष्टं सशर्करम्
दद्यात्तथा ज्वरे धान्यगुडूचीक्वाथमाहरेत् ७५

उशीरवासकक्वाथं दद्यात्समधुशर्करम्
रक्तपित्ते कफे श्वासे कासे च स्वरसंक्षये ७६

अग्निभृष्टजयाचूर्णं मधुना निशि दीयते
निद्रानाशेऽतिसारे च ग्रहरायां मन्दपावके ७७

सौवर्चलाभयाकृष्णाचूर्णमुष्णोदकैः पिबेत्
शूलेऽजीर्णे तथा कृष्णा मधुयुक्ता ज्वरे हिता ७८

प्लीहोदरे वातरक्ते छर्द्यां चैव गुदाङ्कुरे
नासिकादिषु रक्तेषु रसं दाडिमपुष्पजम् ७९

दूर्वायाः स्वरसं नस्ये प्रदद्याच्छर्करायुतम्
कोलमज्जा करणा बर्हिपक्षभस्म सशर्करम् ८०

मधुना लेहयेच्छर्दिहिक्काकोपस्य शान्तये
विधिरेष प्रयोज्यस्तु सर्वस्मिन्पोट्टलीरसे ८१

मृगाङ्के हेमगर्भे च मौक्तिकाख्ये रसेषु च
इत्ययं लोकनाथाख्यो रसः सर्वरुजो जयेत् ८२

लघुलोकनाथरसः
वराटभस्म मराडूरं चूर्णयित्वा घृते पचेत्
तत्समं मारिचं चूर्णं नागवल्ल्यां विभावितम् ८३

तच्चूर्णं मधुना लेह्यमथवा नवनीतकैः
माषमात्रं क्षयं हन्ति यामे यामे च भक्षितम् ८४

लोकनाथरसो ह्येष मराडलाद्राजयक्ष्मनुत् ८५

क्षयादौ मृगाङ्कपोट्टलीरसः

भूर्जवत्तनुपत्राणि हेम्नः सूक्ष्माणि कारयेत्
तुल्यानि तानि सूतेन खल्वे क्षिप्त्वा विमर्दयेत् ८६

काञ्चनाररसेनैव ज्वालामुख्या रसेन वा
लाङ्गल्या वा रसैस्तावद्यावद्द्रवति पिष्टिका ८७

ततो हेम्नश्चतुर्थांशं टङ्कणं तत्र निक्षिपेत्
पिष्टमौक्तिकचूर्णं च हेमद्विगुणमावपेत् ८८

तेषु सर्वसमं गन्धं क्षिप्त्वा चैकत्र मर्दयेत्
तेषां कृत्वा ततो गोलवासोभिः परिवेष्टयेत् ८९

पश्चान्मृदा वेष्टयित्वा शोषयित्वा च धारयेत्
शरावसम्पुटस्यान्तस्तत्र मुद्रां प्रदापयेत् ९०

लवणापूरिते भाण्डे धारयेत्तं च सम्पुटम्
मुद्रां दत्त्वा शोषयित्वा बहुभिर्गोमयैः पुटेत् ९१

ततः शीते समाहृत्य गन्धं सूतसमं क्षिपेत्
घृष्ट्वा च पूर्ववत्खल्वे पुटेद् गजपुटेन च ९२

स्वाङ्गशीतं ततो नीत्वा गुञ्जायुग्मं प्रयोजयेत्
अष्टभिर्मरिचैर्युक्तः कृष्णात्रययुतोऽथवा ९३

विलोक्य देयो दोषादीनेकैका रसरक्तिका
सर्पिषा मधुना वाऽपि दद्याद्दोषाद्यपेक्षया ९४

लोकनाथसमं पथ्यं कुर्यात्स्वस्थमनाः शुचिः
श्लेष्माणं ग्रहणीं कासं श्वासं क्षयमरोचकम्
मृगाङ्कोऽय रसो हन्यात्कृशत्वं बलहीनताम् ९५

क्षयश्वासादौ हेमगर्भपोट्टलीरसः
सूतात्पादप्रमाणेन हेम्नः पिष्टं प्रकल्पयेत्
तयोः स्याद् द्विगुणो गन्धो मर्दयेत्काञ्चनारिणा ९६

कृत्वा गोलं क्षिपेन्मूषासम्पुटे मुद्रयेत्ततः
पचेद् भूधरयन्त्रेण वासरत्रितयं बुधः ९७

तत उद्धृत्य तत्सर्वं दद्याद् गन्धं च तत्समम्
मर्दयेदार्द्रकरसैश्चित्रकस्वरसेन च ९८

स्थूलपीतवराटांश्च पूरयेत्तेन युक्तितः
एतस्मादौषधात्कुर्यादष्टमांशेन टङ्कणम् ९९

टङ्कणार्धं विषं दत्त्वा पिष्ट्वा सेहुण्डदुग्धकैः
मुद्रयेत्तेन कल्केन वराटानांमुखानि च १००

भाण्डे चूर्णप्रलिप्तेऽथ धृत्वा मुद्रां प्रदापयेत्
गर्त्ते हस्तोन्मिते धृत्वा पुटेद्गजपुटेन च १०१

स्वाङ्गशीतं रसं ज्ञात्वा प्रदद्याल्लोकनाथवत्
पथ्यं मृगाङ्कवज्ज्ञेयं त्रिदिनं लवणं त्यजेत् १०२

यदा छर्दिर्भवेत्तस्य दद्याच्छिन्नाशृतं तदा
मधुयुक्तं तथा श्लेष्मकोपे दद्याद्गुडार्द्रकम् १०३

विरेके भर्जिता भङ्गा प्रदेया दधिसंयुता
जयेत्कासं क्षयं श्वासं ग्रहणीमरुचिं तथा १०४

अग्निं च कुरुते दीप्तं कफवातं नियच्छति
हेमगर्भ परो ज्ञेयो रसः पोट्टलिकाऽभिधः १०५

द्वितीयो हेमगर्भपोट्टलीरसः
रसस्य भागाश्चत्वारस्तावन्तः कनकस्य च
तयोश्च पिष्टिकां कृत्वा गन्धो द्वादशभागकः १०६

कुर्यात्कज्जलिकां तेषां मुक्ताभागाश्च षोडशः
चतुर्विंशच्च शङ्खस्य भागैकं टङ्कणस्य च १०७

एकत्र मर्दयेत्सर्वं पक्वनिम्बूकजैः रसैः
कृत्वा तेषां ततो गोलं मूषासम्पुटके न्यसेत् १०८

मुद्रां दत्त्वा ततो हस्तमात्रे गर्त्ते च गोमयैः
पुटेद् गजपुटेनैव स्वाङ्गशीतं समुद्धरेत् १०९

पिष्ट्वा गुञ्जाचतुर्मानं दद्याद्व्याज्यसंयुतम्
एकोनत्रिंशदुन्मानमरिचैः सह दीयते ११०

राजते मृरमये पात्रे काचजे वाऽवलेहयेत्
लोकनाथसमं पथ्यं कुर्याच्च स्वस्थमानसः १११

कासे श्वासे क्षये वाते कफे ग्रहणिकागदे
अतिसारे प्रयोक्तव्या पोट्टली हेमगर्भिका ११२

विषमज्वरादौ महाज्वराङ्कुशरसः
शुद्धसूतो विषं गन्धः प्रत्येकं शाणसम्मिताः
धूर्त्तबीजं त्रिशाणं स्यात्सर्वेभ्यो द्विगुणा भवेत् ११३

हेमाह्वा कारयेदेषां सूक्ष्मं चूर्णं प्रयत्नतः
देयं जम्बीरमज्जाभिश्चूर्णं गुञ्जाद्वयोन्मितम् ११४

आर्द्रकस्वरसैर्वाऽपि ज्वरं हन्ति त्रिदोषजम्
एकाहिकं द्व्याहिकं वा त्र्याहिकं वा चतुर्थकम् ११५

विषमं च ज्वरं हन्याद्विख्यातोऽय ज्वराङ्कुशः ११६

अतिसारादौ आनन्द भैरवरसः
दरदं वत्सनाभं च मरिचं टङ्कणं कणाम्
चूर्णयेत्समभागेन रसो ह्यानन्दभैरवः ११७

गुञ्जैकं वा द्विगुञ्जं वा बलं ज्ञात्वा प्रयोजयेत्
मधुना लेहयेच्चानु कुटजस्य फलं त्वचम् ११८

चूर्णितं कर्षमात्रं तु त्रिदोषोत्थातिसारजित्
दध्यन्नं दापयेत्पथ्यं गवाज्यं तक्रमेव च
पिपासायां जलं शीतं विजया च हिता निशि ११९

त्रिदोषे लघुसूचिकाभरणरसः
विषं पलमितं सूतः शाणिकश्चूर्णयेद् द्वयम्
तच्चूर्णं सम्पुटे क्षिप्त्वा कावलिप्तशरावयोः १२०

मुद्रां दत्त्वा च संशोष्य ततश्चुल्यां निवेशयेत्
वह्निं शनैः शनैः कुर्यात्प्रहरद्वयसंख्यया १२१

तत उद्घाटयेन्मुद्रामुपरिस्थां शरावकात्
संलग्नो यो भवेत्सूतस्तं गृह्णीयाच्छनैः शनैः १२२

वायुस्पर्शो यथा न स्यात्तथा कुप्यां निवेशयेत्
यावत्सूच्या मुखे लग्नं कुप्या निर्याति भेषजम् १२३

तावन्मात्रो रसो देयो मूर्च्छिते सन्निपातिनि
क्षुरेण प्रच्छिते मूर्ध्नि तत्राङ्गुल्या च घर्षयेत् १२४

रक्तभेषजसम्पर्कान्मूर्च्छितोऽपि हि जीवति
तथैव सर्पदष्टस्तु मृतावस्थोऽपि जीवति १२५

यदा तापो भवेत्तस्य मधुरं तत्र दीयते १२६

सन्निपाते जलबन्धुरसः
सूतभस्मसमं गन्धं गन्धात्पादं मनः शिला
माक्षिकं पिप्पली व्योषं प्रत्येकं शिलया समम् १२७

चूर्णयेद्भावयेत्पित्तैर्मत्स्यमायूरसम्भवैः
सप्तधा भावयेच्छुष्कं देयं गुञ्जाद्वयं हितम् १२८

तालपर्णीरसश्चानु पञ्चकोलशृतोऽथवा
जलबन्धुरसो नाम सन्निपातं नियच्छति
जलयोगश्च कर्त्तव्यस्तेन वीर्यं भवेद्रसे १२९

सन्निपाते पञ्चवक्त्ररसः
शुद्धसूतं विषं गन्धं मरिचं टङ्कणं कणाम्
मर्दयेद् धूर्त्तजद्रावैर्दिनमेकं च शोषयेत् १३०

पञ्चवक्त्रो रसो नाम द्विगुञ्जः सन्निपातजित्
अर्कमूलकषायं तु सत्र्यूषमनुपाययेत् १३१

युक्तं दध्योदनं पथ्यं जलयोगं च कारयेत्
रसेनानेन शाम्यन्ति सक्षौद्रेण कफादयः १३२

मध्वार्द्रकरसं चानुपिबेदग्निविवृद्धये
यथेष्टं घृतमांसाशी शक्तो भवति पावकः १३३

सन्निपाते उन्मत्तरसः
रसं गन्धकतुल्यांशं धत्तूरफलजद्रवैः
मर्दयेद्दिनमेकं तु तत्तुल्यं त्रिकटुं क्षिपेत् १३४

उन्मत्ताख्यो रसो नाम्ना नस्ये स्यात्सन्निपातजित् १३५

सन्निपातादौ अञ्जनरसः
निस्त्वग्जैपालबीजं च दशनिष्कं विचूर्णयेत्
मरिचं पिप्पलद्यं सूतं प्रतिनिष्कं विमिश्रयेत् १३६

भाव्यो जम्बीरजैर्द्रावैः सप्ताहं सम्प्रयत्नतः
रसोऽयमञ्जने दत्तः सन्निपातं विनाशयेत् १३७

शूलादौ नाराचरसः
सूतं टङ्कणकं तुल्यं मरिचं सूततुल्यकम्
गन्धकं पिप्पलद्यं शुराठीं द्वौ द्वौ भागौ विचूर्णयेत् १३८

सर्वतुल्यं क्षिपेद्दन्तीबीजं निस्तुषितं भिषक्
द्विगुञ्जं रेचनं सिद्धं नाराचोऽय महारसः
आध्मानं मलविष्टम्भानुदावर्त्तं च नाशयेत् १३९

शूलादौ इच्छाभेदीरसः
दरदं टङ्कणं शुराठी पिप्पली चेति कार्षिकाः
हेमाह्वा पलमात्रा स्याद्दन्तीबीजं च तत्समम् १४०

विचूरार्यैकत्र सर्वाणि गोदुग्धेनैव पाययेत्
त्रिगुञ्जं रेचनं दद्याद्विष्टम्भाध्मानरोगिषु १४१

सर्वमेहे वसन्तकुसुमाकररसः
द्वौ भागौ हेमभूतेश्च गगनं चापि तत्समम्
लोहभस्म त्रयो भागाश्चत्वारो रसभस्मनः १४२

वङ्गभस्म त्रिभागं स्यात्सर्वमेकत्र मर्दयेत्
प्रवालं मौक्तिकं चैव रससाम्येन दापयेत् १४३

भावना गव्यदुग्धेन रसैर्घृष्ट्वाऽटरुषकैः
हरिद्रावारिणा चैव मोचकन्दरसेन च १४४

शतपत्ररसेनापि मालत्याः स्वरसेन च
पश्चान्मृगमदश्चन्द्रतुलसीरसभावितः १४५

कुसुमाकर इत्येष वसन्तपदपूर्वकः
गुञ्जाद्वयं ददीतास्य मधुना सर्वमेहनुत् १४६

सिताचन्दनसंयुक्तश्चाम्लपित्तादिरोगजित् १४७

क्षयादौ राजमृगाङ्करसः
सूतभस्म त्रयो भागा भागैकं हेमभस्मकम्
मृताभ्रस्य च भागैकं शिलागन्धकतालकम् १४८

प्रतिभागद्वयं शुद्धमेकीकृत्य विचूर्णयेत्
वराटान्पूरयेत्तेन छागीक्षीरेण टङ्कणम् १४९

पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे सन्निरोधयेत्
शुष्कं गजपुटे पक्त्वा चूर्णयेत्स्वाङ्गशीतलम् १५०

रसो राजमृगाङ्कोऽय चतुर्गुञ्जः क्षयापहः
दशपिप्पलिकाक्षौद्रैरेकोनत्रिंशदूषणैः १५१

सघृतं दापयेत्पथ्यं स्त्रीकोपाग्निश्रमांस्त्यजेत्
पथ्यं वा लघुमांसानि राजरोगप्रशान्तये १५२

क्षयश्वासादौ स्वयमग्निरसः
शुद्धं सूतं द्विधा गन्धं कुर्यात्खल्वेन कज्जलीम्
तयोः समं तीक्ष्णचूर्णं मर्दयेत्कन्यकाद्रवैः १५३

द्वियामान्ते कृतं गोलं ताम्रपात्रे विनिक्षिपेत्
आच्छाद्यैरण्डपत्रेण यामार्धेऽत्युष्णता भवेद् १५४

धान्यराशौ न्यसेत्पश्चादहोरात्रात्समुद्धरेत्
संचूरार्य गालयेद्वस्त्रे सत्यं वारितरं भवेत् १५५

भावयेत्कन्यकाद्रावैः सप्तधा भृङ्गजैस्तथा
काकमाचीकुरराटोत्थद्रवैर्मुराड्याः पुनर्नवैः १५६

सहदेव्यमृतानीलीनिर्गुराडीचित्रजैस्तथा
सप्तधा तु पृथग्द्रावैर्भाव्यं शोष्यं तथातपे १५७

सिद्धयोगो ह्ययं ख्यातः सिद्धानां च मुखागतः
अनुभूतो मया सत्यं सर्वरोगगगापहः १५८

स्वर्गादीन्मारयेदेवं चूर्णीकृत्य तु लोहवत्
त्रिफलामधुसंयुक्तः सर्वरोगेषु योजयेत् १५९

त्रिकटुत्रिफलैलाभिर्जातीफललवङ्गकैः
समभागोन्मितैरेतैः समः पूर्वरसो भवेत् १६०

संचूरार्य लेहयेत्चौद्रैर्भच्यं निष्कद्वयं द्वयम्
स्वयमग्निरसो नाम्ना चयकासनिकृन्तनः १६१

सर्वकासेष्वमृतार्णवरसः
पारदं गन्धकं शुद्धं मृतलोहं च टङ्कराम्
रास्ना विडङ्गत्रिफला देवदारु कटुत्रयम् १६२

अमृता पद्मकं चौद्रं विश्वं तुल्यांशचूर्णितम्
त्रिगुञ्जं सर्वकासार्त्तः सेवयेदमृतार्णवम् १६३

श्वासे सूर्यावर्त्तो रसः
सूतार्धो गन्धको मर्द्यो यामैकं कन्यकाद्रवैः
द्वयोस्तुल्यं ताम्रपत्रं पूर्वकल्केन लेपयेत् १६४

दिनैकंस्थालिकायन्त्रे पक्वमादाय चूर्णयेत्
सूर्यावर्त्तो रसो ह्येष द्विगुञ्जः श्वासजिद्भवेत् १६५

वातरोगे स्वच्छन्दभैरवरसः
शुद्धं सूतं मृतं लोहं ताप्यं गन्धकतालके
पथ्याऽग्निमन्थं निर्गुडी त्र्यूषणं टङ्कणं विषम् १६६

तुल्यांशं मर्दयेत्खल्वे दिनं निर्गुण्डिकाद्रवैः
मुण्डीद्रावैर्दिनैकं तु द्विगुञ्जं वटकीकृतम् १६७

भक्षयेद्वातरोगार्त्तोनाम्ना स्वच्छन्दभैरवम्
रास्नाऽमृतादेवदारुशुण्ठीवातारिजं शृतम्
सगुग्गुलुं पिबेत्कोष्णमनुपानं सुखावहम् १६८

ग्रहणीरोगे हंसपोट्टलीरसः
दग्धान्कपर्दिकान्पिष्ट्वा त्र्यूषणं टङ्कणं विषम्
गन्धकं शुद्धसूतं च तुल्यं जम्बीरजैर्द्रवैः १६९

मर्दयेद्भक्षयेन्माषं मरिचाज्यं लिहेदनु
निहन्ति ग्रहणीरोगं पथ्यं तक्रौदनं हितम् १७०

अश्मर्यां त्रिविक्रमो रसः
मृतं ताम्रमजाक्षीरैः पाच्यं तुल्यैर्गतद्रवम्
तत्ताम्रं शुद्धसूतं च गन्धकं च समं समम् १७१

निर्गुण्डीस्वरसैर्मर्द्यं तद्गोलं सन्धयेद्दिनम्
यामैकं बालुकायन्त्रे पाच्यं योज्यं द्विगुञ्जकम् १७२

बीजपूरकमूलं तु सजलं चानुपाययेत्
रसस्त्रिविक्रमो नाम्ना मासैकेनाश्मरीप्रणुत् १७३

कुष्ठादौ महातालेश्वररसः
तालं ताप्यं शिलां सूतं शुद्धं सैन्धवटङ्करो
समांशं चूर्णयेत्खल्वे सूताद् द्विगुणगन्धकम् १७४

गन्धतुल्यं मृतं ताम्रं जम्बीरैर्दिनपञ्चकम्
मर्द्यं षड्भिः पुटैः पाच्यं भूधरे संपुटोदरे १७५

पुटे पुटे द्रवैर्मर्द्यं सर्वमेतत्तु षट्पलम्
द्विपलं मारितं ताम्रं लोहभस्म चतुष्पलम् १७६

जम्बीराम्लेन तत्सर्वं दिनं मर्द्यं पुटेल्लघु
त्रिंशदंशं विषं चास्य क्षिप्त्वा सर्वं विचूर्णयेत् १७७

माहिषाज्येन संमिश्रं निष्कार्धं भक्षयेत्सदा
मध्वाज्यैर्वाकुचीचूर्णं कर्षमात्रं लिहेदनु १७८

सर्वकुष्ठानि हन्त्याशु महातालेश्वरो रसः १७९

कुष्ठकुठाररसः
भस्मसूतसमो गन्धो मृतायस्ताम्रगुग्गुलुः
त्रिफला च महानिम्बश्चित्रकश्चशिलाजतु
इत्येतच्चूर्णितं कुर्यात्प्रत्येकं शाणषोडशम् १८०

चतुःषष्टिः करञ्जस्य बीजचूर्णं प्रकल्पयेत्
चतुःषष्टिमृतं चाभ्रं मध्वाज्याभ्यां विलोडयेत् १८१

स्निग्धे भाराडे धृतं खादेद् द्विनिष्कं सर्वकुष्ठनुत्
रसः कुष्ठकुठारोऽय गलत्कुष्ठनिवारणः १८२

श्वेतकुष्ठादौ उदयादित्यो रसः
शुद्धं सूतं द्विधा गन्धं मर्द्यं कन्याद्रवैर्दिनम्

तद्गोलं पिठरीमध्ये ताम्रपात्रेण रोधयेत् १८३

सूतकाद् द्विगुणेनैव शुद्धेनाधोमुखेन च
पार्श्वे भस्म निधायाथ पात्रोर्ध्वं गोमयं जलम् १८४

किञ्चित् किञ्चित्प्रदातव्यं चुल्ल्यां यामद्वयं पचेत्
चण्डाग्निना तदुद्धृत्य स्वाङ्गशीतं विचूर्णयेत् १८५

काष्ठोदुम्बरिकावह्नित्रिफलाराजवृक्षकम्
विडङ्गं वाकुचीबीजं क्वाथयेत्तेन भावयेत् १८६

दिनैकमुदयादित्योरसो देयो द्विगुञ्जकः
विचर्चिकां दद्रुकुष्ठं वातरक्तं च नाशयेत् १८७

अनुपानं च कर्तव्यं वाकुचीफलचूर्णकम्
खदिरस्य कषायेण समेन परिपाचितम् १८८

त्रिशाणं तद् गवां क्षीरैः क्वाथैर्वा त्रैफलैः पिबेत्
त्रिदिनान्ते भवेत्स्फोटः सप्ताहाद्वा किलासके १८९

नीलद्यं गुञ्जां च कासीसं धत्तूरं हंसपादिकाम्
सूर्यभक्तां च चाङ्गेरीं पिष्ट्वा मूलानिलेपयेत् १९०

स्फोटस्थानप्रशान्त्यर्थं सप्तरात्रं पुनः पुनः
श्वेतकुष्ठं निहन्त्याशु साध्यासाध्यं न संशयः १९१

अपरः श्वित्रलेपोऽपि कथ्यतेऽत्र भिषग्वरैः
गुञ्जाफलाग्निचूर्णं च लेपितं श्वेतकुष्ठनुत् १९२

शिलाऽपामार्गभस्मापि लिप्तं श्वित्रं विनाशयेत् १९३

कुष्ठादौ सर्वेश्वररसः

शुद्धं सूतं चतुर्गन्धं पलं यामं विचूर्णयेत्
मृतताम्राभ्रलोहानां दरदस्य पलं पलम्
सुवर्णं रजतं चैव प्रत्येकं दशनिष्ककम् १९४

माषैकं मृतवज्रं च तालं शुद्धं पलद्वयम्
जम्बीरोन्मत्तवासाभिः स्नुह्यर्क विषमुष्टिभिः १९५

मर्द्यं हयारिजैर्द्रावैः प्रत्येकेन दिनं दिनम्
एवं सप्तदिनं मर्द्यं तद्गोलं वस्त्रवेष्टितम् १९६

वालुकायन्त्रगं स्वेद्यं त्रिदिनं लघुवह्निना
आदाय चूर्णयेच्छ्लक्ष्णं पलैकं योजयेद्विषम् १९७

द्विपलं पिप्पलीचूर्णं मिश्रं सर्वेश्वरो रसः
द्विगुञ्जो लिह्यते क्षौद्रैः सुप्तिमण्डलकुष्ठनुत् १९८

वाकुचीदेवकाष्ठं च कर्षमात्रं सुचूर्णयेत्
लिहेदैरण्डतैलाक्तमनुपानं सुखावहम् १९९

सुप्त्यादौ स्वर्णक्षीरीरसः
हेमाह्वां पञ्चपलिकां क्षिप्त्वा तक्रघटे पचेत्
तक्रे जीर्णे समुद्धृत्य पुनः क्षीरघटे पचेत् २००

क्षीरे जीर्णे समुद्धृत्य क्षालयित्वा विशोषयेत्
तच्चूर्णं पञ्चपलिकं मरिचानां पलद्वयम् २०१

पलैकं मूर्च्छितं सूतमेकीकृत्य तु भक्षयेत्
निष्कैकं सुप्तिकुष्ठार्त्तः स्वर्णक्षीरीरसो ह्ययम् २०२

प्रमेहे मेहबद्धरसः
भस्मसूतं मृतं कान्तं मुण्डभस्म शिलाजतु

शुद्धं ताप्यं शिलां व्योषं त्रिफलां कोलबीजकम् २०३

कपित्थं रजनीचूर्णं भृङ्गराजेन भावयेत्
विंशद्वारं विशोष्याथ मधुयुक्तं लिहेत्सदा २०४

निष्कमात्रो हरेन्मेहान्मेहबद्धो रसो महान्
महानिम्बस्य बीजानि पिष्ट्वा षट्सम्मितानि च २०५

पलतण्डुलतोयेन घृतनिष्कद्वयेन च
एकीकृत्य पिबेच्चानु हन्ति मेहं चिरन्तनम् २०६

जलोदरादौ महावह्निरसः
चतुःसूतस्य गन्धाष्टौ रजनी त्रिफला शिवा
प्रत्येकं च द्विभागं स्यात्त्रिवृज्जैपालचित्रकम् २०७

प्रत्येकं च त्रिभागं स्यात् त्र्यूषणं दन्तिजीरके
प्रत्येकमष्टभागं स्यादेकीकृत्य विचूर्णयेत् २०८

जयन्तीस्नुक्पयोभृङ्गवह्निवातारितैलकैः
प्रत्येकेन क्रमाद्भाव्यं सप्तवारं पृथक्पृथक् २०९

महावह्निरसो नाम निष्कमुष्णजलैः पिबेत्
विरेचनं भवेत्तेन तक्रभक्तं ससैन्धवम् २१०

दिनान्ते दापयेत्पथ्यं वर्जयेच्छीतलं जलम्
सर्वोदरहरः प्रोक्तो मूढवातहरः परः २११

गुल्मप्लीहादौ विद्याधररसः
गन्धकं तालकं ताप्यं मृतताम्रं मनः शिलाम्
शुद्धं सूतं च तुल्यांशं मर्दयेद्भावयेद् दिनम् २१२

पिप्पल्यास्तु कषायेण वज्रीक्षीरेण भावयेत्
निष्कार्धं भक्षयेत्क्षौद्रैर्गुल्मप्लीहादिकं जयेत् २१३

रसो विद्याधरो नाम गोमूत्रं च पिबेदनु २१४

पक्तिशूले त्रिनेरसः
टङ्कणं हारिणं शृङ्गं स्वर्णं शुल्बं मृतं रसम्
दिनैकमार्द्रकद्रावैर्मर्द्यं रुद्ध्वा पुटे पचेत्
त्रिनेत्राख्यरसस्यैकं माषं मध्वाज्यकैर्लिहेत् २१५

सैन्धवं जीरकं हिंगु मध्वाज्याभ्यां लिहेदनु
पक्तिशूलहरः ख्यातो मासमात्रान्न संशयः २१६

शूले शूलगजकेसरी रसः
शुद्धं सूतं द्विधा गन्धं यामैकं मर्दयेद् दृढम्
द्वयोस्तुल्यं शुद्धताम्रं सम्पुटे तन्निरोधयेत् २१७

ऊर्ध्वाधो लवणं दत्त्वा मृद्भाराडे धारयेद्भिषक्
ततो गजपुटे पक्त्वा स्वाङ्गशीतं समुद्धरेत् २१८

सम्पुटं चूर्णयेत्सूक्ष्मं पर्णखराडे द्विगुञ्जकम्
भक्षयेत्सर्वशूलार्त्तो हिङ्गु शुराठी च जीरकम् २१९

वचामरिचजं चूर्णं कर्षमुष्णजलैः पिबेत्
असाध्यं नाशयेच्छूलं रसोऽय गजकेसरी २२०

अग्निमान्द्यादौ अग्नितुराडीवटीरसः
शुद्धं सूतं विषं गन्धमजमोदां फलत्रयम्
स्वर्जिक्षारं यवक्षारं वह्निसैन्धवजीरकम् २२१

सौवर्चलं विडङ्गानि सामुद्रं त्र्यूषणं समम्

विषमुष्टिं सर्वतुल्यां जम्बीराम्लेन मर्दयेत् २२२

मरिचाभां वटीं खादेद्वह्निमान्द्यप्रशान्तये २२३

विषूचिकायाम् अजीर्णकण्टकरसः
शुद्धसूतं विषं गन्धं समं सर्वं विचूर्णयेत्
मरिचं सर्वतुल्यांशं कण्टकार्याः फलद्रवैः २२४

मर्दयेद्भावयेत्सर्वमेकविंशतिवारकम्
वटीं गुञ्जात्रयं खादेत्सर्वाजीर्णप्रशान्तये
अजीर्णकण्टकः सोऽय रसो हन्ति विषूचिकाम् २२५

कफरोगे मन्थानभैरवरसः
मृतं सूतं मृतं ताम्रं हिङ्गु पुष्करमूलकम्
सैन्धवं गन्धकं तालं कटुकीं चूर्णयेत्समम् २२६

पुनर्नवादेवदालीनिर्गुण्डीतण्डुलीयकैः
तिक्तकोशातकीद्रावैर्दिनैकं मर्दयेद् दृढम् २२७

माषमात्रं लिहेत्क्षौद्रै रसं मन्थानभैरवम्
कफरोगप्रशान्त्यर्थं निम्बक्वाथं पिबेदनु २२८

वातरोगे वातनाशनरसः
सूतहाटकवज्राणि ताम्रं लोहं च माक्षिकम्
तालं नीलाञ्जनं तुत्थमहिफेनं समांशकम् २२९

पञ्चानां लवणानां च भागमेकं विमर्दयेत्
वज्रीक्षीरैर्दिनैकं तु रुद्ध्वाऽधो भूधरे पचेत् २३०

माषैकमार्द्रकद्रावैर्लेहयेद्वातनाशनम्
पिप्पलीमूलजक्वाथं सकृष्णमनुपाययेत् २३१

सर्वान्वातविकारांस्तु निहन्त्याक्षेपकादिकान् २३२

सन्निपातादौ कनकसुन्दरो रसः
कनकस्याष्टशाणाः स्युः सूतो द्वादशभिर्मतः
गन्धोऽपि द्वादश प्रोक्तस्ताम्रंशाणद्वयोन्मितम्
अभ्रकं स्याच्चतुः शाणं माक्षिकं च द्विशाणिकम् २३३

वङ्गो द्विशाणः सौबीरं त्रिशाणं लोहमष्टकम्
विषं त्रिशाणिकं कृत्वा लाङ्गली पलसंमिता २३४

मर्दयेद्दिनमेकं च रसैरम्लफलोद्भवैः
दद्यान्मृदुपुटं वह्नौ ततः सूक्ष्मं विचूर्णयेत् २३५

माषमात्रो रसो देयः सन्निपाते सुदारुणे
आर्द्रकस्वरसेनैव रसोनस्य रसेन वा २३६

किलासं सर्वकुष्ठानि विसर्पं च भगन्दरम्
ज्वरं गरमजीर्णं च जयेद्रोगहरो रसः २३७

सन्निपातभैरवरसः
रसो गन्धस्त्रिकर्षः स्यात्कुर्यात्कज्जलिकां तयोः
ताराभ्रताम्रवङ्गाहिसाराश्चैकैककार्षिकाः २३८

शिग्रुज्वालामुखीशुराठी बिल्वेभ्यस्तराडुलीयकात्
प्रत्येकं स्वरसैः कुर्याद्यामैकैकं विमर्दनम् २३९

कृत्वा गोलं वृतं वस्त्रे लवणापूरिते न्यसेत्
काचभाराडे ततः स्थाल्यां काचकूपीं निवेशयेत् २४०

बालुकाभिः प्रपूर्याथ वह्निर्यामद्वयं भवेत्
तत उद्धृत्य तं गोलं चूर्णयित्वा विमिश्रयेत् २४१

प्रवालचूर्णकर्षेण शाणमात्रविषेण च
कृष्णसर्पस्य गरलैर्द्विवेलं भावयेत्तथा २४२

तगरं मुशली मांसी हेमाह्वा वेतसः कणा
नीलिनी पद्मकं चैला चित्रकश्च कुठेरकः २४३

शतपुष्पा देवदाली धत्तूरागस्त्यमुण्डिकाः
मधूकजातीमदनरसैरेषां विमर्दयेत् २४४

प्रत्येकमेकवेलं च ततः संशोष्य धारयेत्
बीजपूरार्द्रकद्रावैर्मरिचैः षोडशोन्मितैः २४५

रसो द्विगुञ्जाप्रमितः सन्निपातेषु दीयते
प्रसिद्धोऽय रसो नाम्ना सन्निपातस्य भैरवः २४६

अतीसारादौ ग्रहणीकपाटरसः
तारमौक्तिकहेमानि सारश्चैकैकभागकाः
द्विभागो गन्धकः सूतस्त्रिभागो मर्दयेदिमान् २४७

कपित्थस्वरसैर्गाढं मृगशृङ्गे ततः क्षिपेत्
पुटेन्मध्यपुटेनैव तत उद्धृत्य मर्दयेत् २४८

बलारसैः सप्तवेलमपामार्गरसैस्त्रिधा
लोध्रप्रतिविषामुस्तधातकीन्द्रयवामृताः २४९

प्रत्येकमेषां स्वरसैर्भावना स्यात्त्रिधा त्रिधा
माषमात्रोरसोदेयोमधुना मरिचैस्तथा २५०

हन्यात्सर्वानतीसारान्ग्रहणीं सर्वजामपि
कपाटो ग्रहणीरोगे रसोऽय वह्निदीपनः २५१

ग्रहणीवज्रकपाटरसः
मृतसूताभ्रकं गन्धं यवक्षारं सटङ्कणम्
अग्निमन्थं वचां कुर्यात्सूततुल्यानिमान्सुधीः २५२

ततो जयन्तीजम्बीरभृङ्गद्रावैर्विमर्दयेत्
त्रिवासरं ततो गोलं कृत्वा संशोष्य धारयेत् २५३

लोहपात्रे शरावं च दत्त्वोपरि विमुद्रयेत्
अधो वह्निं शनैः कुर्याद्यामार्धं तत उद्धरेत् २५४

रसतुल्यां प्रतिविषां दद्यान्मोचरसं तथा
कपित्थविजयाद्रावैर्भावयेत्सप्तधा पृथक् २५५

धातकीन्द्रयवा मुस्ता लोध्रं बिल्वं गुडूचिका
एतद्रसैर्भावयित्वा वेलैकैकं च शोषयेत् २५६

रसं वज्रकपाटाख्यं शाणैकं मधुना लिहेत्
वह्निं शुगठीं विडं बिल्वं लवणं चूर्णयेत्समम् २५७

पिबेदुष्णाम्बुना चानु सर्वजां ग्रहणीं जयेत् २५८

वाजीकरणे मदनकामदेवो रसः
तारं वज्रं सुवर्णं च ताम्रं सूतकगन्धकम्
लोहं क्रमविवृद्धानि कुर्यादेतानि मात्रया २५९

विमर्द्य कन्यकाद्रावैर्न्यसेत्काचमये घटे
विमुच्य पिठरीमध्ये धारयेत्सैन्धवामृते २६०

पिठरीं मुद्रयेत्सम्यक् ततश्चुल्ल्यां निवेशयेत्
वह्निं शनैः शनैः कुर्याद्दिनैकं तत उद्धरेत् २६१

स्वाङ्गशीतं च सञ्चूर्ण्य भावयेदर्कदुग्धकैः
अश्वगन्धा च काकोली वानरी मुसली चुरा २६२

त्रित्रिवेलं रसैरासां शतावर्याश्च भावयेत्
पद्मकन्दकसेरूणां रसैः काशस्य भावयेत् २६३

कस्तूरीव्योषकर्पूरकङ्कोलैलालवङ्गकम्
पूर्वचूर्णादष्टमांशमेतच्चूर्णं विमिश्रयेत् २६४

सर्वैः समां शर्करां च दत्त्वा शाणोन्मितं पिबेत्
गोदुग्धद्विपलेनैव मधुराहारसेवकः २६५

अस्य प्रभावात्सौन्दर्यं बलं तेजोऽभिवर्धते
तरुणी रमयेद्बह्वीः शुक्रहानिर्न जायते २६६

वाजीकरणे कन्दर्पसुन्दर रसः
सूतो वज्रमहिर्मुक्ता तारं हेमासिताभ्रकम्
रसैः कर्षांशकानेतान्मर्दयेदिरिमेदजैः २६७

प्रवालचूर्णं गन्धश्च द्विद्विकर्षं विमिश्रयेत्
ततोऽश्वगन्धास्वरसैर्विमर्द्य मृगशृङ्गके २६८

चिप्त्वा मृदुपुटे पक्त्वा भावयेद्धातकीरसैः
काकोली मधुकं मांसी बलात्रयबिसेङ्गुदम् २६९

द्राचापिप्पलिवन्दाकं वरी पर्णीचतुष्टयम्
परूषकं कसेरुश्च मधूकं वानरी तथा २७०

भावयित्वा रसैरेषां शोषयित्वा विचूर्णयेत्
एला त्वक्पत्रकं मांसी लवङ्गागुरुकेशरम् २७१

मुस्तं मृगमदः कृष्णा जलं चन्द्रश्च मिश्रयेत्
एतच्चूर्णैः शाणमितै रसं कन्दर्पसुन्दरम् २७२

खादेच्छाणमितं रात्रौ सिता धात्री विदारिका
एतासां कर्षचूर्णेन सर्पिष्कर्षेण संयुतम् २७३

तस्यानु द्विपलं क्षीरं पिबेत्सुस्थितमानसः
रमणी रमयेद्बह्वीः शुक्रहानिर्न जायते २७४

लोहरसायनम्
शुद्धं रसेन्द्रं भागैकं द्विभागं शुद्धगन्धकम्
क्षिपेत्कज्जलिकां कुर्यात्तत्र तीक्ष्णभवं रजः २७५

क्षिप्त्वा कज्जलिकातुल्यं प्रहरैकं विमर्दयेत्
ततः कन्याद्रवैर्घर्मे त्रिदिनं परिमर्दयेत् २७६

ततः सञ्जायते तस्य सोष्णो धूमोद्गमो महान्
अत्यन्तं पिण्डितं कृत्वा ताम्रपात्रे निधापयेत् २७७

मध्ये धान्यैकशूकस्य त्रिदिनं धारयेद् बुधः
उद्धृत्य तस्मात्खल्वे च क्षिप्त्वा घर्मे निधाय च २७८

रसैः कुठारच्छिन्नायास्त्रिवेलं परिभावयेत्
संशोष्य घर्मे क्वाथैश्च भावयेत्त्रिकटोस्त्रिधा २७९

वासाऽमृताचित्रकाणां रसैर्भाव्यं क्रमात्त्रिधा
लोहपात्रे ततः क्षिप्त्वा भावयेत्त्रिफलाजलैः २८०

निर्गुण्डीदाडिमत्वग्भिर्बिसभृङ्गकुरण्टकैः
पलाशकदलीद्रावैर्बीजकस्य शृतेन च २८१

नीलिकाऽलम्बुषाद्रावैर्बब्बूलफलिकारसैः
भावयेत्त्रित्रिवेलं च ततो नागबलारसैः २८२

ततः प्रातर्लिहेत्क्षौद्रघृताभ्यां कोलमात्रकम्
पलमात्रं वराक्वाथं पिबेदस्यानुपानकम् २८३

मासत्रयं शीलितं स्याद्वलीपलितनाशनम्
मन्दाग्निं श्वासकासौ च पाण्डुतां कफमारुतौ २८४

पिप्पलीमधुसंयुक्तं हन्यादेतन्न संशयः
वातास्त्रं मूत्रदोषांश्च ग्रहणीं गुदजां रुजम् २८५

अण्डवृद्धिं जयेदेतच्छिन्नासत्त्वमधुप्लुतम्
बलवर्णकरं वृष्यमायुष्यं परमं स्मृतम् २८६

जयेत्सर्वामयान्कालादिदं लोहरसायनम्
कूष्माण्डं तिलतैलं च माषान्नं राजिकां तथा २८७

मद्यमम्लरसं चैव त्यजेल्लोहस्य सेवकः २८८

अनुक्तसंग्रहश्लोकाः
तत्र जयपाल शोधनम्
जैपालं रहितं त्वगङ्कुररसज्ञाभिर्मले माहिषे
निक्षिप्तं त्र्यहमुष्णतोयविमलं खल्वे सवासोऽदितम्
लिप्तं नूतनखर्परेषु विगतस्नेहं रजःसन्निभं
निम्बूकाम्बुविभावितं च बहुशः शुद्धं गुणाढ्यं भवेत् २८९

विषशोधनम्
विषं तु खण्डशः कृत्वा वस्त्रखण्डेन बन्धयेत्
गोमूत्रमध्ये निक्षिप्य स्थापयेदातपे त्र्यहम् २९०

गोमूत्रं च प्रदातव्यं नूतनं प्रत्यहं बुधैः
त्र्यहेऽतीते समुद्धृत्य शोषयेन्मृदु पेषयेत्
शुद्ध्यत्येवं विषं तच्च योग्यं भवति चार्त्तिजित् २९१

अथवा
खण्डीकृत्य विषं वस्त्रपरिबद्धं तु दोलया २९२

अजापयसि संस्विन्नं यामतः शुद्धिमाप्नुयात्
अजादुग्धाभावतस्तु गव्यक्षीरेण शोधयेत् २९३

इति श्रीशार्ङ्गधरसंहितायां मध्यखण्डे रसादिशोधन
मारणकल्पना नाम द्वादशोऽध्यायः

इति मध्यखण्डं समाप्तम्

श्रीः

उत्तरखण्डम्

अथ स्नेहपानविधिर्नाम प्रथमोऽध्यायः

अथ स्नेहस्य भेदास्तत्पानकालश्च
स्नेहश्चतुर्विधः प्रोक्तो घृतं तैलं वसा तथा
मज्जा च तं पिबेन्मर्त्यः किंचिदभ्युदिते रवौ १

योनिभेदेन स्नेहस्य द्वैविध्यम्
स्थावरो जङ्गमश्चैव द्वियोनिः स्नेह उच्यते २

स्थावरजङ्गमयोः श्रेष्ठस्नेहनामनिर्देशः
तिलतैलं स्थावरेषु जङ्गमेषु घृतं वरम् ३

मिलितस्नेहनामानि
द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ४

स्नेहसात्म्ये कालावधिः
पिबेत् त्र्यहं चतुरहं पञ्चाहं षडहं तथा
सप्तरात्रात्परं स्नेहं आत्मीभवति सेवितः ५

स्नेहपानमात्राविषयाः
दोषकालाग्निवयसां बलं दृष्ट्वा प्रयोजयेत्
हीनां च मध्यमां ज्येष्ठां मात्रां स्नेहस्य बुद्धिमान् ६

अमात्रादिसेवितस्नेहस्य दोषास्तदुपायाश्च
अमात्रया तथाऽकाले मिथ्याहारविहारतः
स्नेहः करोति शोफार्शस्तन्द्रानिद्राविसंज्ञताः
प्रकुर्याल्लङ्घनं तत्र स्वेदं ज्ञात्वा विरेचनम् ७

स्नेहपानमात्राः
देया दीप्ताग्नये मात्रा स्नेहस्य पलसंमिता

मध्यमाय त्रिकर्षा स्याज्जघन्याय द्विकार्षिकी ८

स्नेहपानमात्राया अन्ये भेदाः
अथवा स्नेहमात्राः स्युस्तिस्रोऽन्या सर्वसम्मताः
अहोरात्रेण महती जीर्यत्यह्नि तु मध्यमा
जीर्यत्यल्पा दिनार्धेन सा विज्ञेया सुखावहा ९

मात्राभेदेन स्नेहपानगुणाः
अल्पा स्याद्दीपनी वृष्या स्वल्पदोषेषु पूजिता
मध्यमा स्नेहनी ज्ञेया बृंहणी भ्रमहारिणी १०

ज्येष्ठा कुष्ठविषोन्मादग्रहापस्मारनाशिनी ११

दोषानुसारेण घृतपानेऽनुपानव्यवस्था
केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम्
पेयं बहुकफे चापि व्योषक्षारसमन्वितम् १२

घृतपानयोग्या जनाः
रूक्षक्षतविषार्त्तानां वातपित्तविकारिणाम्
हीनमेधास्मृतीनां च सर्पिष्पानं प्रशस्यते १३

तैलपानयोग्या जनाः
कृमिकोष्ठानिलाविष्टाः प्रवृद्धकफमेदसः
पिबेयुस्तैलसात्म्या ये तैलं दार्ढ्यार्थिनस्तु ये १४

वसापानयोग्या जनाः
व्यायामकर्षिताः शुष्करेतोरक्ता महारुजः
महाग्निमारुतप्राणा वसायोग्या नराः स्मृताः १५

मज्जापानयोग्या जनाः
क्रूराशयाः क्लेशसहा वातार्त्ता दीप्तवह्नयः

मज्जानं च पिबेयुस्ते सर्पिर्वा सर्वतो हितम् १६

स्नेहपानसमयः
शीतकाले दिवा स्नेहमुष्णकाले पिबेन्निशि
वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा १७

तैलघृतयोर्विशिष्टकर्मनिर्देशः
नस्याभ्यञ्जनगण्डूषमूर्द्धकर्णाक्षितर्पणे
तैलं घृतं वा युञ्जीत दृष्ट्वा दोषबलाबलम् १८

स्नेहभेदेनानुपानभेदाः
घृते कोष्णजलं पेयं तैले यूषः प्रशस्यते
वसामज्ज्ञोः पिबेन्मण्डमनुपानं सुखावहम् १९

सान्नस्नेहपानस्य विषयाः
स्नेहद्विषः शिशून्वृद्धान्सुकुमारान्कृशानपि
उष्णकामानुष्णकाले सह भक्तेन पाययेत् २०

सद्यः स्नेहनयोगः
सर्पिष्मती बहुतिला यवागूः स्वल्पतण्डुला
सुखोष्णा सेव्यमाना तु सद्यः स्नेहनकारिणी २१

सद्यः स्नेहनयोगान्तरम्
शर्कराचूर्णसम्भृष्टे दोहनस्थे घृते तु गाम्
दुग्ध्वा क्षीरं पिबेदुष्णं सद्यःस्नेहनमुच्यते २२

स्नेहाजीर्णोपायः
मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्यति
विष्टभ्य वाऽपि जीर्येत वारिणोष्णेन वामयेत् २३

स्नेहाजीर्णप्रतीकारः

स्नेहस्याजीर्णशङ्कायां पिबेदुष्णोदकं नरः
तेनोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा २४

स्नेहपानजतृष्णा चिकित्सा
स्नेहेन पैत्तिकस्याग्निर्यदा तीक्ष्णतरीकृतः
तदाऽस्योदीरयेत्तृष्णां स्नेहमुष्णाम्बुना वमेत्
शीतं जलं पाययेच्च पिपासा तेन शाम्यति २५

स्नेहपानानर्हा नराः
अजीर्णी वर्जयेत्स्नेहमुदरी तरुणज्वरी
दुर्बलोऽरोचकी स्थूलो मूर्च्छार्त्तो मदपीडितः
दत्तवस्तिर्विरिक्तश्च वान्तस्तृष्णाश्रमान्वितः
अकालप्रसवा नारी दुर्दिने च विवर्जयेत् २६

स्नेहपानार्हा नराः
स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः
वृद्धा बालाः कृशा रूक्षाः क्षीणास्राः क्षीणरेतसः
वातार्त्तास्तिमिरार्त्ता ये तेषां स्नेहनमुत्तमम् २७

सुस्निग्धरूक्षयोर्लक्षणनिर्देशः
वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् २८

मृदुस्निग्धाङ्गताऽग्लानिः स्नेहावेगोऽथ लाघवम्
विमलेन्द्रियता सम्यक् स्निग्धे रूक्षे विपर्ययः २९

अतिस्निग्धस्य लक्षणम्
भक्तद्वेषो मुखस्रावो गुदे दाहः प्रवाहिका
तन्द्राऽतिसारः पाण्डुत्वं भृशं स्निग्धस्य लक्षणम् ३०

रूक्षातिस्निग्धयोरुपायः
रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम्

श्यामाकचणकाद्यैश्च तक्रपिण्याकसक्तुभिः ३१

स्नेहसेवनगुणाः
दीप्ताग्निःशुद्धकोष्ठश्च पुष्टधातुर्दृढेन्द्रियः
निर्जरो बलवर्णाढ्यः स्नेहसेवी भवेन्नरः ३२

स्नेहसेवने वर्ज्याः
स्नेहे व्यायामसंशीतवेगाघातप्रजागरान्
दिवास्वप्नमभिष्यन्दि रूक्षान्नं च विवर्जयेत् ३३

इति श्रीशार्ङ्गधरसंहितायामुत्तरखण्डे स्नेहपानविधिर्नाम प्रथमोऽध्यायः

## अथ स्वेदविधिर्नाम द्वितीयोऽध्यायः

तत्रादौ स्वेदभेदाः
स्वेदश्चतुर्विधः प्रोक्तस्तापोष्मौ स्वेदसंज्ञितौ
उपनाहो द्रवः स्वेदः सर्वे वातार्त्तिहारिणः १

दोषभेदेन स्वेदप्रयोगः
स्वेदौ तापोष्मजौ प्रायःश्लेष्मघ्नौ समुदीरितौ
उपनाहस्तु वातघ्नः पित्तसङ्गे द्रवो हितः २

रोगिबलाद्यनुसारेण स्वेदस्य त्रैविध्यनिर्देशः
महाबले महाव्याधौ शीते स्वेदो महान्स्मृतः
दुर्बले दुर्बलः स्वेदो मध्ये मध्यतमो मतः ३

दोषविशेषेण स्वेदविशेषनिर्देशः
बलासे रूक्षणः स्वेदो रूक्षस्निग्धः कफानिले
कफमेदावृते वाते कोष्णं गेहं रवेः करान् ४

नियुद्धं मार्गगमनं गुरुप्रावरणं ध्रुवम्
चिन्ताव्यायामभाराश्च सेवेतामयमुक्तये ५

प्रथमस्वेद्या जनाः
येषां नस्यं विधातव्यं वस्तिश्चापि हि देहिनाम्
शोधनीयाश्च ये केचित्पूर्वं स्वेद्याश्च ते मताः ६

उभयतः स्वेद्या जनाः
स्वेद्याः पूर्वं त्रयः प्लीहभगन्दर्यर्शसस्तथा
ग्रश्मर्यश्चातुरो जन्तुः समये शस्त्रकर्मणः ७

पश्चात्स्वेद्या जनाः
पश्चात्स्वेद्या गते शल्ये मूढगर्भगदे तथा
काले प्रजाताऽकाले वा पश्चात्स्वेद्या नितम्बिनी ८

स्वेदकालः
सर्वान्स्वेद्यान्निवाते च जीर्णाहारे च कारयेत् ९

स्वेदफलम्
स्वेदाद्धातुस्थिता दोषाः स्नेहक्लिन्नस्य देहिनः
द्रवत्वं प्राप्य कोष्ठान्तर्गता यान्ति विरेचताम् १०

स्वेदितस्य रक्षाविधिः
स्विद्यमानशरीरस्य हृदयं शीतलैः स्पृशेत्
स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी ११

स्वेदानर्हा जनाः
ग्रजीर्णी दुर्बलो मेही क्षतक्षीणः पिपासितः
ग्रतिसारी रक्तपित्ती पाराडुरोगी तथोदरी १२

मदार्त्तो गर्भिणी चैव न हि स्वेद्या विजानता
एतानपि मृदुस्वेदैः स्वेदसाध्यानुपाचरेत् १३

मृदुस्वेद्यान्यङ्गानि

मृदुस्वेदं प्रयुञ्जीत तथा हृन्मुष्कदृष्टिषु १४

अतिस्वेदजा रोगाः
अतिस्वेदात् सन्धिपीडा दाहस्तृष्णा क्लमो भ्रमः
पित्तासृक्पिटिकाकोपस्तत्र शीतैरुपाचरेत् १५

तापस्वेदलक्षणम्
तेषु तापाभिधः स्वेदो वालुकावस्त्रपाणिभिः
कपालकन्दुकाङ्गारैर्यथायोग्यं प्रयुज्यते १६

ऊष्मस्वेदविधिः
ऊष्मस्वेदः प्रयोक्तव्यो लोहपिण्डेष्टकाश्मभिः
प्रतप्तैरम्लसिक्तैश्च कार्ये रल्लकवेष्टिते १७

अथवा वातनिर्णाशिद्रव्यक्वाथरसादिभिः
उष्णैर्घटं पूरयित्वा पार्श्वे छिद्रं निधाय च
विमुद्र्यास्यं त्रिखण्डां च धातुजां काष्ठवंशजाम्
षडङ्गुलास्यां गोपुच्छां नलद्यं युञ्ज्याद् द्विहस्तिकाम् १८

सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतम्
हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम् १९

पुरुषायाममात्रां वा भूमिमुत्कीर्य खादिरैः
काष्ठैर्दग्ध्वा तथाऽभ्युक्ष्य क्षीरधान्याम्लवारिभिः २०

वातघ्नपत्रैराच्छाद्य शयानं स्वेदयेन्नरम्
एवं माषादिभिः स्विन्नैः शयानं स्वेदमाचरेत् २१

उपनाहस्वेदविधिः
अथोपनाहस्वेदं च कुर्याद्वातहरौषधैः
प्रदिह्य देहं वातार्त्तं क्षीरमांसरसान्वितैः

अम्लपिष्टैः सलवणैः सुखोष्णैः स्नेहसंयुतैः २२

महाशाल्वणस्वेदविधिः
उपग्राम्यानूपमांसैर्जीवनीयगणेन च २३

दधिसौवीरकक्षारैर्वीरतर्वादिना तथा
कुलत्थमाषगोधूमैरतसीतिलसर्षपैः २४

शतपुष्पादेवदारुशेफालीस्थूलजीरकैः
एरण्डमूलबीजैश्च रास्नामूलकशिग्रुभिः २५

मिशिकृष्णाकुठेरैश्च लवणैरम्लसंयुतैः
प्रसारिण्यश्वगन्धाभ्यां बलाभिर्दशमूलकैः २६

गुडूचीवानरीबीजैर्यथालाभं समाहृतैः
क्षुण्णैः स्विन्नैश्च वस्त्रेण बद्धैः संस्वेदयेन्नरम् २७

द्रवस्वेदलक्षणम्
द्रवस्वेदस्तु वातघ्नद्रव्यक्वाथेन पूरिते
कटाहे कोष्ठके वाऽपि सूपविष्टोऽवगाहयेत् २८

द्रवस्वेदविधिः
नाभेः षडङ्गुलं यावन्मग्नः क्वाथस्य धारया २९

कोष्णया स्कन्धयोः सिक्तस्तिष्ठेत्स्निग्धतनुर्नरः
एवं तैलेन दुग्धेन सर्पिषा स्वेदयेन्नरम् ३०

अवगाहनकालनियमः
एकान्तरे द्व्यन्तरे वा स्नेहो युक्तोऽवगाहने ३१

स्नेहावगाहनफलम्

शिरामुखैर्लोमकूपैर्धमनीभिश्च तर्पयेत्
शरीरे बलमाधत्ते युक्तः स्नेहोऽवगाहने ३२

स्नेहसिक्तस्य धातुवृद्धौ हेतुः
जलसिक्तस्य वर्धन्ते यथा मूलेऽङ्कुरास्तरोः
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते
नातः परतरः कश्चिदुपायो वातनाशनः ३३

स्वेदनविरत्यवस्थानिर्देशः
शीतशूलाद्युपरमे स्तम्भगौरवनिग्रहे
दीप्ताग्नौ मार्दवे जाते स्वेदनाद्विरतिर्मता ३४

स्वेदनोत्तरं कर्त्तव्यकर्माणि
सम्यक् स्विन्नं विमृदितं स्नानमुष्णाम्बुभिः शनैः
भोजयेच्चानभिष्यन्दि व्यायामं च न कारयेत् ३५

इति श्रीशार्ङ्गधरसंहितायामुत्तरखण्डे स्वेदविधिर्नाम द्वितीयोऽध्यायः

## अथ वमनविधिर्नाम तृतीयोऽध्यायः

तत्र वमनविरेचनयोः कालः
शरत्काले वसन्ते च प्रावृट्काले च देहिनाम्
वमनं रेचनं चैव कारयेत्कुशलो भिषक् १

वमनार्हा जनाः
बलवन्तं कफव्याप्तं हृल्लासार्त्तिनिपीडितम्
तथा वमनसात्म्यं च धीरचित्तं च वामयेत् २

वमनसाध्या रोगाः
विषदोषे स्तन्यरोगे मन्देऽग्नौ श्लीपदेऽबुदे
हृद्रोगकुष्ठवीसर्पमेहाजीर्णभ्रमेषु च ३

विदारिकाऽपचीकासश्वासपीनसवृद्धिषु
अपस्मारे ज्वरोन्मादे तथा रक्तातिसारिषु ४

नासाताल्वोष्ठपाकेषु कर्णस्रावे द्विजिह्वके
गलशुराड्यामतीसारे पित्तश्लेष्मगदे तथा
मेदोगदेऽरुचौ चैव वमनं कारयेद्भिषक् ५

वमनानर्हा जनाः
न वामनीयस्तिमिरी न गुल्मी नोदरी कृशः ६

नातिवृद्धो गर्भिणी च न स्थूलो न क्षतातुरः
मदार्त्तो बालको रूक्षः क्षुधितश्च निरूहितः ७

उदावर्त्तर्यूर्ध्वरक्ती च दुश्छर्दिः केवलानिली
पाराडुरोगी कृमिव्याप्तः पठनात्स्वरघातकः ८

वमनानर्हाणामपि वमनव्यवस्था
एतेऽप्यजीर्णव्यथिता वाम्या ये विषपीडिताः
कफव्याप्ताश्च ते वाम्या मधुकक्वाथपानतः ९

सुकुमारं कृशं बालं वृद्धं भीरुं न वामयेत्
पीत्वा यवागूमाकराठं क्षीरतक्रदधीनि वा १०

असात्म्यैः श्लेष्मलैर्भोज्यैर्दोषानुत्क्लिश्य देहिनः
स्निग्धस्विन्नाय वमनं दत्तं सम्यक्प्रवर्त्तते ११

क्रमेण वमनविरेचनयोर्हितकरपदार्थाः
वमनेषु च सर्वेषु सैन्धवं मधु वा हितम्
बीभत्सं वमनं दद्याद्विपरीतं विरेचनम् १२

वमनार्थकक्वाथनिर्माणविधिः

क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके
अर्धभागावशिष्टं च वमनेष्ववचारयेत् १३

भेडमतेन वामकक्वाथपानमात्रा
क्वाथपाने नवप्रस्था ज्येष्ठा मात्रा प्रकीर्त्तिता
मध्यमा षरािमता प्रोक्ता त्रिप्रस्था च कनीयसी १४

वामककल्कादिमात्रा
कल्कचूर्णावलेहानां त्रिपलं श्रेष्ठमात्रया
मध्यमं द्विपलं विद्यात्कनीयस्तु पलं भवेत् १५

उत्तमादिभेदेन वमनवेगसंख्याभेदाः
वमने चापि वेगाः स्युरष्टौ पित्तान्तमुत्तमाः
षड्वेगा मध्यमा वेगाश्चत्वारस्त्ववरे मताः १६

वमनादौ प्रस्थमानम्
वमने च विरेके च तथा शोणितमोक्षणे
सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः १७

दोषविशेषेण वामकद्रव्यविशेषनिर्देशः
कफं कटुकतीक्ष्णोष्णैः पित्तं स्वादु हिमैर्जयेत्
सुस्वादुलवणाम्लोष्णैः संसृष्टं वायुना कफम् १८

कृष्णा राठफलं सिन्धु कफे कोष्णजलैः पिबेत्
पटोलवासानिम्बैश्च पित्ते शीतजलं पिबेत् १९

सश्लेष्मवातपीडायां सक्षीरं मदनं पिबेत्
अजीर्णे कोष्णपानीयैः सिन्धु पीत्वा वमेत्सुधीः २०

वमनस्य प्रशस्तविधिः
वमनं पाययित्वा च जानुमात्रासने स्थितम्

कराठमेरराडनालेन स्पृशन्तं वामयेद्भिषक्
ललाटं वमतः पुंसः पार्श्वे द्वे च प्रदापयेत् २१

दुर्वान्तस्य लक्षणम्
प्रसेको हृद्ग्रहः कोठः कराडूर्दुश्छर्दिताद्भवेत् २२

अतिवान्तस्य लक्षणम्
अतिवान्ते भवेत्तृष्णा हिक्कोद्गारौ विसंज्ञता
जिह्वानिःसर्पणं चाक्ष्णोर्व्यावृत्तिर्हनुसंहतिः
रक्तच्छर्दिः ष्ठीवनं च कराठे पीडा च जायते २३

अतिवमनोत्पन्नरोगचिकित्सा
वमनस्यातियोगी तु मृदु कुर्याद्विरेचनम् २४

वमनान्तः प्रविष्टायां जिह्वायां कवलग्रहः
स्निग्धाम्ललवरौर्हृद्यैर्घृतक्षीररसैर्हितः २५

फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः
निःसृतां तु तिलद्राक्षाकल्कं लिप्त्वा प्रवेशयेत् २६

व्यावृत्तेऽक्षिणि घृताभ्यक्ते पीडयेच्च शनैः शनैः
हनुमोक्षे स्मृतः स्वेदो नस्यं च श्लेष्मवातहृत् २७

रक्तपित्तविधानेन रक्तच्छर्दिमुपाचरेत्
धात्रीरसाञ्जनोशीरलाजाचन्दनवारिभिः २८

मन्थं कृत्वा पाययेच्च सघृतक्षौद्रशर्करम्
शाम्यन्त्यनेन तृष्णाद्याः पीडाश्छर्दिसमुद्भवाः २९

सम्यग्वान्तस्य लक्षणम्
हृकत्कराठशिरसां शुद्धिर्दीप्ताग्नित्वं च लाघवम्

कफपित्तविनाशश्च सम्यग्वान्तस्य चेष्टितम् ३०

वान्तस्य पथ्यानि
ततोऽपराह्ने दीप्ताग्निं मुद्गषष्टिकशालिभिः
हृद्यैश्च जाङ्गलरसैः कृत्वा यूषं च भोजयेत् ३१

सुवान्ते फलम्
तन्द्रा निद्रास्यदौर्गन्ध्यं कण्डूश्च ग्रहणी विषम्
सुवान्तस्य न पीडायै भवन्त्येते कदाचन ३२

वमने कुपथ्यम्
अजीर्णं शीतपानीयं व्यायामं मैथुनं तथा
स्नेहाभ्यङ्गं प्रकोपं च दिनैकं वर्जयेत्सुधीः ३३
इति श्रीशार्ङ्गधरसंहितायामुत्तरखण्डे वमनविधिर्नाम तृतीयोऽध्यायः

## अथ विरेचनविधिर्नाम चतुर्थोऽध्यायः

तत्र विरेचनविषयः
स्निग्ध स्विन्नस्य वान्तस्य दद्यात्सम्यग्विरेचनम् १

वमनरहिते विरेचनदोषाः
अवान्तस्य त्वधःस्रस्तो ग्रहणीं छादयेत्कफः
मन्दाग्निं गौरवं कुर्याज्जनयेद्वा प्रवाहिकाम् २

अथवा पाचनैरामं बलासं च विपाचयेत्
स्निग्धस्य स्नेहनैः कार्यं स्वेदैः स्विन्नस्य रेचनम् ३

विरेचनकालः
शरदृतौ वसन्ते च देहशुद्ध्यै विरेचयेत्
अन्यदात्ययिके काले शोधनं शीलयेद् बुधः ४

दोषनाशे विरेचनस्य श्रेष्ठता

दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ५

विरेचनार्हा रोगाः
पित्ते विरेचनं युञ्ज्यादामोद्भूते गदे तथा
उदरे च तथाऽध्माने कोष्ठशुद्ध्यै विशेषतः ६

विरेचनानर्हा जनाः
बालवृद्धावतिस्निग्धः क्षतक्षीणो भयान्वितः
श्रान्तस्तृषार्त्तः स्थूलश्च गर्भिणी च नवज्वरी ७

नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी
शल्यार्दितश्चरूक्षश्च न विरेच्या विजानता ८

विरेचनार्हा जनाः
जीर्णज्वरी गरव्याप्तो वातरक्ती भगन्दरी
अर्शःपाराडूदरग्रन्थिहृद्रोगारुचिपीडिताः
योनिरोगप्रमेहार्त्ता गुल्मप्लीहव्रणार्दिताः ९

विद्रधिच्छर्दिविस्फोटविषूचीकुष्ठसंयुताः
कर्णनासाशिरोवक्त्रगुदमेढ्रामयान्विताः १०

प्लीहशोथाक्षिरोगार्त्ताः कृमिक्षीणानिलार्दिताः
शूलिनो मूत्रघातार्त्ता विरेकार्हा नरा मताः ११

विरेचनार्थे कोष्ठभेदाः
बहुपित्तो मृदुः कोष्ठो बहुश्लेष्मा च मध्यमः
बहुवातः क्रूरकोष्ठो दुर्वि रेच्यः स कथ्यते १२

कोष्ठानुरूपविरेचनमात्रानिर्देशः
मृद्वी मात्रा मृदौ कोष्ठे मध्यकोष्ठे च मध्यमा

क्रूरे तीक्ष्णा मता द्रव्यैर्मृदुमध्यमतीक्ष्णकैः १३

मृद्वादिविरेचनद्रव्यनिर्देशः
मृदुर्द्राक्षापयश्चञ्चुतैलैरपि विरिच्यते
मध्यमस्त्रिवृतातिक्ताराजवृक्षैर्विरिच्यते
क्रूरः स्नुक्पयसा हेमक्षीरदन्तीफलादिभिः १४

विरेचनसंख्याऽनुसारेण मात्राया उत्तमत्वादिनिर्देशः
मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफान्तिका
वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगिका १५

विरेके कषायादीनां मात्रानिर्देशः
द्विपलं श्रेष्ठमाख्यातं मध्यमं च पलं भवेत्
पलार्धे च कषायाणां कनीयस्तु विरेचनम् १६

कल्कमोदकचूर्णानां कर्षं मध्वाज्यलेहतः
कर्षद्वयं पलं वाऽपि वयोरोगाद्यपेक्षया १७

कोष्ठानुसारेण विरेकौषधव्यवस्था
पित्तोत्तरे त्रिवृच्चूर्णं द्राक्षाक्वाथादिभिः पिबेत्
त्रिफलाक्वाथगोमूत्रैः पिबेद् व्योषं कफार्दितः १८

त्रिवृत्सैन्धवशुण्ठीनां चूर्णमम्लैः पिबेन्नरः
वातार्दितो विरेकाय जाङ्गलानां रसेन वा १९

एरण्डतैलप्रयोगः
एरण्डतैलं त्रिफलाक्वाथेन द्विगुणेन च
युक्तं पीतं पयोभिर्वा न चिरेण विरिच्यते २०

वर्षादिषड्ऋतुषु क्रमेण षड् विरेचनयोगाः
त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् २१

समृद्वीकारसच्चौद्रं वर्षाकाले विरेचनम्
त्रिवृद्दुरालभामुस्ताशर्करोदीच्यचन्दनम् २२

द्राच्चाऽम्बुना सयष्टीकं शीतलं च घनात्यये
त्रिवृतां चित्रकं पाठामजाजीं सरलां वचाम् २३

हेमच्चीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत्
पिप्पली नागरं सिन्धु श्यामा त्रिवृतया सह २४

लिहेत्च्चौद्रेण शिशिरे वसन्ते च विरेचनम्
त्रिवृता शर्करा तुल्या ग्रीष्मकाले विरेचनम् २५

सर्वर्त्तुयोग्यो विरेचनयोगः
त्रिवृतां हपुषां दन्तीं सप्तलां कटुरोहिणीम्
स्वर्णच्चीरीं च सञ्चूर्ण्य गोमूत्रे भावयेत् त्र्यहम्
एष सर्वर्त्तुको योगः स्निग्धानां मलदोषहा २६

अभयादिमोदकः
अभया मरिचं शुण्ठीविडङ्गामलकानि च २७

पिप्पली पिप्पलीमूलं त्वक्पत्रं मुस्तमेव च
एतानि समभागानि दन्ती च द्विगुणा भवेत् २८

त्रिवृदष्टगुणा ज्ञेया षड्गुणा चात्र शर्करा
मधुना मोदकान्कृत्वा कर्षमात्रप्रमाणतः २९

एकैकं भच्चयेत्प्रातः शीतं चानुपिबेज्जलम्
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते ३०

पानाहारविहारेषु भवेन्निर्यन्त्रणः सदा
विषमज्वरमन्दाग्निपाण्डुकासभगन्दरान् ३१

दुर्नामकुष्ठगुल्मार्शोगलगण्डभ्रमोदरान्
विदाहप्लीहमेहांश्च यक्ष्माणं नयनामयान् ३२

वातरोगांस्तथाध्मानं मूत्रकृच्छ्राणि चाश्मरीम्
पृष्ठपार्श्वोरुजघनजङ्घोदररुजं जयेत् ३३

सततं शीलनादेषां पलितानि प्रणाशयेत्
अभयामोदका ह्येते रसायनवराः स्मृताः ३४

विरेचनान्ते कर्त्तव्यकर्मोपदेशः
पीत्वा विरेचनं शीतजलैः संसिच्य चक्षुषी
सुगन्धिं किंचिदाघ्राय ताम्बूलं शीलयेन्नरः ३५

निर्वातस्थो न वेगांश्च धारयेन्न स्वपेत्तथा
शीताम्बु न स्पृशेत्क्वापि कोष्णनीरं पिबेन्मुहुः ३६

सम्यग्विरिक्तस्य लक्षणम्
बलासौषधपित्तानि वायुर्वान्ते यथा व्रजेत्
रेकात्तथा मलं पित्तं भेषजं च कफो व्रजेत् ३७

दुर्विरिक्तस्य लक्षणम्
दुर्विरिक्तस्य नाभेस्तु स्तब्धत्वं कुक्षिशूलता
पुरीषवातसङ्गश्च कण्डूमण्डलगौरवाः
विदाहोऽरुचिराध्मानं भ्रमश्छर्दिश्च जायते ३८

दुर्विरिक्तस्य चिकित्सा
तं पुनः पाचनैः स्नेहैः पक्त्वा संस्निह्य रेचयेत्
तेनास्योपद्रवा यान्ति दीप्तोऽग्निर्लघुता भवेत् ३९

अतिविरिक्तस्य लक्षणम्
विरेकस्यातियोगेन मूर्च्छा भ्रंशो गुदस्य च ४०

शूलं कफातियोगः स्यान्मांसधावनसन्निभम्
मेदोनिभं जलाभासं रक्तं चापि विरिच्यते ४१

अतिविरिक्तस्य चिकित्सा
तस्य शीताम्बुभिः सिक्त्वा शरीरं तगडुलाम्बुभिः
मधुमिश्रैस्तथा शीतैः कारयेद्वमनं मृदु ४२

तत्र नाभिप्रलेपः
सहकारत्वचः कल्को दध्ना सौवीरकेग वा
पिष्टो नाभिप्रलेपेन हन्त्यतीसारमुल्बगम् ४३

तत्र पथ्यव्यवस्था
अजाद्मीरं रसं वाऽपि वैष्किरं हारिगां तथा
शालिभिः षष्टिकैः स्वल्पं मसूरैर्वाऽपि भोजयेत् ४४

तत्रोपायान्तरम्
शीतैः संग्राहिभिर्द्रव्यैः कुर्यात्संग्रहगां भिषक् ४५

सुविरिक्तस्य लद्मगम्
लाघवे मनसस्तुष्टावनुलोमे गतेऽनिले
सुविरिक्तं नरं ज्ञात्वा पाचनं पाययेन्निशि ४६

विरेचनस्य फलम्
इन्द्रियागां बलं बुद्धेः प्रसादो वह्निदीपनम्
धातुस्थैर्यं वयः स्थैर्यं भवेद्रेचनसेवनात् ४७

विरेचने निषिद्धकृत्यानि
प्रवातसेवां शीताम्बु स्नेहाभ्यङ्गमजीर्गताम्
व्यायामं मैथुनं चैव न सेवेत विरेचितः ४८

विरिक्तस्य पथ्यार्थे पेयादिद्रव्यागि

शालिषष्टिकमुद्गाद्यैर्यवागूं भोजयेत्कृताम्
जाङ्गलैर्विष्किराणां वा रसैः शाल्योदनं हितम् ४९
इति श्रीशार्ङ्गधरसंहितायामुत्तरखण्डे विरेचनविधिर्नाम चतुर्थोऽध्यायः

अथ बस्तिविधिर्नाम पञ्चमोऽध्यायः
तत्र बस्तेर्भेदो निरुक्तिश्च
बस्तिर्द्विधाऽनुवासाख्यो निरूहश्च ततः परम्
बस्तिभिर्दीयते यस्मात्तस्माद्बस्तिरिति स्मृतः १

अनुवासननिरूहबस्त्योर्लक्षणम्
यः स्नेहैर्दीयते स स्यादनुवासननामकः
कषायक्षीरतैलैर्यो निरूहः स निगद्यते २

अनुवासनादिबस्तीनामनुक्रमः
तत्रानुवासनाख्यो हि बस्तिर्यः सोऽत्र कथ्यते
पूर्वमेव ततो बस्तिर्निरूहाख्यो भविष्यति ३

निरूहादुत्तरश्चैव बस्तिः स्यादुत्तराभिधः
अनुवासनभेदश्च मात्राबस्तिरुदीरितः ४

मात्राबस्तौ स्नेहमात्रा
पलद्वयं तस्य मात्रा तस्मादर्धाऽपि वा भवेत् ५

अनुवास्या जनाः
अनुवास्यस्तु रूक्षः स्यात्तीक्ष्णाग्निः केवलानिली ६

अनुवासनायोग्या जनाः
नानुवास्यस्तु कुष्ठी स्यान्मेही स्थूलस्तथोदरी
नास्थाप्या नानुवास्याः स्युरजीर्णोन्मादतृड्युताः
शोकमूर्च्छाऽरुचिभयश्वासकासक्षयातुराः ७

बस्तिनेत्रकरणद्रव्याणि
नेत्रं कार्यं सुवर्णादिधातुभिर्वृक्षवेणुभिः
नलैर्दन्तैर्विषाणाग्रैर्मणिभिर्वा विधीयते ८

आयुर्विभेदेन नेत्रपरिमाणभेदाः
एकवर्षात्तु षड्वर्षं यावन्मानं षडङ्गुलम्
ततो द्वादशकं यावन्मानं स्यादष्टसम्मितम्
ततः परं द्वादशभिरङ्गुलैर्नेत्रदीर्घता ९

बस्तिनेत्रच्छिद्रपरिमाणम्
मुद्गच्छिद्रं कलायाभं छिद्रं कोलास्थिसन्निभम्
यथासङ्ख्यं भवेन्नेत्रं श्लक्ष्णं गोपुच्छसन्निभम् १०

आतुराङ्गुष्ठमानेन मूले स्थूलं विधीयते
कनिष्ठिकापरीणाहमग्रे च गुटिकामुखम् ११

तन्मूले कर्णिके द्वे च कार्ये भागाच्चतुर्थकात्
योजयेत्तत्र बस्तिं च बन्धद्वयविधानतः १२

बस्तिपुटकोपयोगिद्रव्यनिर्देशः
मृगाजशूकरगवां महिषस्यापि वा भवेत्
मूत्रकोशस्य बस्तिस्तु तदलाभेन चर्मजः
कषायरक्तः सुमृदुर्बस्तिः स्निग्धो दृढो हितः १३

व्रणबस्तिलक्षणम्
व्रणबस्तेस्तु नेत्रं स्याछ्लक्ष्णमष्टाङ्गुलोन्मितम्
मुद्गच्छिद्रं गृध्रपक्षनलिकापरिणाहि च १४

उचितबस्तिसेवनगुणाः
शरीरोपचयं वर्णं बलमारोग्यमायुषः
कुरुते परिवृद्धिं च बस्तिः सम्यगुपासितः १५

बस्तिकर्मोचितसमयनिर्देशः
दिवा शीते वसन्ते च स्नेहबस्तिः प्रदीयते
ग्रीष्मवर्षाशरत्काले रात्रौ स्यादनुवासनम् १६

बस्तिकाले भोजनविधानम्
न चातिस्निग्धमशनं भोजयित्वाऽनुवासयेत् १७

भोजनवैपरीत्ये बस्तिफलम्
मदं मूर्च्छां च जनयेद् द्विधा स्नेहः प्रयोजितः
रूक्षं भुक्तवतोऽत्यन्नं बलं वर्णश्च हीयते १८

बस्तेर्हीनातिमात्रयोर्निषेधः
हीनमात्रावुभौ बस्ती नातिकार्यकरौ स्मृतौ
अतिमात्रौ तथानाहक्लमातीसारकारकौ १९

बस्तिमात्रा
उत्तमस्य पलैः षड्भिर्मध्यमस्य पलैस्त्रिभिः
पलाद्यर्धेन हीनस्य युक्ता मात्राऽनुवासने २०

स्नेहबस्तौ सैन्धवशताह्वाचूर्णप्रक्षेपमानम्
शताह्वासैन्धवाभ्यां च देयं स्नेहे च चूर्णकम्
तन्मात्रोत्तममध्यान्त्याः षट्चतुर्द्वयमाषकैः २१

विरेचनानन्तरमेवानुवासनदानस्य नियमः
विरेचनात्सप्तरात्रे गते जातबलाय च
भक्तान्नायानुवास्याय बस्तिर्देयोऽनुवासनः २२

बस्तिप्रयोगविधिः
अथानुवास्यं स्वभ्यक्तमुष्णाम्बुस्वेदितं शनैः
भोजयित्वा यथाशास्त्रं कृतचङ्क्रमणं ततः २३

उत्सृष्टानिलविरामूत्रं योजयेत्स्नेहबस्तिना
सुप्तस्य वामपार्श्वेन वामजङ्घाप्रसारिणः२४

कुञ्चितापरजङ्घस्य नेत्रं स्निग्धगुदे न्यसेत्
बद्ध्वा बस्तिमुखं सूत्रैर्वामहस्तेन धारयेत् २५

पीडयेद्दक्षिणेनैव मध्यवेगेन धीरधीः
जृम्भाकासक्षवादींश्च बस्तिकाले न कारयेत् २६

बस्तिपीडने कालनिर्देशः
त्रिंशन्मात्रामितः कालः प्रोक्तो बस्तेस्तु पीडने
ततः प्रणिहितः स्नेह उत्तानो वाक्शतं भवेत् २७

मात्रालक्षणम्
जानुमरडलमावेष्ट्य कुर्याच्छोटिकया युतम्
एका मात्रा भवेदेषा सर्वत्रैष विनिश्चयः २८

बस्तिप्रणिधानोत्तराङ्गकृत्यम्
प्रसारितैः सर्वगात्रैर्यथावीर्यं विसर्पति
ताडयेत्तलयोरेनं त्रीन्वारांश्च शनैः शनैः २९

स्फिजोश्चैवं ततः श्रोणीं शय्यां चैवोत्क्षिपेत्ततः
जाते विधाने तु ततः कुर्यान्निद्रां यथासुखम् ३०

सम्यगनुवासितस्य लक्षणम्
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु
उपद्रवं विना शीघ्रं स सम्यगनुवासितः ३१

प्रत्यागते स्नेहे व्यवस्था
जीर्णान्नमथ सायाह्ने स्नेहेप्रत्यागते पुनः
लघ्वन्नं भोजयेत्कामं दीप्ताग्निस्तु नरो यदि ३२

अनुवासनव्यापत्तौ प्रतीकारः
अनुवासिताय दातव्यमितरेऽह्नि सुखोदकम्
धान्यशुण्ठीकषायो वा स्नेहव्यापत्तिनाशनम् ३३

दोषानुसारेण बस्तिमानसंख्यानिर्देशः
अनेन विधिना षड् वा सप्तवाऽष्टौ नवापि वा
विधेया बस्तयस्तेषामन्ते चैवनिरूहणम् ३४

संख्यात्मकस्नेहबस्तीनां गुणाः
दत्तस्तु प्रथमो वस्तिः स्नेहयेद्बस्तिवङ्क्षणौ
सम्यग्दत्तो द्वितीयस्तु मूर्धस्थमनिलं जयेत् ३५

बलं वर्णं च जनयेत्तृतीयस्तु प्रयोजितः
चतुर्थपञ्चमौ दत्तौ स्नेहयेतां रसासृजी ३६

षष्ठो मांसं स्नेहयति सप्तमो मेद एव च
अष्टमो नवमश्चापि मज्जानं च यथाक्रमम् ३७

एवं शुक्रगतान्दोषान्द्विगुणः साधु साधयेत्
अष्टादशाष्टादशकान्बस्तीनां यो निषेवयेत्
स कुञ्जरबलोऽप्यश्वं जयेत्तुल्योऽमरप्रभः ३८

रूक्षाय बहुवाताय स्नेहबस्तिं दिने दिने
दद्याद् वैद्यस्तथाऽन्येषामन्यां बाधामपाहरेत् ३९

स्नेहोऽल्पमात्रो रूक्षाणां दीर्घकालमनत्ययः
तथा निरूहः स्निग्धानामल्पमात्रः प्रशस्यते ४०

बस्तिदत्तस्नेहस्य तात्कालिकप्रत्यागतौ कर्त्तव्यं कर्म
अथवा यस्य तत्कालं स्नेहो निर्याति केवलः
तस्यान्योऽन्यतरो देयो न हि स्निह्यत्यतिष्ठति ४१

अनुवासनबस्तिस्नेहानिःसृतावुपद्रवास्तच्चिकित्सा च
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः
तदा शैथिल्यमाध्मानं शूलं श्वासश्च जायते ४२

पक्वाशये गुरुत्वं च तत्र दद्यान्निरूहणम्
तीक्ष्णं तीक्ष्णौषधैर्युक्ताफलवर्तिर्हिता तथा ४३

यथाऽनुलोमनं वायुर्मलं स्नेहश्च जायते
तथा विरेचनं दद्यात्तीक्ष्णं नस्यं च शस्यते ४४

स्नेहबस्तेरनिःसृतावप्युपद्रवानुत्पत्तौ कर्त्तव्यं कर्म
यस्य नोपद्रवं कुर्यात्स्नेहबस्तिरनिःसृतः
सर्वोऽल्पो वा वृते रौक्ष्यादुपेक्ष्यः स विजानता ४५

अहोरात्रादनिःसृते स्नेहे प्रतीकारः
अनायातं त्वहोरात्रे स्नेहं संशोधनैर्ह रेत्
स्नेहबस्तावनायाते नान्यः स्नेहो विधीयते ४६

अनुवासनार्थं गुडूच्यादितैलम्
गुडूच्येरराडपूतीकभार्ङ्गीविषकरोहिषम्
शतावरीं सहचरं काकनासां पलोन्मिताम् ४७

यवमाषातसीकोलकुलत्थान्प्रसृतोन्मितान्
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च ४८

पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः
अनुवासनमेतद्धि सर्ववातविकारनुत् ४९

बस्तिकर्मव्यापत्तिसंख्याचिकित्सयोर्निर्देशः
षटसप्ततिव्यापदस्तु जायन्ते बस्तिकर्मणः
दूषितात्समुदायेन ताश्चिकित्स्यास्तु सुश्रुतात् ५०

अनुवासनबस्तौ पथ्यव्यवस्था
पानहारविहाराश्च परिहाराश्च कृत्स्नशः
स्नेहपानसमाः कार्या नात्रकार्याविचारणा ५१

इति श्रीशार्ङ्गधरसंहितायामुत्तरखण्डे स्नेहबस्तिविधिर्नाम पञ्चमोऽध्यायः

अथ निरूहबस्तिविधिर्नाम षष्ठोऽध्यायः

तत्र तद्भेदानाह
निरूहबस्तिर्बहुधा भिद्यते कारणान्तरैः
तैरेव तस्य नामानि कृतानि मुनिपुङ्गवैः १

निरूहस्यापरं नाम प्रोक्तमास्थापनं बुधैः
स्वस्थानस्थापनाद्दोषधातूनां स्थापनं मतम् २

दोषाद्यपेक्षया निरूहमात्राः
निरूहस्य प्रमाणं च प्रस्थं पादोत्तरं परम्
मध्यमं प्रस्थमुद्दिष्टं हीनस्य कुडवास्त्रयः ३

आस्थापनबस्त्यनर्हा जनाः
अतिस्निग्धोत्क्लिष्टदोषौ क्षतोरस्कः कृशस्तथा
आध्मानच्छर्दिहिक्काऽश कासश्वासप्रपीडितः ४

गुदशोफातिसारार्त्तो विषूचीकुष्ठसंयुतः
गर्भिणी मधुमेही च नास्थाप्यश्च जलोदरी ५

निरूहणबस्तियोग्या जनाः
वातव्याधावुदावर्त्ते वातासृग्विषमज्वरे
मूर्च्छातृष्णोदरानाहमूत्रकृच्छ्राश्मरीषु च ६

वृद्धासृग्दरमन्दाग्निप्रमेहेषु निरूहणम्
शूलेऽम्लपित्ते हृद्रोगे योजयेद्विधिवद् बुधः ७

निरूहबस्तिदानविधिः
उत्सृष्टानिलविरामूत्रं स्निग्धस्विन्नमभोजितम्
मध्याह्ने गृहमध्ये च यथायोग्यं निरूहयेत् ८

स्नेहबस्तिविधानेन बुधः कुर्यान्निरूहराम्
जाते निरूहे च ततो भवेदुत्कटकासनः ९

तिष्ठेन्मुहूर्त्तमात्रं तु निरूहागमनेच्छया
अ्नायातं मुहूर्तं तु निरूहं शौधनैर्ह रेत्
निरूहैरेव मतिमान्द्वारमूत्राम्लसैन्धवैः १०

सुनिरूढलद्मराम्
यस्य क्रमेरा गच्छन्ति विट्पित्तकफवायवः
लाघवं चोपजायेत सुनिरूहं तमादिशेत् ११

दुर्निरूढलद्मराम्
यस्य स्याद्वस्तिरल्पाल्पवेगो हीनमलानिलः
मूर्च्छार्त्तिजाड्यारुचिमान्दुर्निरूहं तमादिशेत् १२

निरूहस्य बस्तिदानविधेयतानिर्देशः
अ्नेन विधिना युञ्ज्यान्निरूहं बस्तिदानवित् अृ
द्वितीयं वा तृतीयं वा चतुर्थं वा यथोचितम् १३

भोजनक्रमः
पित्तश्लेष्मानिलाविष्टं द्मीरयूषरसैः क्रमात्
निरूहं भोजयित्वा च ततस्तदनुवासयेत् १४

मृदुबस्तियोग्या जनाः
सुकुमारस्य वृद्धस्य बालस्य च मृदुर्हितः
बस्तिस्तीद्मराः प्रयुक्तस्तु तेषां हन्याद् बलायुषी १५

उत्क्लेशनादिबस्तीनां प्रयोगकालनिर्देशः
दद्यादुत्क्लेशनं पूर्वं मध्ये दोषहरं ततः
पश्चात्संशमनीयं च दद्याद्बस्तिं विचक्षणः १६

उत्क्लेशनबस्तिद्रव्याणि
एरण्डबीजं मधुकं पिप्पली सैन्धवं वचा
हपुषाफलकल्कश्च बस्तिरुत्क्लेशनः स्मृतः १७

दोषहरबस्तिद्रव्याणि
शताह्वा मधुकं बिल्वं कौटजं फलमेव च
सकाञ्जिकः सगोमूत्रो बस्तिर्दोषहरः स्मृतः १८

शमनबस्तिद्रव्याणि
प्रियङ्गुर्मधुकं मुस्ता तथैव च रसाञ्जनम्
सक्षीरः शस्यते बस्तिर्दोषाणां शमनः स्मृतः १९

शोधनबस्तिविधिः
शोधनद्रव्यनिष्क्वाथैस्तत्कल्कैः स्नेहसैन्धवैः
युक्त्या खजेन मथिता बस्तयः शोधनाः स्मृताः २०

लेखनबस्तिद्रव्याणि
त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमायुताः
ऊषकादिप्रतीवापैर्बस्तयो लेखनाः स्मृताः २१

बृंहणबस्तिद्रव्याणि
बृंहणद्रव्यनिष्क्वाथकल्कैर्मधुरकैर्युताः
सर्पिर्मांसरसोपेता बस्तयो बृंहणाः स्मृताः २२

पिच्छिलबस्तिद्रव्याणि
बदर्यैरावतीशेलुशाल्मलीधन्वनागराः
क्षीरसिद्धाः क्षौद्रयुक्ता नाम्ना पिच्छिलसंज्ञिताः २३

अजोरभ्रैणरुधिरैर्युक्ता देया विचक्षणैः
मात्रा पिच्छिलबस्तीनां पलैर्द्वादशभिर्मता २४

निरूहार्थं द्रव्याणां परिमाणपूर्वकं विधानम्
दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतिद्वयम्
विनिर्मथ्य ततो दद्यात्स्नेहस्य प्रसृतित्रयम् २५

एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं क्षिपेत्
संमूर्च्छिते कषायं तु चतुःप्रसृतिसंमितम् २६

क्षिप्त्वा विमथ्य दद्याच्च निरूहं कुशलो भिषक्
वाते चतुष्पलं क्षौद्रं दद्यात्स्नेहस्य षट्पलम् २७

पित्ते चतुष्पलं क्षौद्रं स्नेहं दद्यात्पलत्रयम्
कफे च षट्पलं क्षौद्रं क्षिपेत्स्नेहं चतुष्पलम् २८

मधुतैलिकबस्तिविधिः
एरगडक्वाथतुल्यांशं मधु तैलं पलाष्टकम् २९

शतपुष्पापलार्धेन सैन्धवार्धेन संयुतम्
मधुतैलिकसंज्ञोऽय बस्तिः खजविलोडितः ३०

मेदोगुल्मकृमिप्लीहमलोदावर्त्तनाशनः
बलवर्णकरश्चैव वृष्यो दीपनबृंहणः ३१

दीपनबस्तिविधिः
क्षौद्राज्यक्षीरतैलानां प्रसृतं प्रसृतं भवेत्
हपुषासैन्धवाक्षांशो बस्तिः स्याद्दीपनः परः ३२

युक्तरथबस्तिविधिः
एरगडमूलनिष्क्वाथो मधु तैलं ससैन्धवम्

एष युक्तरथो बस्तिः सवचापिप्पलीफलः ३३

सिद्धबस्तिविधिः
पञ्चमूलस्य निष्क्वाथस्तैलं मागधिका मधु
ससैन्धवः समधुकः सिद्धबस्तिरिति स्मृतः ३४

पथ्यापथ्यम्
स्नानमुष्णोदकैः कुर्याद्दिवास्वप्नमजीर्णताम्
वर्जयेदपरं सर्वमाचरेत्स्नेहबस्तिवत् ३५

इति श्रीशार्ङ्गधरसंहितायामुत्तरखण्डे निरूहबस्तिविधिर्नाम षष्ठोऽध्यायः

## अथोत्तरबस्तिविधिर्नाम सप्तमोऽध्यायः

तत्रादावुत्तरबस्तिस्वरूपम्
अतः परं प्रवक्ष्यामि बस्तिमुत्तरसञ्ज्ञितम्
द्वादशाङ्गुलकं नेत्रं मध्ये च कृतकर्णिकम्
मालतीपुष्पवृन्ताभं छिद्रं सर्षपसन्निभम् १

उत्तरबस्तौ स्नेहमात्रा
पञ्चविंशतिवर्षाणामधो मात्रा द्विकार्षिकी
तदूर्ध्वं पलमात्रा च स्नेहस्योक्ता भिषग्वरैः २

उत्तरबस्तिविधिः
अथास्थापनशुद्धस्य तृप्तस्य स्नानभोजनैः
स्थितस्य जानुमात्रे च पीठेऽन्विष्य शलाकया ३

स्निग्धया मेढ्रमार्गे च ततो नेत्रं नियोजयेत्
शनैः शनैर्घृताभ्यक्तं मेढ्ररन्ध्रेऽङ्गुलानि षट् ४

ततोऽवपीडयेद्बस्तिं शनैर्नेत्रं च निर्हरेत्
ततः प्रत्यागते स्नेहे स्नेहबस्तिक्रमो हितः ५

स्त्रीणां बस्तिदाने विधिः
स्त्रीणां कनिष्ठिकास्थूलं नेत्रं कुर्याद् दशांगुलम् ६

मुद्गप्रवेशं योज्यं च योन्यन्तश्चतुरङ्गुलम्
द्व्यङ्गुलं मूत्रमार्गे च सूक्ष्मं नेत्रं नियोजयेत् ७

बालानां बस्तिदाने विधिः
मूत्रकृच्छ्रविकारेषु बालानां त्वेकमङ्गुलम्
शनैर्निष्कम्पमाधेयं सूक्ष्मं नेत्रं विचक्षणः ८

स्त्रीणां बालानां च स्नेहमात्रा
योनिमार्गेषु नारीणां स्नेहमात्रा द्विपालिकी
मूत्रमार्गे पलोन्मानां बालानां च द्विकार्षिकी ९

स्त्रीणामुत्तरबस्तिदानप्रकारः
उत्तानायै स्त्रियै दद्यादूर्ध्वजान्वै विचक्षणः
अप्रत्यागच्छति भिषग्बस्तावुत्तरसंज्ञिते १०

भूयो बस्तिं निदध्याच्च संयुक्तैः शोधनैर्गणैः
फलवर्त्तिं निदध्याद्वा योनिमार्गे दृढां भिषक् ११

सूत्रैर्विनिर्मितां स्निग्धां शोधनद्रव्यसंयुताम्
दह्यमाने तथा बस्तौ दद्याद्बस्तिं विशारदः १२

क्षीरिवृक्षकषायेण पयसा शीतलेन वा
बस्तिः शुक्ररुजः पुंसां स्त्रीणामार्त्तवजां रुजम्
हन्यादुत्तरबस्तिस्तु नोचितो मेहिनां क्वचित् १३

उत्तरबस्तेर्गुणदोषाः
सम्यग्दत्तस्य लिङ्गानि व्यापदःक्रम एव च
बस्तेरुत्तरसंज्ञस्य समानं स्नेहबस्तिना १४

फलवर्त्तिलक्षणम्
घृताभ्यक्ते गुदे क्षेप्या श्लक्ष्णा स्वाङ्गुष्ठसंनिभा
मलप्रवर्त्तिनी वर्त्तिः फलवर्त्तिश्च सा स्मृता १५

इति श्रीशार्ङ्गधरसंहितायामुत्तरखण्डे उत्तरबस्तिविधिर्नाम सप्तमोऽध्यायः

अथ नस्यविधिर्नाम अष्टमोऽध्यायः

तत्र नस्यस्य निरुक्तिर्नाम च
नस्यं तत्कथ्यते धीरैर्नासाग्राह्यं यदौषधम्
नावनं नस्यकर्मेति तस्य नामद्वयं मतम् १

नस्यभेदाः
नस्यभेदो द्विधा प्रोक्तो रेचनं स्नेहनं तथा
रेचनं कर्षणं प्रोक्तं स्नेहनं बृंहणं मतम् २

नस्यकर्मकालः
कफपित्तानिलध्वंसे पूर्वमध्यापराह्णके
दिने तु गृह्यते नस्यं रात्रावप्युत्कटे गदे ३

नस्यानर्हाः समया जनाश्च
नस्यं त्यजेद्भोजनान्ते दुर्दिने चापतर्पणे
तथा नवप्रतिश्यायी गर्भिणी गरदूषितः ४

अजीर्णीदत्तबस्तिश्च पीतस्नेहोदकासवः
क्रुद्धः शोकाभिभूतश्च तृषाऽऽर्त्तो वृद्धबालकौ
वेगावरोधी स्नातश्च स्नातुकामश्च वर्जयेत् ५

नस्यार्हानर्हा अवस्थाः
अष्टवर्षस्य बालस्य नस्यकर्म समाचरेत्
अशीतिवर्षादूर्ध्वं च नावनं नैव दीयते ६

वैरेचनं नस्यम्
अथ वैरेचनं नस्यं ग्राह्यं तैलैः सुतीक्ष्णकैः
तीक्ष्णभेषजसिद्धैर्वा स्नेहैः क्वाथै रसैस्तथा ७

शिरोविरेचननस्यमात्रा
नासिकारन्ध्रयोरष्टौ षट् चत्वारश्च बिन्दवः
प्रत्येकं रेचने योज्या मुख्यमध्यान्त्यमात्रया ८

नस्यकर्मरायौषधप्रमाणम्
नस्यकर्मणि दातव्यं शाणैकं तीक्ष्णमौषधम्
हिङ्गु स्याद्यावमात्रं तु माषैकं सैन्धवं मतम् ९

क्षीरं चैवाष्टशाणं स्यात्पानीयं च त्रिकार्षिकम्
कार्षिकं मधुरं द्रव्यं नस्यकर्मणि योजयेत् १०

शिरोविरेचननस्यभेदाः
अवपीडः प्रधमनं द्वौ भेदावपरौ स्मृतौ
शिरोविरेचनस्यात्र तौ तु देयौ यथायथम् ११

अवपीडननस्यस्वरूपम्
कल्कीकृतादौषधाद्यः पीडितो निःसृतो रसः
सोऽवपीडः समुद्दिष्टस्तीक्ष्णद्रव्यसमुद्भवः १२

प्रधमननस्यस्वरूपम्
षडङ्गुला द्विवक्त्रा वा नाडी चूर्णं तया धमेत्
तीक्ष्णं कोलमितं वक्त्रवातैः प्रधमनं हि तत् १३

रेचननस्ययोर्योग्या जनाः
ऊर्ध्वजत्रुगते रोगे कफजे स्वरसंक्षये
अरोचके प्रतिश्याये शिरःशूले च पीनसे
शोफापस्मारकुष्ठेषु नस्यं वैरेचनं हितम् १४

स्नेहननस्ययोग्या जनाः
भीरुस्त्रीकृशबालानां नस्यं स्नेहेन दीयते १५

अवपीडननस्ययोग्या जनाः
गलरोगे सन्निपाते निद्रायां विषमज्वरे
मनोविकारे कृमिषु युज्यते चावपीडनम् १६

प्रधमननस्ययोग्या जनाः
अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते
चूर्णं प्रधमनं धीरैस्तद्धि तीक्ष्णतरं यतः १७

अथावपीडनप्रधमनयोः कतिपययोगाः
नस्यं स्याद् गुडशुण्ठीभ्यां पिप्पल्या सैन्धवेन च
जलपिष्टेन तेनाक्षिकर्णनासाशिरोगदाः १८

मन्याहनुगलोद्भूता नश्यन्ति भुजपृष्ठजाः १९

मधूकसारादिनस्यम्
मधूकसारकृष्णाभ्यां वचामरिचसैन्धवैः
नस्यं कोष्णजले पिष्टं दद्यात्सञ्ज्ञाप्रबोधनम्
अपस्मारे तथोन्मादे सन्निपातेऽपतन्त्रके २०

तन्द्रायां सैन्धवादि नस्यम्
सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठमेव च
बस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम् २१

तत्रैव मरिचादिप्रधमननस्यम्
रोहितमत्स्यपित्तेन भावितं सैन्धवं वचा २२

मरिचं पिप्पली शुण्ठी कङ्कोलं लशुनं परम्
कट्फलं चेति तच्चूर्णं देयं प्रधमनं बुधैः २३

बृंहणनस्यविधिः
अथ बृंहणनस्यस्य कल्पना कथ्यतेऽधुना
मर्शश्च प्रतिमर्शश्च द्वौ भेदौ स्नेहनौ मतौ २४

मर्शस्य तर्पणी मात्रा मुख्या शाणैः स्मृताऽष्टभिः
मध्यमा च चतुःशाणैर्हीना शाणमिता स्मृता २५

एकैकस्मिंस्तु मात्रेयं देया नासापुटे बुधैः
मर्शस्य द्वित्रिवेलं वा वीक्ष्य दोषबलाबलम् २६

एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः
त्र्यहं पञ्चाहमथवा सप्ताहंवा सुयन्त्रितम् २७

मर्शे शिरोविरेके च व्यापदो विविधाः स्मृताः
दोषोत्क्लेशात्क्षयाच्चैव विज्ञेयास्ता यथाक्रमम् २८

दोषोत्क्लेशनिमित्तासु युञ्ज्याद्वमनशोधनम्
अथ क्षयनिमित्तासु यथास्वं बृंहणं हितम् २९

शिरोनासाऽक्षिरोगेषु सूर्यावर्त्तार्धभेदके
दन्तरोगे बले हीने मन्याबाह्वंसजे गदे ३०

मुखशोषे कर्णनादे वातपित्तगदे तथा
अकालपलिते चैव केशश्मश्रुप्रपातने
युज्यते बृंहणं नस्यं स्नेहैर्वा मधुरद्रवैः ३१

तत्र कुङ्कुमनस्यम्
सशर्करं पयःपिष्टं भृष्टमाज्येन कुङ्कुमम् ३२

नस्यप्रयोगतो हन्याद्वातरक्तभवा रुजः
भ्रूशङ्खाक्षिशिरः कर्णसूर्यावर्त्तार्धभेदकान् ३३

अन्यद् बृंहणनस्यम्
नस्यं स्यादणुतैलेन तथा नारायणेन वा
माषादिना वा सर्पिर्भिस्तत्तद्भेषजसाधितैः ३४

दोषानुसारेण नस्ये स्नेहव्यस्था
तैलं कफे स्याद्वाते च केवले पवने वसा
दद्यान्नस्यं सदा पित्ते सर्पिर्मज्ञानमेव च ३५

पक्षाघातादौ माषादिनस्यम्
माषात्मगुप्तारास्नाभिर्बलारुबुकरोहिषैः
कृतोऽश्वगन्धया क्वाथो हिङ्गुसैन्धवसंयुतः ३६

कोष्णो नस्यप्रयोगेण पक्षाघातं सकम्पनम्
जयेदर्दितवातं च मन्यास्तम्भापबाहुकौ ३७

प्रतिमर्शनस्यमात्रा
प्रतिमर्शस्य मात्रा तु द्विद्विबिन्दुमिता मता
प्रत्येकशो नस्तकयोः स्नेहेनेति विनिश्चितम् ३८

विन्द्वात्मकमात्रालक्षणम्
स्नेहे ग्रन्थिद्वयं यावन्निमग्ना चोद्धृता ततः
तर्जनी यं स्रवेद्विन्दुं सा मात्रा बिन्दुसञ्ज्ञिता ३९

एवं विधैर्बिन्दुसञ्ज्ञैरष्टभिः शाण उच्यते
स देयो मर्शनस्ये तु प्रतिमर्शो द्विबिन्दुकः ४०

प्रतिमर्शनस्यस्य चतुर्दशसमयः
समयाः प्रतिमर्शस्य बुधैः प्रोक्ताश्चतुर्दश
प्रभाते दन्तकाष्ठान्ते गृहान्निर्गमने तथा ४१

व्यायामाध्वव्यवायान्ते विरामूत्रान्तेऽञ्जने कृते

कवलान्ते भोजनान्ते दिवासुप्तोत्थिते तथा
वमनान्ते तथा सायं प्रतिमर्शः प्रयुज्यते ४२

प्रतिमर्शनस्यस्य निषिक्तलक्षणम्
ईषदुच्छिङ्कनात्स्नेहो यदा वक्त्रं प्रपद्यते ४३

नस्ये निषिक्तं तं विद्यात्प्रतिमर्शप्रमाणतः
उच्छिन्दन्न पिबेच्चैतन्निष्ठीवेन्मुखमागतम् ४४

प्रतिमर्शनस्ययोग्या जनाः
क्षीणे तृष्णास्यशीर्षार्त्ते बाले वृद्धे च युज्यते
प्रतिमर्शेनशाम्यन्ति रोगाश्चैवोर्ध्वजत्रुजाः
वलीपलितनाशश्च बलमिन्द्रियजं भवेत् ४५

पलितरोगे नस्यम्
बिभीतनिम्बगम्भारी शिवा शेलुश्च काकिनी
एकैकतैलनस्येन पलितं नश्यति ध्रुवम् ४६

नस्यग्रहणविधिः
अथ नस्यविधिं वक्ष्ये नस्यग्रहणहेतवे
देशे वातरजोमुक्ते कृतदन्तनिघर्षणम् ४७

विशुद्धं धूमपानेन स्विन्नभालगलं तथा
उत्तानशायिनं किंचित्प्रलम्बशिरसं नरम् ४८

आस्तीर्णहस्तपादं च वस्त्राच्छादितलोचनम्
समुन्नमितनासाऽग्र वैद्यौ नस्येन योजयेत् ४९

कोष्णमच्छिन्नधारं च हेमतारादिशुक्तिभिः
शुक्त्या वा यत्र युक्त्या वा प्लोतैर्वा नस्यमाचरेत् ५०

नस्यप्रयोगसमये वर्ज्या विषयाः
नस्येष्वासिच्यमानेषु शिरो नैव प्रकम्पयेत्
न कुप्येन्न प्रभाषेत नोच्छिन्देन्नहसेत्तथा ५१

एतैर्हि विहितः स्नेहो नैवान्तः संप्रपद्यते ५२

नस्यप्रमादजा रोगाः
ततः कासप्रतिश्यायशिरोऽक्षिगदसम्भवः
शृङ्गाटकमभिप्लाव्य स्थापयेन्न गिलेद् द्रवम् ५३

नस्यधारणमात्रा
पञ्च सप्त दशैव स्युर्मात्रा नस्यस्य धारणे ५४

नस्यधारणानन्तरं कर्त्तव्यकर्म
उपविश्याथ निष्ठीवेन्नासावक्त्रगतं द्रवम्
वामदक्षिणपार्श्वाभ्यां निष्ठीवेत्सम्मुखे न हि ५५

नस्यानन्तरं त्याज्यकर्माणि
नस्ये नीते मनस्तापं रजः क्रोधं च सन्त्यजेत्
शयीत निद्रां त्यक्त्वा च प्रोत्तानो वाक्शतं नरः
तथा वैरेचनस्यान्ते धूमो वा कवलो हितः ५६

नस्यस्य लक्षणत्रयम्
नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः
शुद्धिहीनातियोगानि विशेषाच्छास्त्रचिन्तकैः ५७

शिरःशुद्धिलक्षणम्
लाघवं मनसः शुद्धिः स्रोतसां व्याधिसंक्षयः
चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम् ५८

हीनशुद्धिलक्षणम्

कराडूपदेहोगुरुता स्रोतसां कफसंस्रवः
मूर्ध्नि हीनविशुद्धेस्तु लन्नणं परिकीर्त्तितम् ५६

अतिशयशुद्धस्य लन्नणम्
मस्तुलुङ्गागमो वातवृद्धिरिन्द्रियविभ्रमः
शून्यता शिरसश्चापि मूर्ध्नि गाढं विरेचिते ६०

हीनातिसम्यक्शुद्धिक्रियाः
हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत्
सम्यग्विशुद्धे शिरसि सर्पिर्नस्ये निषेचयेत् ६१

अतिस्निग्धस्य लन्नणं चिकित्सा च
कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः
लन्नणं तदतिस्निग्धे तत्र रून्नं प्रदापयेत्
भोजयेच्चानभिष्यन्दि नस्याचारिकमादिशेत् ६२

पञ्चकर्मणां नामानि
वमनं रेचनं नस्यं निरूहश्चानुवासनम्
एतानि पञ्च कर्माणि कथितानि मुनीश्वरैः ६३

इति श्रीशार्ङ्गधरसंहितायामुत्तरखराडे नस्यविधिर्नामाष्टमोऽध्यायः

## अथ धूमपानविधिर्नाम नवमोऽध्यायः

तत्र धूमसंख्या
धूमस्तु षड्विधः प्रोक्तः शमनो बृंहणस्तथा
रेचनः कासहा चैव वामनो व्रणधूपनः १

शमनबृंहणरेचनधूमानां पर्यायाः
शमनस्य तु पर्यायौ मध्यः प्रायोगिकस्तथा
बृंहणस्यापि पर्यायौ स्नेहनो मृदुरेव च
रेचनस्यापि पर्यायौ शोधनस्तीन्दण एव च २

धूमपानानर्हा जनाः
अधूमार्हाश्च खल्वेते श्रान्तो भीतश्च दुःखितः ३

दत्तबस्तिर्विरिक्तश्च रात्रौ जागरितस्तथा
पिपासितश्च दाहार्तस्तालुशोषी तथोदरी ४

शिरोऽभितापी तिमिरी छर्द्याध्मानप्रपीडितः
क्षतोरस्कः प्रमेहार्तः पाण्डुरोगी च गर्भिणी ५

रूक्षः क्षीणोऽभ्यवहृतक्षीरक्षौद्रघृतासवः
भुक्तान्नदधिमत्स्यश्च बालो वृद्धः कृशस्तथा ६

अकाले धूमपाने दोषस्तत्प्रतीकारश्च
अकाले चातिपीतश्च धूमः कुर्यादुपद्रवान्
तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ७

सर्पिरिक्षुरसं द्राक्षां पयो वा शर्कराम्बु वा
मधुराम्लौ रसौ वाऽपि शमनाय प्रदापयेत् ८

धूमपानस्य समया गुणाश्च
धूमस्तु द्वादशाद्वर्षाद् गृह्यतेऽशीतिकान्न च
कासश्वासप्रतिश्यायान्मन्याहनुशिरोरुजः ९

वातश्लेष्मविकारांश्च हन्याद् धूमः सुयोजितः
धूमप्रयोगात्पुरुषः प्रसन्नेन्द्रियवाङ्मनाः
दृढकेशद्विजश्मश्रुः सुगन्धिवदनो भवेत् १०

धूमनलिकाविधानम्
धूमनाडी भवेत्तत्र त्रिखण्डा च त्रिपर्विका ११

कनिष्ठिकापरीणाहा राजमाषागमान्तरा

धूमनाडी भवेद्दीर्घा शमने रोगिणोऽङ्गुलैः १२

चत्वारिंशन्मितैस्तद्वद् द्वात्रिंशद्भिर्मृदौ मता
तीक्ष्णे चतुर्विंशतिभिः कासघ्नी षोडशोन्मितैः १३

दशाङ्गुलैर्वामनीये तथा स्याद् व्रणनाडिका
कलायमण्डलस्थूला कुलत्थागमरन्ध्रिका १४

धूमपानार्थमीषिकाविधानम्
अथेषिकां प्रलिम्पेच्च सुश्लक्ष्णां द्वादशाङ्गुलाम्
धूमद्रव्यस्य कल्केन लेपश्चाष्टाङ्गुलः स्मृतः १५

कल्कं कर्षमितं लिप्त्वा छायाशुष्कं च कारयेत्
ईषिकामपनीयाथ स्नेहाक्तां वर्त्तिमादरात् १६

अङ्गारैर्दीपितां कृत्वा धृत्वा नेत्रस्य रन्ध्रके
वदनेन पिबेद् धूमं वदनेनैव सन्त्यजेत् १७

नासिकाभ्यां ततः पीत्वा मुखेनैव वमेत्सुधीः
शरावसम्पुटे क्षिप्त्वा कल्कमङ्गारदीपितम्
छिद्रे नेत्रं निवेश्याथ व्रणं तेनैव धूपयेत् १८

शमनादिधूमानां द्रव्याणि
एलादिकल्कं शमने स्निग्धं सर्जरसं मृदौ
रेचने तीक्ष्णकल्कं च कासघ्नं क्षुद्रिकोषणम् १९

वामने स्नायुचर्माद्यं दद्याद् धूमस्य पानकम्
व्रणे निम्बवचाद्यं च धूपनं सम्प्रशस्यते २०

बालग्रहादिष्वपराजितो धूपः
अन्येऽपि धूमा गेहेषु कर्तव्या रोगशान्तये २१

मयूरपिच्छं निम्बस्य पत्राणि बृहतीफलम्
मरिचं हिङ्गु मांसी च बीजं कार्पाससम्भवम् २२

छागरोमाहिनिर्मोकं विष्ठा वैडालिकी तथा
गजदन्तश्च तच्चूर्णं किञ्चिद्घृतविमिश्रितम् २३

गेहेषु धूपनं दत्तं सर्वान्बालग्रहाञ्जयेत्
पिशाचान्राक्षसाञ्जित्वा सर्वज्वरहरं भवेत् २४

धूमपाने पथ्यं नेत्रद्रव्याणि च
परिहारस्तु धूमेषु कार्यो रेचननस्यवत्
नेत्राणि धातुजान्याहुर्नलवंशादिजान्यपि २५

इति श्रीशार्ङ्गधरसंहितायामुत्तरखण्डे धूमपानविधिर्नाम नवमोऽध्यायः

अथ गण्डूषकवलप्रतिसारणविधिर्नाम दशमोऽध्यायः

तत्र गण्डूषकवलयोर्भेदा
चतुर्विधः स्याद्गण्डूषः स्नैहिकः शमनस्तथा
शोधनो रोपणश्चैव कवलश्चापि तद्विधः १

तद्भेदानां प्रकाराः
स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः
पित्ते कट्वम्ललवणैरुष्णैः संशोधनः कफे २

कषायतिक्तमधुरैः कदुष्णो रोपणो व्रणे
चतुष्प्रकारो गण्डूषः कवलश्चापि कीर्त्तितः ३

गण्डूषकवलयोर्लक्षणम्
असञ्चारी मुखे पूर्णे गण्डूषः कवलश्चरः
तत्र द्रवेण गण्डूषः कल्केन कवलः स्मृतः ४

गरडूषकवलयोरौषधमात्रा
दद्याद् द्रवेषु चूर्णं च गरडूषे कोलमात्रकम्
कर्षप्रमाणः कल्कश्च दीयते कवले बुधैः ५

गरडूषस्य योग्याऽवस्था तद्धारणप्रमाणं च
धार्यन्ते पञ्चमाद्वर्षाद्गरडूषकवलादयः
गरडूषान्सुस्थितः कुर्यात्स्विन्नभालगलादिकः ६

मनुष्यस्त्रींस्तथा पञ्च सप्त वा दोषनाशनात्
कफपूर्णास्यता यावच्छेदो दोषस्य वा भवेत्
नेत्रघ्राणस्रुतिर्यावत्तावद् गरडूषधारणम् ७

वाते स्नैहिकगरडूषः
तिलकल्कोदकं क्षीरं स्नेहो वा स्नैहिके हितः ८

दाहनाशनगरडूषः
तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च
सक्षौद्रो हनुवक्त्रस्थो गरडूषो दाहनाशनः ९

मुखव्रणादौ मधुगरडूषः
वैशद्यं जनयत्यास्ये सन्दधाति मुखव्रणान्
दाहतृष्णाप्रशमनं मधुगरडूषधारणम् १०

विषक्षाराग्निदग्धे गरडूषः
विषक्षाराग्निदग्धे च सर्पिर्धार्यं पयोऽथवा ११

दन्तचाले गरडूषः
तैलसैन्धवगरडूषो दन्तचाले प्रशस्यते १२

मुखशोषे कफे च हितः काञ्जिकगरडूषः
शोषं मुखस्य वैरस्यं गरडूषः काञ्जिको जयेत्

सिन्धुत्रिकटुराजीभिरार्द्रकेण कफे हितः १३

कफरक्तपित्तनाशनो गराडूषः
त्रिफलामधुगराडूषः कफासृक्पित्तनाशनः १४

मुखपाकघ्नो गराडूषः
दार्वी गुडूची त्रिफला द्राक्षा जात्याश्च पल्लवाः
यवासश्चेति तत्क्वाथः षष्ठांशक्षौद्रसंयुतः
शीतो मुखे धृतो हन्यान्मुखपाकं त्रिदोषजम् १५

गराडूषादिषु परस्परं द्रव्यैक्यम्
यस्यौषधस्य गराडूषस्तस्यैव प्रतिसारणम्
कवलश्चापि तस्यैव ज्ञेयोऽत्र कुशलैर्नरैः १६

कफवातजारुचिनाशकः कवलः
केसरं मातुलुङ्गस्य सैन्धवोषणसंयुतम्
हन्यात्कवलतो जाड्यमरुचिं कफवातजाम् १७

प्रतिसारणप्रयोगमाह
प्रतिसारणप्रयोगभेदाः
कल्कोऽवलेहश्चूर्णं च त्रिविधं प्रतिसारणम्
अङ्गुल्यग्रगृहीतं च यथास्वं मुखरोगिणाम् १८

दन्तमुखकराठरोगेषु प्रतिसारणचूर्णम्
कुष्ठं दार्वी समङ्गा च पाठा तिक्ता च पीतिका
तेजनी मुस्तलोध्रे च चूर्णं स्यात्प्रतिसारणम्
रक्तस्रुतिं दन्तपीडां शोथं दाहं च नाशयेत् १९

गराडूषादीनां हीनातियोगजा दोषाः
हीनयोगात्कफोत्क्लेशो रसाज्ञानारुची तथा
अतियोगान्मुखे पाकः शोषस्तृष्णा क्लमो भवेत् २०

गण्डूषे शुद्धिलक्षणम्
व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम्
इन्द्रियाणां प्रसादश्च गण्डूषे शुद्धिलक्षणम् २१
इति श्रीशार्ङ्गधरसंहितायामुत्तरखण्डे गण्डूषादिविधिर्नाम दशमोऽध्यायः

अथ लेपविधिर्नाम एकादशोऽध्यायः

लेपस्य नामानि तद्भेदाश्च
आलेपस्य च नामानि लिप्तो लेपश्च लेपनम्
दोषघ्नो विषहा वर्ण्यो मुखलेपस्त्रिधा मतः १

लेपस्य मात्रा
त्रिप्रमाणश्चतुर्भागस्त्रिभागोऽधाङ्गुलोन्नतः
आर्द्रो व्याधिहरः स स्याच्छुष्को दूषयतिच्छविम् २

शोथघ्नो लेपः
पुनर्नवा दारु शुण्ठीं सिद्धार्थं शिग्रुमेव च
पिष्ट्वा चैवारनालेन प्रलेपः सर्वशोथजित् ३

दाहनाशको लेपः
बिभीतफलमज्जाया लेपो दाहार्त्तिनाशनः ४

विसर्पशोथव्रणादौ दशाङ्गलेपः
शिरीषं मधुयष्टी च तगरं रक्तचन्दनम्
एला मांसी निशायुग्मं कुष्ठं बालकमेव च
इति संचूर्ण्य लेपोऽय पञ्चमांशघृतप्लुतः ५

जलेन क्रियते सुज्ञैर्दशाङ्ग इति संज्ञितः
विसर्पान्विषविस्फोटशोथान्दुष्टव्रणाञ्जयेत् ६

आरुष्करशोथघ्नो लेपः

अजादुग्धतिलैर्लेपो नवनीतेन संयुतः
शोथमारुष्करं हन्ति लेपो वा कृष्णमृत्तिकैः ७

कीटघ्नो लेपः
लाङ्गल्यतिविषाऽलाबुजालिनीमूलबीजकैः
लेपो धान्याम्बुसम्पिष्टः कीटविस्फोटनाशनः ८

मुखकान्तिकरो लेपः
रक्तचन्दनमञ्जिष्ठलोध्रकुष्ठप्रियङ्गवः
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ९

मुखकान्तिकरं लेपान्तरम्
मातुलुङ्गजटा सर्पिः शिला गोशकृतो रसः
मुखकान्तिकरो लेपः पिटिकाव्यङ्गकालजित् १०

तारुण्यपिटिकाऽपहा लेपा
लोध्रधान्यवचालेपस्तारुण्यपिटिकाऽपहः
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनम्
सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम् ११

व्यङ्गहरा लेपाः
व्यङ्गेषु चार्जुनत्वग्वामञ्जिष्ठा वा समाक्षिका
लेपः सनवनीतो वा श्वेताश्वखुरजामषी १२

मुखकार्ष्ण्ये लेपः
अर्कक्षीरहरिद्राभ्यां मर्दयित्वा विलेपनात्
मुखकार्ष्ण्यं शमं याति चिरकालोद्भवं ध्रुवम् १३

तत्रैव लेपान्तरम्
वटस्य पाण्डुपत्राणि मालती रक्तचन्दनम् १४

कुष्ठं कालीयकं लोध्रमेभिर्लेपं प्रयोजयेत्
तारुरयपिटिकाव्यङ्गनीलिकादिविनाशनम् १५

अरुंषिकायां लेपः
पुराणमथ पिरयाकं पुरीषं कुक्कुटस्य च
मूत्रपिष्टः प्रलेपोऽय शीघ्रं हन्यादरुंषिकाम् १६

तत्रैव लेपान्तरम्
खदिरारिष्टजम्बूनां त्वग्भिर्वा मूत्रसंयुतैः
कुटजत्वक्सैन्धवं च लेपो हन्यादरुंषिकाम् १७

दारुणके लेपः
प्रियाल बीजमधुककुष्ठमाषैः ससैन्धवैः
कार्यो दारुणके मूर्ध्नि प्रलेपो मधुसंयुतः १८

तत्रैवान्यल्लेपद्वयम्
दुग्धेन खाखसं बीजं प्रलेपाद्दारुणं जयेत्
आम्रबीजस्य चूर्णं तु शिवाचूर्णसमं द्वयम्
दुग्धपिष्टः प्रलेपोऽय दारुणं हन्ति दारुणम् १९

इन्द्रलुप्ते लेपः
रसस्तिक्तपटोलस्य पत्राणां तद्विलेपनात्
इन्द्रलुप्तं शमं याति त्रिभिरेव दिनैर्ध्रुवम् २०

अत्रैवान्येऽपि लेपाः
इन्द्रलुप्तापहो लेपो मधुना बृहतीरसः
गुञ्जामूलं फलं वाऽपि भल्लातकरसोऽपि वा २१

केशवर्द्धको लेपः
गोक्षुरस्तिलपुष्पाणि तुल्ये च मधुसर्पिषी
शिरः प्रलेपनं तेन केशसंवर्धनं परम् २२

रोमोत्पादको लेपः
हस्तिदन्तमषीं कृत्वा छागीदुग्धं रसाञ्जनम्
रोमाण्यनेन जायन्ते लेपात्पाणितलेष्वपि २३

इन्द्रलुप्तघ्नोऽन्यो लेपः
यष्टीन्दीवरमृद्वीकातैलाज्यक्षीरलेपनैः
इन्द्रलुप्तं शमं याति केशाः स्युः सघना दृढाः २४

केशवर्द्धकोऽन्यो लेपः
चतुष्पदानां त्वग्रोमनखशृङ्गास्थिभस्मभिः
तैलेन सह लेपोऽय रोमसंजननः परः २५

केशकृष्णीकरणलेपः
इन्द्रवारुणिकाबीजतैलेनाभ्यङ्गमाचरेत्
प्रत्यहं तेन जायन्ते कुन्तला भृङ्गसन्निभाः २६

पलितघ्नो लेपः
अयोरजो भृङ्गराजस्त्रिफला कृष्णमृत्तिका
स्थितमिक्षुरसे मासं लेपनात्पलितं जयेत् २७

अन्यो लेपः
धात्रीफलत्रयं पथ्ये द्वे तथैकं बिभीतकम्
पञ्चाम्रमज्ञा लोहस्य कर्षैकं च प्रदीयते २८

पिष्ट्वा लोहमये भाण्डे स्थापयेदुषितं निशि
लेपोऽय हन्ति न चिरादकालपलितं महत् २९

अन्यः केशकृष्णीकरणलेपः
त्रिफला नीलिकापत्रं लोहं भृङ्गरजः समम्
अविमूत्रेण सम्पिष्टं लेपात्कृष्णीकरं स्मृतम् ३०

पलितनाशककल्पविधिः
त्रिफला लोहचूर्णं च दाडिमत्वग्बिसं तथा
प्रत्येकं पञ्चपलिकं चूर्णं कुर्याद्विचन्नणः ३१

भृङ्गराजरसस्यापि प्रस्थषट्कं प्रदापयेत्
न्निप्त्वा लोहमये पात्रे भूमिमध्ये निधापयेत् ३२

मासमेकं ततः कुर्याच्छागीदुग्धेन लेपनम्
कूर्चे शिरसि रात्रौ च संवेष्टयैररणडपत्रकैः ३३

स्वपेत्प्रातस्ततः कुर्यात्स्नानं तेन च जायते
पलितस्य विनाशश्च त्रिभिर्लेपैर्न संशयः ३४

केशनाशको लेपः
शङ्खचूर्णस्य भागौ द्वौ हरितालं च भागिकम् ३५

मनः शिला चार्धभागा स्वर्जिका चैकभागिका
लेपोऽय वारिपिष्टस्तु केशानुत्पाटय दीयते ३६

अनया लेपयुक्त्या च सप्तवेलं प्रयुक्तया
निर्मूलं केशस्थानं स्यात्न्नपणस्य शिरो यथा ३७

अन्यो लेपः
तालकं शाणयुग्मं स्यात्षट् शाणं शङ्खचूर्णकम्
द्विशाणिकं पलाशस्य न्नारं दत्त्वा प्रमर्दयेत् ३८

कदलीदरडतोयेन रविपत्ररसेन वा
अस्यापि सप्तभिर्लेपै रोम्णां शातनमुत्तमम् ३९

श्वित्रनाशको लेपः
सुवर्णपुष्पी कासीसं विडङ्गानि मनः शिला

रोचना सैन्धवं चैव लेपनाच्छिवत्रनाशनम् ४०

अन्योः लेपः
वायस्येडगजाकुष्ठकृष्णाभिर्गुटिका कृता
बस्तमूत्रेण सम्पिष्टा प्रलेपाच्छिवत्रनाशिनी ४१

लेपान्तरम्
तालकं शाणमात्रं स्याच्चतुःशाणा च वाकुची
गोमूत्रपिष्टं तच्चूर्णं लेपनाच्छिक्त्रनाशनम् ४२

सर्वश्वित्रहरलेपः
वाकुची वेतसो लाक्षा काकोदुम्बरिका कणा
रसाञ्जनमयश्चूर्णं तिलाः कृष्णास्तदेकतः ४३

चूर्णयित्वा गवां पित्तैः पिष्ट्वा च गुटिका कृता
अस्याः प्रलेपाच्छिवत्राणि प्रणश्यन्त्यतिवेगतः ४४

सिध्महरो लेपः
धात्री सर्जरसश्चैव यवक्षारश्च चूर्णितः
सौवीरेण प्रलेपोऽय प्रयोज्यः सिध्मनाशने ४५

अन्यो लेपः
दार्वी मूलकबीजानि तालकं सुरदारु च
ताम्बूलपत्रं सर्वाणि कार्षिकाणि पृथक्पृथक् ४६

शङ्खचूर्णं शाणमात्रं सर्वाण्येकत्र कारयेत्
लेपोऽय वारिणा पिष्टः सिध्मनां नाशनः परः ४७

नेत्ररोगहरो लेपः
हरीतकी सैन्धवं च गैरिकं च रसाञ्जनम्
विडालको जले पिष्टः सर्वनेत्रामयापहः ४८

अन्यो लेपः
रसाञ्जनं व्योषयुतं सम्पिष्टं वटकीकृतम्
कगडूं पाकान्वितां हन्ति लेपादञ्जननामिकाम् ४९

दद्रूकगड्वादौ लेपः
प्रपुन्नाटस्य बीजानि वाकुची सर्षपास्तिलाः
कुष्ठं निशाद्वयं मुस्तं पिष्ट्वा तक्रेण चैकतः
प्रलेपादस्य नश्यन्ति दद्रूकगडूविचर्चिकाः ५०

पामादिषु लेपः
हेमक्षीरी विडङ्गानि दरदं गन्धकस्तथा
दद्रूघ्नः कुष्ठसिन्दूरे सर्वाग्येकत्र मर्दयेत् ५१

धत्तूरनिम्बताम्बूलीपत्राणां स्वरसैः पृथक्
अस्य प्रलेपमात्रेण पामादद्रूविर्चिकाः ५२

कगडूश्च रकसश्चैव प्रशमं यान्ति वेगतः ५३

कगडूपामादिष्वन्यो लेपः
दूर्वाऽभया सैन्धवं च चक्रमर्दः कुठेरकः
एभिस्तक्रयुतो लेपः कगडूपामाविनाशनः ५४

तत्रैवान्यो लेपः
दूर्वानिशायुतो लेपः कगडूपामाविनाशनः
कृमिदद्रुहरश्चैव शीतपित्तापहः स्मृतः ५५

दद्रूघ्नो लेपः
सिद्धार्थरजनीकुष्ठप्रपुन्नाटतिलैः सह
कटुतैलेन संमिश्रं दद्रूघ्नं च प्रलेपनम् ५६

वातविसर्पहा लेपः

रास्ना नीलोत्पलं दारु चन्दनं मधुकं बला
घृतक्षीरयुतो लेपो वातवीसर्पनाशनः ५७

पित्तविसर्पहा लेपः
मृणालं चन्दनं लोध्रमुशीरं कमलोत्पलम्
सारिवामलकी पथ्या लेपः पित्तविसर्पनुत् ५८

कफविसर्पघ्नो लेपः
त्रिफला पद्मकोशीरं समङ्गा करवीरकम्
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ५९

पित्तवातरक्तघ्नो लेपः
मांसी सर्जरसो लोध्रं मधुकं सहरेणुकम्
मूर्वा नीलोत्पलं पद्मं शिरीषकुसुमैः सह
प्रलेपः पित्तवातास्रे शतधौतघृतप्लुतः ६०

नासासृतरक्तहरो लेपः
आमलं घृतभृष्टं तु पिष्टं काञ्जिकवारिभिः
जयेन्मूर्ध्नि प्रलेपेन रक्तं नासिकया सृतम् ६१

वातजशिरःपीडाहरो लेपः
कुष्ठमेरण्डतैलेन लेपात्काञ्जिकपेषितम्
शिरोऽत्ति वातजां हन्यात्पुष्पं वा मुचुकुन्दजम् ६२

अन्यो लेपः
देवदारुं नतं कुष्ठं नलदं विश्वभेषजम्
सकाञ्जिकः स्नेहयुक्तो लेपो वातशिरोऽत्तिनुत् ६३

रक्तपित्तजशिरःपीडाहरो लेपः
चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः
क्षीरपिष्टैः प्रलेपः स्याद्रक्तपित्तशिरोऽत्तिजित् ६४

रक्तपित्तहरो लेपः
धात्रीकसेरुह्रीबेरपद्मपद्मकचन्दनैः
दूर्वोशीरनलानां च मूलैः कुर्यात्प्रलेपनम् ६५

शिरोऽर्त्ति पित्तजां हन्याद्रक्तपित्तरुजं तथा ६६

कफजशिरःपीडाहरो लेपः
हरेणुनतशैलेयमुस्तैलागरुदारुभिः
मांसीरास्नारुबूकश्च कोष्णो लेपः कफार्त्तिनुत् ६७

अन्यो लेपः
शुण्ठीकुष्ठप्रपुन्नाटदेवकाष्ठैः सरोहिषैः
मूत्रपिष्टैः सुखोष्णैश्च लेपः श्लेष्मशिरोऽर्त्तिनुत् ६८

सूर्यावर्त्तार्धावभेदकयोर्लेपः
सारिवाकुष्ठमधुकवचाकृष्णोत्पलैस्तथा
लेपः सकाञ्जिकस्नेहः सूर्यावर्त्तार्धभेदयोः ६९

सर्वशिरःपीडाहरो लेपः
वरी नीलोत्पलं दूर्वा तिलाः कृष्णा पुनर्नवा
शङ्खकेऽनन्तवाते च लेपः सर्वशिरोऽर्त्तिजित् ७०

लेपस्य भेदद्वयम्
अथ लेपविधिश्चान्यः प्रोच्यते सुज्ञसम्मतः
द्वौ तस्य कथितौ भेदौ प्रलेपाख्यप्रदेहकौ ७१

तयोर्लक्षणम्
चर्मार्द्रं माहिषं यद्वत्प्रोन्नतं सा मितिस्तयोः
शीतस्तनुर्विशोषी च प्रलेपः परिकीर्त्तितः
आर्द्रो घनस्तथोष्णः स्यात्प्रदेहः श्लेष्मवातहा ७२

लेपविधिः
रोमाभिमुखमादेयौ प्रलेपाख्यप्रदेहकौ
वीर्यं सम्यग्विशत्याशु रोमकूपैः शिरामुखैः ७३

रात्रौ लेपनिषिद्धता
न रात्रौ लेपनं कुर्याच्छुष्यमाणं न धारयेत्
शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति ७४

रात्रिलेपनिषेधे हेतुः
तमसा पिहतो ह्यूष्मा रोमकूपमुखे स्थितः
विना लेपेन निर्याति रात्रौ नो लेपयेदतः ७५

रोगविशेषे रात्रौ लेपाज्ञा
रात्रावपि प्रलेपादिविधिः कार्यो विचक्षणैः
अपक्वशोथे गम्भीरे रक्तश्लेष्मसमुद्भवे ७६

व्रणविषये लेपक्रमनिर्देशः
आदौ शोथहरो लेपो द्वितीयो रक्तसेचनः
तृतीयश्चोपनाहः स्याच्चतुर्थः पाटनक्रमः ७७

पञ्चमः शोधनो भूयात्षष्ठो रोपण इष्यते
सप्तमो वर्णकरणो व्रणस्यैते क्रमा मताः ७८

वातजव्रणशोथहरो लेपः
बीजपूरजटा हिंस्रा देवदारु महौषधम्
रास्नाऽग्निमन्थो लेपोऽय वातशोथविनाशनः ७९

पित्तजव्रणशोथघ्नो लेपः
मधुकं चन्दनं मूर्वा नलमूलं च पद्मकम्
उशीरं बालकं पद्मं पित्तशोथे प्रलेपनम् ८०

कफजव्रणशोथघ्नो लेपः
कृष्णा पुराणपिरयाकं शिग्रुत्वक्सिकता शिवा
मूत्रपिष्टः सुखोष्णोऽय प्रदेहः श्लेष्मशोथहा ८१

आगन्तुकरक्तजव्रणशोथघ्नो लेपः
द्वे निशे चन्दने द्वे च शिवा दूर्वा पुनर्नवा ८२

उशीरं पद्मकं लोध्रं गैरिकं च रसाञ्जनम्
आगन्तुके रक्तजे च शोथे कुर्यात्प्रलेपनम् ८३

व्रणपाचको लेपः
शणमूलकशिग्रूणां फलानि तिलसर्षपाः
सवचः किरावमतसी प्रदेहः पाचनः स्मृतः ८४

व्रणदारणे लेपाः
तत्र दन्त्यादिलेपः
दन्ती चित्रकमूलत्वक्स्नुह्यर्कपयसी गुडः
भल्लातकास्थिकासीसं सैन्धवं दारणः स्मृतः ८५

चिरबिल्वादिलेपः
चिरबिल्वोऽग्निको दन्ती चित्रको हयमारकः
कपोतकङ्कगृध्राणां मलं लेपेन दारणम् ८६

स्वर्जिकादिहेमक्षीरीलेपौ
स्वर्जिकायावशूकाद्याः क्षारा लेपेन दारणाः
हेमक्षीर्यास्तथा लेपो व्रणे परमदारणः ८७

व्रणशोधनरोपणो लेपः
तिलसैन्धवयष्ट्याह्वनिम्बपत्रनिशायुगैः
त्रिवृद्घृतयुतैः पिष्टैः प्रलेपो व्रणशोधनः ८८

व्रणशोधनरोपणो लेपः
निम्बपत्रघृतक्षौद्रदार्वीमधुकसंयुतः
तिलैश्च सह संयुक्तो लेपः शोधनरोपणः ८९

व्रणकृमिघ्नो लेपः
करञ्जारिष्टनिर्गुण्डीलेपो हन्याद् व्रणकृमीन्
लशुनस्याथवा लेपो हिङ्गुनिम्बभवोऽथवा ९०

दुष्टव्रणप्रशमनो लेपः
निम्बपत्रं तिला दन्ती त्रिवृत्सैन्धवमाक्षिकम्
दुष्टव्रणप्रशमनो लेपः शोधनरोपणः ९१

अन्तर्विद्रधिजशूलघ्नो लेपः
मदनस्य फलं तिक्तां पिष्ट्वा काञ्जिकवारिणा
कोष्णं कुर्यान्नाभिलेपं शूलशान्तिर्भवेत्ततः ९२

वातविद्रधिहरो लेपः
शिग्रुशेफालिकैरण्डयवगोधूममुद्गकैः
सुखोष्णो बहलो लेपः प्रयोज्यो वातविद्रधौ ९३

पित्तविद्रधिहरो लेपः
पैत्तिके सर्पिषा लाजामधुकैः शर्कराऽन्वितैः
प्रलिम्पेत्क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ९४

कफविद्रधिहरो लेपः
इष्टिका सिकता लोहकिट्टं गोशकृता सह
सुखोष्णश्च प्रदेहोऽय मूत्रैः स्याच्छ्लेष्मविद्रधौ ९५

आगन्तुकविद्रधिहरो लेपः
रक्तचन्दनमञ्जिष्ठानिशामधुकगैरिकैः
क्षीरेण विद्रधौ लेपो रक्तागन्तुनिमित्तजे ९६

वातजगलगराडहरो लेपः
निचुलः शिग्रुबीजानि दशमूलमथापि वा
प्रदेहो वातगराडेषु सुखोष्णः सम्प्रदीयते ९७

कफजगलगराडहरो लेपः
देवदारु विशाला च कफगराडे प्रदेहकः ९८

अपचीनाशको लेपः
सर्षपारिष्टपत्राणि दग्ध्वा भल्लातकैः सह
छागमूत्रेण संपिष्टमपचीघ्नं प्रलेपनम् ९९

गराडमालादिषु लेपः
सर्षपाः शिग्रुबीजानि शणबीजातसीयवाः
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत्
गराडमालाऽबुदं गराडं लेपेनानेन शाम्यति १००

गृधस्यादिषु लेपः
तचयित्वा चुरेणाङ्गं केवलानिलपीडितम्
तत्र प्रदेहं दद्याच्च पिष्टं गुञ्जाफलैः कृतम् १०१

तेनापबाहुजा पीडा विश्वाची गृध्रसी तथा
अन्याऽपि वातजा पीडा प्रशमं याति वेगतः१०२

श्लीपदरोगहरो लेपः
धत्तूरैरराडनिर्गुराडीवर्षाभूशिग्रुसर्षपैः
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् १०३

कुरराडघ्नो लेपः
आजाजीहपुषाकुष्ठमेरराडबदरान्वितम्
काञ्जिकेन तु संपिष्टं कुरराडघ्नं प्रलेपनम् १०४

उपदंशे लेपः
करवीरस्य मूलेन परिपिष्टेन वारिणा
असाध्याऽपि व्रजत्यस्तं लिङ्गोत्था रुक्प्रलेपनात् १०५

तत्रान्यो लेपः
दहेत्कटाहे त्रिफलां सा मषी मधुसंयुता
उपदंशे प्रलेपोऽय सद्यो रोपयति व्रणम् १०६

अन्यो लेपः
रसाञ्जनं शिरीषेण पथ्यया च समन्वितम्
सक्षौद्रं लेपनं योज्यमुपदंशगदापहम् १०७

अग्निदग्धे लेपाः
अग्निदग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः
सामृतैः सर्पिषा स्निग्धैरालेपं कारयेद्भिषक् १०८

तिन्दुकीत्वक्कषायैर्वा घृतमिश्रः प्रलेपयेत्
यवान्दग्ध्वा मषी कार्या तैलेन युतया तथा
दद्यात्सर्वाग्निदग्धेषु प्रलेपो व्रणरोपणः १०९

योनिसङ्कोचको लेपः
पलाशोदुम्बरफलैस्तिलतैलसमन्वितैः
मधुना योनिमालिम्पेद् गाढीकरणमुत्तमम् ११०

तत्रैवान्यो लेपः
माकन्दफलसंयुक्तमधुकर्पूरलेपनात्
गतेऽपि यौवने स्त्रीणां योनिर्गाढाऽतिजायते १११

लिङ्गस्तनादिवृद्धौ लेपः
मरिचं सैन्धवं कृष्णा तगरं बृहतीफलम् ११२

अपामार्गस्तिलाः कुष्ठं यवा माषाश्च सर्षपाः
अश्वगन्धा च तच्चूर्णं मधुना सह योजयेत् ११३

अस्य सन्ततलेपेन मर्दनाच्च प्रजायते
लिङ्गवृद्धिः स्तनोत्सेधः संहतिर्भुजकर्णयोः ११४

लिङ्गवृद्धिकरो लेपः
सिताऽश्वगन्धासिन्धूत्थछागक्षीरैर्घृतं पचेत्
तल्लेपान्मर्दनाल्लिङ्गवृद्धिः सञ्जायते परा ११५

योनिद्रावकरो लेपः
इन्द्रवारुणिकापत्ररसैः सूतं विमर्दयेत्
रक्तस्य करवीरस्य काष्ठेन च मुहुर्मुहुः
तल्लिप्तलिङ्गसंयोगाद्योनिद्रावोऽभिजायते ११६

गात्रदुर्गन्धहरो लेपः
ताम्बूलपत्रचूर्णं तु चूर्णं कुष्ठशिवाभवम्
वारिणा लेपनं कुर्याद् गात्रदौर्गन्ध्यनाशनम् ११७

स्वेददौर्गन्ध्यहरो लेपः
कुलित्थसक्तवः कुष्ठं मांसी चन्दनजं रजः ११८

सक्तवश्चणकस्यैव त्वक्चैवैकत्र कारयेत्
स्वेददौर्गन्ध्यनाशश्च जायतेऽस्यावधूलनात् ११९

वशीकरणलेपः
वचा सौवर्चलं कुष्ठं रजन्यौ मरिचानि च
एतल्लेपप्रभावेण वशीकरणमुत्तमम् १२०

अथ मूर्धतैलविधिः
तत्र मूर्धतैलभेदाः

अभ्यङ्गः परिषेकश्च पिचुर्बस्तिरिति क्रमात्
मूर्धतैलं चतुर्धा स्याद्बलवच्च यथोत्तरम् १२१

केवलशिरोबस्तिविधिकथने हेतुनिर्देशः
त्रयोऽभ्यङ्गादयः पूर्वे प्रसिद्धाःसर्वतःस्मृताः
शिरोबस्तिविधिश्चात्र प्रोच्यतेसुज्ञसंमतः १२२

अथ शिरोबस्तिविधिः
शिरोबस्तिश्चर्मणःस्याद् द्विमुखो द्वादशाङ्गुलः
शिरः प्रमाणं तं बद्ध्वा मस्तके माषपिष्टकैः
सन्धिरोधं विधायादौ स्नेहैः कोष्णैः प्रपूरयेत् १२३

तत्र शिरोबस्तिधारणकालविधिनिर्देशः
तावद्धार्यस्तु यावत्स्यान्नासानेत्रमुखस्रुतिः
वेदनोपशमोवाऽपि मात्राणां वा सहस्रकम् १२४

शिरोबस्तिप्रयोगकालविधिनिर्देशः
विना भोजनमेवात्र शिरोबस्तिः प्रशस्यते
प्रयोज्यस्तु शिरोबस्तिः पञ्चसप्ताहमेव वा १२५

शिरोबस्त्युत्तराङ्गकृत्यम्
विमोच्य शिरसोबस्तिं गृह्णीयाच्च समन्ततः
उर्ध्वकायं ततः कोष्णनीरैः स्नानं च कारयेत् १२६

शिरोबस्तिगुणाः
अनेन दुर्जया रोगा वातजा यान्ति सङ्क्षयम्
शिरः कम्पादयस्तेन सर्वकालेषु युज्यते १२७

कर्णपूरणविधिः
स्वेदयेत्कर्णदेशं तु किञ्चिन्नुः पार्श्वशायिनः
मूत्रैः स्नेहै रसैः कोष्णैस्ततः श्रोत्रं प्रपूरयेत् १२८

कर्णस्थौषधधारणकालावधिः
कर्णं च पूरितं रक्षेच्छतं पञ्चशतानि वा
सहस्त्रं वाऽपि मात्राणां श्रोत्रकराठशिरोगदे १२९

मात्रालक्षणम्
स्वजानुनः करावर्त्तं कुर्याच्छोटिकया युतम्
एषा मात्रा भवेदेका सर्वत्रैवैष निश्चयः १३०

रसाद्यनुसारेण कर्णपूरणसमयभेदः
रसाद्यैः पूरणं कर्णे भोजनात्प्राक्प्रशस्यते
तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते १३१

कर्णशूलहरो रसः
पीतार्कपत्रमाज्येन लिप्तं वह्नौ प्रतापयेत्
तद्रसः श्रवणे क्षिप्तः कर्णशूलहरः परः १३२

कर्णशूले बस्तमूत्रप्रयोगः
कर्णशूलातुरे कोष्णं बस्तमूत्रं ससैन्धवम्
निःक्षिपेत्तेन शाम्यन्ति शूलपाकादिका रुजः १३३

कर्णशूलेऽन्ये प्रयोगाः
शृङ्गबेरं च मधुकं मधु सैन्धवमामलम् १३४

तिलपर्णीरसस्तैलं टङ्कणं निम्बुकद्रवम्
कदुष्णं कर्णयोर्देयमेतद्वा वेदनाऽपहम् १३५

तत्रैव प्रयोगान्तरम्
कपित्थमातुलुङ्गाम्लशृबेररसैः शुभैः
सुखोष्णैः पूरयेत्कर्णं कर्णशूलोपशान्तये १३६

तत्रैवार्काङ्कुरप्रयोगः

अर्काङ्कुरानम्लपिष्टांस्तैलाक्तांल्लवणान्वितान्
सन्निदध्यात्स्नुहीकाण्डे कोरितेतच्छदावृते १३७

पुटपाकक्रमं कृत्वा रसैस्तच्च प्रपूरयेत्
सुखोष्णैस्तेन शाम्यन्ति कर्णपीडाः सुदारुणाः १३८

तत्रैव दीपिकातैलम्
महतः पञ्चमूलस्य काण्डान्यष्टाङ्गुलानि च
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः १३९

यत्तैलं च्यवते तेभ्यः सुखोष्णं तेन पूरयेत्
ज्ञेयं तद्दीपिकातैलंसद्यो गृह्णातिवेदनाम्
एवं स्याद्दीपिकातैलं कुष्ठे देवतरौ तथा १४०

तत्रैव स्योनाकतैलम्
तैलं स्योनाकमूलेन मन्देऽग्नौ परिपाचितम्
हरेदाशु त्रिदोषोत्थं कर्णशूलं प्रपूरणात् १४१

कर्णनादे यष्टीवसा
कल्कक्वाथेन यष्ट्याह्वकाकोलीमाषधान्यकैः
सूकरस्य वसां पक्त्वा कर्णनादार्त्तिनाशिनी १४२

कर्णरोगे स्वर्जिकादितैलम्
स्वर्जिका मूलकं शुष्कं हिङ्गु कृष्णासमन्वितम् १४३

शतपुष्पा च तैस्तैलं पक्वं शुक्तचतुर्गुणम्
प्रणादं शूलबाधिर्यं स्रावं कर्णस्य नाशयेत् १४४

बाधिर्येऽपामार्गक्षारतैलम्
अपामार्गक्षारजले तत्क्षारं कल्कितं क्षिपेत्
तेन पक्वं जयेत्तैलं बाधिर्यं कर्णनादकम् १४५

कर्णनाड्यां शम्बूकतैलम्
शम्बूकस्य तु मांसेन पचेत्तैलं तु सार्षपम्
तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति १४६

कर्णस्रावनाशको योगः
चूर्णं पञ्चकषायाणां कपित्थरसमेव च
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह १४७

पञ्च कषायाः
तिन्दुकान्यभया लोध्रः समङ्गा चामलक्यपि
ज्ञेयाः पञ्च कषायास्तु कर्मरायस्मिन्भिषग्वरैः १४८

कर्णस्रावादौ स्वर्जिकादियोगः
स्वर्जिकाचूर्णसंयुक्तं बीजपूररसं क्षिपेत्
कर्णस्रावरुजा दाहाः प्रणश्यन्ति न संशयः १४९

पूतिकर्णे आम्रादितैलम्
आम्रजम्बूप्रवालानि मधूकस्य वटस्य च
एभिः संसाधितं तैलं पूतिकर्णोपशान्तिकृत् १५०

कर्णकीटनाशकौ योगौ
पूरणं हरितालेन गवां मूत्रयुतेन च
अथवा सार्षपं तैलं कर्णकीटहरं परम् १५१

कर्णकीटेऽन्यो योगः
स्वरसं शिग्रुमूलस्य सूर्यावर्त्तरसं तथा
त्र्यूषणं चूर्णितं चैव कपिकच्छूजटारसम्
कृत्वैकत्र क्षिपेत्कर्णे कर्णकीटहरं परम् १५२

अन्यौ योगौ
सद्यो मद्यं निहन्त्याशु कर्णकीटं सुदारुणम्

सद्यो हिङ्गुनिहन्त्याशु कर्णकीटं सुदारुणम्

इति श्रीशार्ङ्गधरसंहितायामुत्तरखराडे
लेपमूर्धतैलकर्णपूरणविधिर्नामैकादशोऽध्यायः

अथ शोणितस्रावविधिर्नाम द्वादशोऽध्यायः

तत्र शोणितस्रावमानम्
शोणितं स्रावयेज्जन्तोरामयं प्रसमीक्ष्य च
प्रस्थं प्रस्थार्द्धकं वाऽपि प्रस्थार्धार्धमथापि वा १

रक्तस्रावसमयः
शरत्काले स्वभावेन कुर्याद्रक्तस्रुतिं नरः
त्वग्दोषग्रन्थिशोथाद्या न स्यू रक्तस्रुतेर्यतः २

रक्तस्य प्रकृतिनिर्देशः
मधुरं वर्णतो रक्तमशीतोष्णं तथा गुरु
शोणितं स्निग्धविस्त्रं स्याद्विदाहश्चास्य पित्तवत् ३

रक्ते पञ्चमहाभूतगुणाः
विस्त्रता द्रवता रागश्चलनं विलयस्तथा
भूम्यादिपञ्चभूतानामेते रक्तगुणाः स्मृताः ४

दुष्टरक्तलक्षणम्
रक्ते दुष्टे वेदना स्यात्पाको दाहश्च जायते
रक्तमराडलता कराडूः शोथश्च पिटिकोद्गमः ५

रक्तवृद्धिलक्षणम्
वृद्धे रक्ताङ्गनेत्रत्वं शिराणां पूरणं तथा
गात्राणां गौरवं निद्रा मदो दाहश्च जायते ६

क्षीणरक्तलक्षणम्

क्षीणेऽम्लमधुराकाङ्क्षा मूर्च्छा च त्वचि रूक्षता
शैथिल्यं च शिराणां स्याद्वातादुन्मार्गगामिता ७

वातदूषितरक्तलक्षणम्
अरुणं फेनिलं रूक्षं परुषं तनु शीघ्रगम्
अस्कन्दि सूचिनिस्तोदि रक्तं स्याद्वातदूषितम् ८

पित्तदूषितरक्तलक्षणम्
पित्तेन पीतं हरितं नीलं श्यावं च विस्रकम्
अस्कन्द्युष्णं मक्षिकाणां पिपीलानामनिष्टकम् ९

कफदूषितरक्तलक्षणम्
शीतलं बहलं स्निग्धं गैरिकोदकसन्निभम्
मांसपेशीप्रभं स्कन्दि मन्दगं कफदूषितम् १०

द्वित्रिदोषदुष्टरक्तयोर्लक्षणम्
द्विदोषदुष्टं संसृष्टं त्रिदुष्टं पूतिगन्धकम्
सर्वलक्षणसंयुक्तं काञ्जिकाभं च जायते ११

विषदूषितरक्तलक्षणम्
विषदुष्टं भवेच्छ्यावं नासिकोन्मार्गगं तथा
विस्रं काञ्जिकसङ्काशं सर्वकुष्ठकरं बहु १२

शुद्धरक्तलक्षणम्
इन्द्रगोपप्रभं ज्ञेयं प्रकृतिस्थमसंहतम् १३

रक्तस्रावसाध्या रोगाः
शोथे दाहेऽङ्गपाके च रक्तवर्णेऽसृजः स्रुतौ
वातरक्ते तथा कुष्ठे सपीडे दुर्जयेऽनिले
पाणिरोगे श्लीपदे च विषदुष्टे च शोणिते १४

ग्रन्थ्यर्बुदापचीक्षुद्ररोगरक्ताधिमन्थिषु
विदारीस्तनरोगेषु गात्राणां सादगौरवे १५

रक्ताभिष्यन्दतन्द्रायां पूतिघ्राणास्यदेहके
यकृत्प्लीहविसर्पेषु विद्रधौ पिटिकोद्गमे १६

कर्णोष्ठघ्राणवक्त्राणां पाके दाहे शिरोरुजि
उपदंशे रक्तपित्ते रक्तस्त्रावः प्रशस्यते १७

रक्तस्त्रावविधिः
एषु रोगेषु शृङ्गैर्वा जलौकाऽलाबुकैरपि
अथवाऽपि शिरामोक्षैः कुर्याद्रक्तस्त्रुतिं नरः १८

रक्तस्त्रावायोग्या जनाः
न कुर्वीत शिरामोक्षं कृशस्यातिव्यवायिनः
क्लीबस्य भीरोर्गर्भिण्याः सूतिकापाण्डुरोगिणाम् १९

पञ्चकर्मविशुद्धस्य पीतस्नेहस्य चार्शसाम्
सर्वाङ्गशोथयुक्तानामुदरश्वासकासिनाम् २०

छर्द्यतीसारदुष्टानामतिस्विन्नतनोरपि
ऊनषोडशवर्षस्य गतसप्ततिकस्य च २१

आघातस्त्रुतरक्तस्य शिरामोक्षो न शस्यते
एषां चात्ययिकेरोगे जलौकाभिस्तु निर्हरेत् २२

विषदुष्टरक्तस्य स्त्रावप्रकारः
तथा च विषदुष्टानां शिरामोक्षोऽपि शस्यते २३

वातादिदोषानुसारेण रक्तस्त्रावप्रकारः
गोशृङ्गेण जलौकाभिरलाबुभिरपि त्रिधा

वातपित्तकफैर्दुष्टं शोणितं स्रावयेद् बुधः २४

द्विदोषाभ्यां तु सन्दुष्टं त्रिदोषैरपि दूषितम्
शोणितं स्रावयेद्युक्त्या शिरामोक्षैः पदैस्तथा २५

शृङ्गादीनां शोणितग्रहणे प्रमाणम्
गृह्णाति शोणितं शृङ्गं दशाङ्गुलमितं बलात्
जलौका हस्तमात्रं तु तुम्बी च द्वादशाङ्गुलम्
पदमङ्गुलमात्रस्य शिरा सर्वाङ्गशोधिनी २६

रुधिरस्रावप्रतिबन्धिकाऽवस्था
शीते निरन्ने मूर्च्छाऽतिनिद्राभीतिमदश्रमैः
युतानां न स्रवेद्रक्तं तथा विण्मूत्रसङ्गिनाम् २७

रक्ताप्रवृत्तावुपचारः
अप्रवर्त्तितरक्ते च कुष्ठत्रिकटुसैन्धवैः
मर्दयेद् व्रणवक्त्रं च तेन सम्यक्प्रवर्त्तते २८

रक्तमोक्षणसमयः
तस्मान्न शीते नात्युष्णे न स्विन्ने नातितापिते
पीत्वा यवागूं तृप्तस्य स्रावयेच्छोणितं बुधः २९

रक्तातिप्रवृत्तौ हेतुः
अतिस्विन्नस्योष्णकाले तथ्वातिशिराव्यधात्
अतिप्रवर्त्तते रक्तं तत्र कुर्यात्प्रतिक्रियाम् ३०

रक्तातिप्रवृत्तौ चिकित्सा
अतिप्रवृत्ते रक्ते च लोध्रसर्जरसाञ्जनैः
यवगोधूमचूर्णैर्वा धवधन्वनगैरिकैः ३१

सर्पनिर्मोकचूर्णैर्वा भस्मना क्षौमवस्त्रयोः

मुखं व्रणस्य बध्वा च शीतैश्चोपचरेद्व्रणम् ३२

तत्रैवोपचारान्तरम्
विध्येदूर्ध्वशिरां तां च दहेत्क्षारेण वाऽग्निना
व्रणं कषायः सन्धत्ते रक्तं स्कन्दयते हिमम्
व्रणास्यं पाचयेत्क्षारो दाहः सङ्कोचयेच्छिराम् ३३

अग्निदाहसाध्या रोगाः
तत्र मुष्कशोथे कराङ्गुष्ठदाहनिर्देशः
वामाण्डशोथे दक्षस्य करस्याङ्गुष्ठमूलजाम् ३४

दहेच्छिरां व्यत्यये तु वामाङ्गुष्ठशिरां दहेत्
शिरादाहप्रभावेण मुष्कशोथः प्रणश्यति ३५

विषूच्यां पार्ष्णिदाहव्यवस्था
विषूच्यां पार्ष्णिदाहेन जायतेऽग्ने प्रदीपनम्
सङ्कुचन्ति यतस्तेन रसश्लेष्मवहाः शिराः ३६

रक्तजबालयकृत्प्लीहवृद्धौ तत्स्थानदाहव्यवस्था
यदावृद्धिर्यकृत्प्लीह्नोः शिशोः सञ्जायतेऽसृजः
तदा तत्स्थानदाहेन सङ्कुचन्त्यसृजः शिराः ३७

अत्यन्तरक्तस्रावणनिषेधः
रक्ते दुष्टेऽवशिष्टेऽपि व्याधिर्नैव प्रकुप्यति
अतः स्राव्यं सावशेषं रक्ते नातिक्रमो हितः ३८

अतिरक्तस्रुतिजन्या हानयः
आन्ध्यमाक्षेपकं तृष्णां तिमिरं शिरसो रुजम्
पक्षाघातं श्वासकासौ हिक्कां दाहं च पांडुताम्
कुरुतेऽतिस्रुतं रक्तं मरणं वा करोति च ३९

रुधिरस्य महत्ता
देहस्योत्पत्तिरसृजा देहस्तेनैव धार्यते
विना तेन व्रजेज्जीवो रक्षेद्रक्तमतोबुधः ४०

स्रुते रक्तेऽपि दोषकोपे प्रतीकारः
शीतोपचारः कुपिते स्रुतरक्तस्य मारुते
कोष्णेन सर्पिषा शोथं सव्यथं परिषेचयेत् ४१

रक्तस्रुतिक्षीणस्य पथ्यव्यवस्था
क्षीणस्यैणशशोरभ्रहरिणच्छागमांसजः
रसः समुचितः पाने क्षीरं वा षष्टिका हिताः ४२

सम्यक्स्रुतरक्तलक्षणम्
पीडाशान्तिर्लघुत्वं च व्याधेरुद्रेकसंक्षयः
मनः स्वास्थ्यं भवेच्चिह्नं सम्यग्विस्राविते ऽसृजि ४३

रक्तस्रावोत्तरं वर्ज्याविषयाः
व्यायाममैथुनक्रोधशीतस्नानप्रवातकान् ४४

एकाशनं दिवास्वप्नं क्षाराम्लकटुभोजनम्
शोकं वादमजीर्णं च त्यजेदाबलदर्शनात् ४५

इति श्रीशार्ङ्गधरसंहितायामुत्तरखण्डे शोणितस्रावविधिर्नाम द्वादशोऽध्यायः

## अथ नेत्रप्रसादनकर्मनाम त्रयोदशोऽध्यायः

तत्रादौ तन्नामानि
सेकं आश्च्योतनं पिण्डी बिडालस्तर्पणं तथा
पुटपाकोऽञ्जनं चैभिः कल्पैर्नेत्रमुपाचरेत् १

सेकविधिः
सेकस्तु सूक्ष्मधाराभिः सर्वस्मिन्नयने हितः

मीलिताक्षस्य मर्त्त्यस्य प्रदेयश्चतुरङ्गुलात् २

दोषानुसारेण सेकप्रकारभेदाः
स चापि स्नेहनो वाते रक्ते पित्ते च रोपणः
लेखनश्च कफे कार्यस्तस्य मात्राऽधुनोच्यते ३

सेकधारणमात्रा
षड्वाक्शतैः स्नेहनेषु चतुर्भिश्चैव रोपणे
वाक्शतैश्च त्रिभिः कार्यः सेकोलेखनकर्मणि ४

सेकसमयः
कार्यस्तु दिवसे सेको रात्रौ चात्ययिके गदे ५

दोषानुसारेण सेकव्यवस्था
एरण्डत्वक्पत्रमूलैः शृतमाजं पयोहितम्
सुखोष्णं सेचनं नेत्रे वाताभिष्यन्दनाशनम् ६

वाताभिष्यन्द मारुतपर्ययशुष्काक्षिपाकेषु सेकौ
परिषेकोहितोनेत्रे पयः कोष्णं ससैन्धवम्
रजनीदारुसिद्धं वा सैन्धवेनसमन्वितम् ७

वाताभिष्यन्दशमनं हितं मारुतपर्यये
शुष्काक्षिपाके च हितमिदं सेचनकं सदा ८

पित्तरक्ताभिघातजनेत्रपीडाहृत्सेकः
साबरं मधुकं तुल्यं घृतभृष्टं सुचूर्णितम्
छागक्षीरे घृतं सेकात्पित्तरक्ताभिघातजित् ९

रक्ताभिष्यन्दे सेकः
त्रिफलालोध्रयष्टीभिः शर्कराभद्रमुस्तकैः
पिष्टः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः १०

तत्रैवान्यः सेकः
लाक्षामधुकमञ्जिष्ठालोध्रकालानुसारिवाः
पुण्डरीकयुतः सेको रक्ताभिष्यन्दनाशनः ११

नेत्रशूलघ्नः सेकः
श्वेतलोध्रं घृते भृष्टं चूर्णितं पटविस्तृतम्
उष्णाम्बुना विमृदितं सेकाच्छूलघ्नमम्बके १२

अथाश्च्योतनविधिः
तत्राश्च्योतनकर्मसमयः
अथाश्च्योतनकं कार्यं निशायां न कथंचन १३

आश्च्योतनविधिः
उन्मीलितेऽक्षिण दृङ्मध्ये बिन्दुभिर्द्व्यङ्गुलाद्धितम् १४

गुणानुसारेण बिन्दुप्रक्षेपसंख्यानिर्देशः
बिन्दवोऽष्टौ लेखनेषु स्नेहने दश बिन्दवः
रोपणे द्वादश प्रोक्तास्ते शीतेकोष्णरूपिणः
उष्णे च शीतरूपाः स्युः सर्वत्रैवैष निश्चयः १५

वातादिभेदेनाश्च्योतनपदार्थनिर्देशः
वाते तिक्तं तथा स्निग्धं पित्ते मधुरशीतलम्
तिक्तोष्णरूक्षं च कफे क्रमादाश्च्योतनं हितम् १६

आश्च्योतनमात्रानिर्णयः
आश्च्योतनानां सर्वेषां मात्रा स्याद्वाक्शतं हिता
निमेषोन्मेषणं पुंसामङ्गुल्याच्छोटिकाऽथवा
गुर्वक्षरोच्चारणं वा वाङ्मात्रेयं स्मृता बुधैः १७

वाताभिष्यन्दहरमाश्च्योतनम्
बिल्वादिपञ्चमूलेन बृहत्येरण्डशिग्रुभिः

क्वाथ आश्च्योतने कोष्णो वाताभिष्यन्दनाशनः १८

वातरक्तपित्तोत्थाभिष्यन्दोपायः
अम्बुपिष्टैर्निम्बपत्रैस्त्वचं लोध्रस्य लेपयेत्
प्रताप्य वह्निना पिष्ट्वा तद्रसो नेत्रपूरणात्
वातोत्थं रक्तपित्तोत्थमभिष्यन्दं विनाशयेत् १९

सर्वाभिष्यन्दघ्नमाश्च्योतनम्
त्रिफलाश्च्योतनं नेत्रे सर्वाभिष्यन्दनाशनम् २०

रक्तपित्तादिजनेत्रपीडास्वाश्च्योतनम्
स्त्रीस्तन्याश्च्योतनं नेत्रे रक्तपित्तानिलार्त्तिजित्
क्षीरसर्पिर्घृतं वाऽपि वातरक्तरुजं जयेत् २१

पिण्डिकाविधिः
पिण्डी कवलिका प्रोक्ता बद्ध्यते पट्टवस्त्रकैः
नेत्राभिष्यन्दयोग्या सा व्रणेष्वपि निबद्ध्यते २२

अभिष्यन्दाधिमन्थयोः शिरोविरेचनम्
अभिष्यन्देऽधिमन्थे च सञ्जाते श्लेष्मसम्भवे
स्निग्धस्विन्नोत्तमाङ्गस्य शिरस्तीक्ष्णैर्विरेचयेत् २३

अधिमन्थे शिराव्यधाग्निदाहौ
अधिमन्थेषु सर्वेषु ललाटे वेधयेच्छिराम्
अशान्ते सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् २४

सर्वाभिष्यन्दे पिण्डिकाप्रयोगः
अभिष्यन्देषु सर्वेषु बध्नीयात्पिण्डिकां बुधः २५

वाताभिष्यन्दे पिण्डिकाप्रयोगः
वातामिष्यन्दशान्त्यर्थं स्निग्धोष्णा पिण्डिका भवेत्

एरगडपत्रमूलत्वङ्निर्मिता वातनाशिनी २६

पित्ताभिष्यन्दे पिगडीद्वयम्
पित्ताभिष्यन्दनाशाय धात्रीपिंडी सुखावहा
महा निम्बफलोद्भूता पिंडी वा पित्तनाशिनी २७

कफाभिष्यन्दे पिगडी
शिग्रुपत्रकृता पिगडी श्लेष्माभिष्यन्दनाशिनी २८

कफपित्ताभिष्यन्दे पिगडीद्वयम्
निम्बपत्रकृता पिगडी श्लेष्मपित्तहरा भवेत्
त्रिफलापिगिडका प्रोक्ता नाशने श्लेष्मपित्तयोः २९

रक्ताभिष्यन्दे पिगडी
पिष्ट्वा काञ्जिकतोयेन घृतभृष्टा च पिगिडका
लोध्रस्य हरति क्षिप्रमभिष्यन्दमसृग्भवम् ३०

शोथकगड्वादौ पिगडी
शुगठीनिम्बदलैः पिगडी सुखोष्णा स्वल्पसैन्धवा
धार्या चक्षुषि संयोगाच्छोथकगडूव्यथाऽपहा ३१

बिडालकविधिः
बिडालको बहिर्लेपो नेत्रे पक्ष्मविवर्जितः
तस्य मात्रा परिज्ञेया मुखलेपविधानवत् ३२

सर्व नेत्रामयेषु लेपः
यष्टीगैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः
जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः ३३

तत्रैवान्ये षड् लेपाः
रसाञ्जनेन वा लेपः पथ्याविश्वदलैरपि

कुमारिकाऽग्निपत्रैर्वा दाडिमीपल्लवैरपि
वचाहरिद्रानिम्बैर्वा तथा नागरगैरिकैः ३४

सद्योनेत्रपीडाहरो लेपः
दग्ध्वा ससैन्धवं लोध्रं मधूच्छिष्टयुते घृते
पिष्टमञ्जनलेपाभ्यां सद्यो नेत्ररुजाऽपहम् ३५

नेत्रपीडाहरो लेपः
लोहस्य पात्रे संघृष्टो रसो निम्बफलोद्भवः
किञ्चिद्घनो बहिर्लेपान्नेत्रबाधां व्यपोहति ३६

अर्मनाशको लेपः
संचूर्ण्य मरिचं केशराजस्वरसमर्दनात्
लेपनादर्मणां नाशं करोत्येष प्रयोगराट् ३७

अञ्जननामिकोपरि प्रतिसारणम्
स्विन्नां भित्वा विनिष्पीड्य भिन्नामञ्जननामिकाम्
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ३८

अथ तर्पणविधिः
तत्रादौ तर्पणयोग्यनेत्रलक्षणम्
अथ तर्पणकं वच्मि नेत्रतृप्तिकरं परम्
यद्रूक्षं परिशुष्कं च नेत्रं कुटिलमाविलम् ३९

शीर्णपक्ष्मशिरोत्पातकृच्छ्रोन्मीलन संयुतम्
तिमिरार्जुनशुक्राद्यैरभिष्यन्दाधिमन्थकैः ४०

शुष्काक्षिपाकशोथाभ्यां युक्तं वातविपर्ययैः
तन्नेत्रं तर्पणे योज्यं नेत्ररोगविशारदैः
तर्पणे वर्ज्यविषयाः
दुर्दिनात्युष्णशीतेषु चिन्तायासभ्रमेषु च

अशान्तोपद्रवे चाद्तिण तर्पणं न प्रशस्यते ४१

तर्पणप्रक्रिया
वातातपरजोहीने देशे चोत्तानशायिनः
आधारौ माषचूर्णेन क्लिन्नेन परिमराडलौ ४२

समौ दृढावसम्बाधौ कर्त्तव्यौ नेत्रकोशयोः
पूरयेद् घृतमराडेन विलीनेन सुखोदकैः
अथवा शतधौतेन सर्पिषा न्तीरजेन वा ४३

पूरणमात्रा
निमग्नान्यद्तिपन्नमाणि यावत्स्युस्तावदेव हि
पूरयेन्मीलिते नेत्रे तत उन्मीलयेच्छनैः ४४

तर्पणे स्नेहधारणमात्राः
धारयेद्वर्त्मरोगेषु वाङ्मात्राणां शतं बुधः ४५

स्वच्छे कफे सन्धिरोगे मात्रापञ्चशतं हितम्
शुक्ले च षट्शतं कृष्णरोगे सप्तशतं मतम् ४६

दृष्टिरोगेष्वष्टशतमधिमन्थे सहस्रकम्
सहस्रं वातरोगेषु धार्यमेवं हि तर्पणम् ४७

तर्पणोत्तरं कर्त्तव्यं कर्म
स्विन्नेन यवपिष्टेन स्नेहवीर्येरितं ततः
यथास्वं धूमपानेन कफमस्य विशोधयेत् ४८

तर्पणकर्मावधिः
एकाहं वा त्र्यहं वाऽपि पञ्चाहं चेष्यते परम् ४९

तर्पणे सम्यक् तृप्तिलन्नणम्

तर्पणे तृप्तिलिङ्गानि नेत्रेष्वेतानि भावयेत्
सुखस्वप्नावबोधत्वं वैशद्यं वर्णपाटवम्
निवृत्तिर्व्याधिशान्तिश्च क्रियालाघवमेव च ५०

अतितर्पितलक्षणम्
अथ साश्रु गुरु स्निग्धं नेत्रं स्याददतितर्पितम् ५१

हीनतर्पितलक्षणम्
रूक्षमस्राविलं रुग्णं नेत्रं स्याद्धीनतर्पितम् ५२

हीनातितर्पितयोश्चिकित्सा
रूक्षस्निग्धोपचाराभ्यामेतयोः स्यात्प्रतिक्रिया ५३

पुटपाकविधानम्
अत ऊर्ध्वं प्रवक्ष्यामि पुटपाकस्य साधनम्
द्वौ बिल्वमात्रौ मांसस्य पिण्डौ स्निग्धौ सुपेषितौ ५४

द्रव्याणां बिल्वमात्रं तु द्रवाणां कुडवो मतः
तदेकस्थं समालोड्य पत्रैः सुपरिवेष्टितम्
पुटपाकेन तत्पक्त्वा गृह्णीयात्तद्रसं बुधः
दृष्टिमध्ये निषेच्यः स्यान्नित्यमुत्तानशायिनः ५५

पुटपाकभेदाः
स्नेहनो लेखनश्चैव रोपणश्चेति स त्रिधा ५६

त्रिविधपुटपाकविषयाः
हितः स्निग्धोऽतिरूक्षस्य स्निग्धस्यापि हि लेखनः
दृष्टेर्बलार्थमितरः पित्तासृग्व्रणवातनुत् ५७

स्नेहनपुटपाकः
सर्पिर्मांसवसामज्जामेदःस्वाद्वौषधैः कृतः

स्नेहनः पुटपाकस्तु धार्यो द्वे वाक्शते दृशोः ५८

लेखनपुटपाकः
जाङ्गलानां यकृन्मांसैर्लेखनद्रव्यसंयुतैः
कृष्णलोहरजस्ताम्रशङ्खविद्रुमसिन्धुजैः
समुद्रफेनकासीसस्त्रोतोजदधिमस्तुभिः
लेखनो वाक्शतं धार्यस्तस्यैतावद्विधारणम् ५९

रोपणपुटपाकः
स्तन्यजाङ्गलमध्वाज्यतिक्तकद्रव्यपाचितः
लेखनात्त्रिगुणो धार्यः पुटपाकस्तु रोपणः ६०

व्यापत्तिदर्शनकर्त्तव्योपदेशः
वितरेत्तर्पणोक्तां तु क्रियां व्यापत्तिदर्शने ६१

अथाञ्जनविधानम्
तत्रादावञ्जनयोग्य समयाः
अथ सम्पक्वदोषस्य प्राप्तमञ्जनमाचरेत्
हेमन्ते शिशिरे चैव मध्याह्नेऽञ्जनमिष्यते ६२

पूर्वाह्णे चापराह्णेच ग्रीष्मे शरदि चेष्यते
वर्षासु नाभ्रे नात्युष्णे वसन्ते च सदैव हि ६३

अञ्जनभेदाः
लेखनं रोपणं चैव तथा स्यात्स्नेहनाञ्जनम् ६४

लेखनरोपणप्रसादनाञ्जनानि
लेखनं क्षारतीक्ष्णाम्लरसैरञ्जनमिष्यते
कषायतिक्तरसयुक्सस्नेहं रोपणं मतम्
मधुरं स्नेहसम्पन्नमञ्जनं च प्रसादनम् ६५

त्रिविधाञ्जनस्य स्वरूपाणि
गुटिकारसचूर्णानि त्रिविधान्यञ्जनानि च
कुर्याच्छलाकयाऽङ्गुल्या हीनानि च यथोत्तरम् ६६

अञ्जनानर्हा जनाः
श्रान्ते प्ररुदिते भीते पीतमद्ये नवज्वरे
अजीर्णे वेगघाते च नाञ्जनं सम्प्रशस्यते ६७

वर्त्तिप्रमाणानि
हरेणुमात्रां कुर्वीत वर्त्तिं तीक्ष्णाञ्जने भिषक्
प्रमाणं मध्यमेऽध्यर्द्धं द्विगुणं तु मृदौ भवेत् ६८

रसक्रियाप्रमाणानि
रसक्रिया तूत्तमा स्यात्त्रिविडङ्गमिता हिता
मध्यमा द्विविडङ्गा स्याद्धीना त्वेकविडङ्गिका ६९

चूर्णाञ्जनमात्रा
वैरेचनिकचूर्णं तु द्विशलाकं विधीयते
मृदौ तु त्रिशलाकं स्याच्चतस्रः स्नैहिकेऽञ्जने ७०

अञ्जनशलाकास्वरूपम्
मुखयोः कुण्ठता श्लक्ष्णा शलाकाऽष्टाङ्गुलोन्मिता
अश्मजा धातुजा वा स्यात्कलायपरिमण्डला ७१

कर्मानुसारेण शलाकास्वरूपम्
ताम्रलोहाश्मसञ्जाता शलाका लेखने मता
सुवर्णरजतोद्भूता शलाका स्नेहने मता
अङ्गुली च मृदुत्वेन कथिता रोपणे बुधैः ७२

अञ्जनसमयनिर्देशः
सायं प्रातर्वाञ्जनं स्यात्तत्सदा नैव कारयेत् ७३

नातिशीतोष्णवाताभ्रवेलायां सम्प्रशस्यते
कृष्णभागादधः कुर्यादपाङ्गं यावदञ्जनम् ७४

चन्द्रोदया वर्त्तिः
शङ्खनाभिर्बिभीतस्य मज्जा पथ्या मनः शिला
पिप्पली मरिचं कुष्ठं वचा चेति समांशकम् ७५

छागीक्षीरेण संपिष्य वर्त्तिं कृत्वा यवोन्मिताम्
हरेणुमात्रां संघृष्य जलैः कुर्यादथाञ्जनम् ७६

तिमिरं मांसवृद्धिं च काचं पटलमर्बुदम्
रात्र्यान्ध्यं वार्षिकं पुष्पं वर्त्तिश्चन्द्रोदया जयेत् ७७

करञ्जवर्त्तिः
पलाशपुष्पस्वरसैर्बहुशः परिभाविता
करञ्जीबीजवर्त्तिस्तु दृष्टेः पुष्पं विनाशयेत् ७८

समुद्रफेनादिवर्त्तिः
समुद्रफेनसिन्धूत्थशङ्खदक्षाराडवल्कलैः
शिग्रुबीजयुतैर्वर्त्तिः शुक्रादींश्छस्त्रवल्लिखेत् ७९

दन्तवर्त्तिः
दन्तैर्हस्तिवराहोष्ट्रगोहयाजखरोद्भवैः
शङ्खमुक्ताऽम्भोधिफेनयुतैः सर्वैर्विचूर्णितैः
दन्तवर्त्तिः कृता श्लक्ष्णा शुक्राणां नाशिनी परा ८०

तन्द्रानाशिनी वर्त्तिः
नीलोत्पलं शिग्रुबीजं नागकेशरकं तथा
एतत्कल्कैः कृता वर्त्तिरतिनिद्रां निवारयेत् ८१

पुष्पवर्त्तिः

तिलपुष्पाण्यशीतिः स्युः षष्टिसंख्याः कणाकणाः ८२

जातीकुसुमपञ्चाशन्मरिचानि च षोडश
सूक्ष्मं पिष्ट्वा जले वर्त्तिः कृता कुसुमिकाऽभिधा ८३

तिमिरार्जुनशुक्राणां नाशिनी मांसवृद्धिहृत्
एतस्याश्चाञ्जने मात्रा प्रोक्ता सार्धहरेणुका ८४

रसाञ्जनवर्त्तिः
रसाञ्जनं हरिद्रे द्वे मालतीनिम्बपल्लवाः
गोशकृद्रससंयुक्ता वर्त्तिर्नक्तान्ध्यनाशिनी ८५

धात्र्यादिवर्त्तिः
धात्र्यक्षपथ्याबीजानि एकद्वित्रिगुणानि च
पिष्ट्वा वर्त्तिं जलैः कुर्यादञ्जनं द्विहरेणुकम्
नेत्रस्त्रावं हरत्याशु वातरक्तरुजं तथा ८६

रसक्रिया
तुत्थमाक्षिकसिन्धूत्थं सिताशङ्खमनः शिलाः
गैरिकोदधिफेनं च मरिचं चेति चूर्णयेत् ८७

संयोज्य मधुना कुर्यादञ्जनार्थं रसक्रियाम्
वर्त्मरोगार्मतिमिरकाचशुक्रहरां पराम् ८८

पुष्पहरी रसक्रिया
वटक्षीरेण संयुक्तो मुख्यःकर्पूरजःकणः
क्षिप्रमञ्जनतो हन्ति कुसुमं तु द्विमासिकम् ८९

अतिनिद्राहरमञ्जनम्
क्षौद्राश्वलालासंघृष्टैर्मरिचैर्नेत्रमञ्जयेत्
अतिनिद्रा शमं याति तमः सूर्योदयादिव ९०

प्रबोधाञ्जनम्
जातीपुष्पं प्रवालं च मरिचं कटुकी वचा
सैन्धवं बस्तमूत्रेण पिष्टं तन्द्राघ्नमञ्जनम् ९१

अन्यत् प्रबोधाञ्जनम्
शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः
अञ्जनं स्यात्प्रबोधाय सरसोनशिलावचैः ९२

दार्व्यादिरसक्रिया
दार्वी पटोलं मधुकं सनिम्बं पद्मकोत्पलम् ९३

प्रपौराडरीकं चैतानि पचेत्तोये चतुर्गुणे
विपाच्य पादशेषं तु शृतं नीत्वा पुनः पचेत् ९४

शीते तस्मिन्मधुसितां दद्यात्पादांशिकां नरः
रसक्रियैषा दाहाश्रुरक्तरागरुजोहरेत् ९५

रसाञ्जनादिरसक्रिया
रसाञ्जनं सर्जरसो जातीपुष्पं मनः शिला
समुद्रफेनो लवणं गैरिकं मरिचानि च ९६

एतत्समांशंमधुना पिष्ट्वा प्रक्लिन्नवर्त्मनि
अञ्जनं क्लेदकराडूघ्नंपद्मणां च प्ररोहणम् ९७

गुडूच्यादिरसाञ्जनम्
गुडूचीस्वरसः कर्षः च्चौद्रं स्यान्माषकोन्मितम्
सैन्धवं च्चौद्रतुल्यं स्यात्सर्वमेकत्र मर्दयेत् ९८

अञ्जयेन्नयनं तेन पिल्लार्मतिमिरं जयेत्
काचं कराडूं लिङ्गनाशंशुक्लकृष्णगतान्गदान् ९९

पुनर्नवादिरसाञ्जनम्
दुग्धेन कराडूं क्षौद्रेण नेत्रस्रावं च सर्पिषा
पुष्पं तैलेन तिमिरं काञ्जिकेन निशान्ध्यताम्
पुनर्नवा जयेदाशु भास्करस्तिमिरं यथा १००

बब्बूलरसाञ्जनम्
बब्बूलदलनिःक्वाथो लेहीभूतस्तदञ्जनात्
नेत्रस्रावं जयत्येष मधुयुक्तो न संशयः १०१

हिञ्जलरसाञ्जनम्
हिञ्जलस्य फलं घृष्ट्वा पानीये नित्यमञ्जनम्
चक्षुःस्रावोपशान्त्यर्थं कार्यमेतन्महौषधम् १०२

नेत्रप्रसादनं कतकादिरसाञ्जनम्
कतकस्यफलं घृष्ट्वा मधुना नेत्रमञ्जयेत्
ईषत्कर्पूरसहितं स्मृतं नेत्रप्रसादनम् १०३

शिरोत्पाते रसक्रिया
सर्पिः क्षौद्रं चाञ्जनं स्याच्छिरोत्पातस्य शान्तये १०४

कृष्णसर्पवसारसक्रिया
कृष्णसर्पवसा शङ्खः कतकात्फलमञ्जनम्
रसक्रियेयमचिरादन्धानां दर्शनप्रदा १०५

लेखनाञ्जनम्
दक्षाराडत्वक्शिलाकाचशंखचन्दनसैन्धवैः
द्रव्यैरञ्जनयोगोऽय पुष्पार्मादिविलेखनः १०६

रात्र्यान्ध्यनाशकमञ्जनम्
कणा छागयकृन्मध्ये पक्त्वा नेत्रयुगेऽञ्जिता
अचिराद्धन्ति नक्तान्ध्यं तद्वत्सक्षौद्रमूषणम् १०७

नक्तान्ध्यहरचूर्णाञ्जनम्
शाणार्धं मरिचं द्वौ च पिप्पल्यर्णवफेनयोः
शाणार्धं सैन्धवं शाणा नव सौवीरकाञ्जनात् १०८

पिष्टं सुसूक्ष्मं चित्रायां चूर्णाञ्जनमिदं शुभम्
कराडूकाचकफार्त्तानां मलानां च विशोधनम् १०९

रोपणाञ्जनमृदुचूर्णाञ्जनम्
शिलायां रसकं पिष्ट्वा सम्यगाप्लाव्य वारिणा
गृह्णीयात्तज्जलं सर्वं त्यजेच्चूर्णमधोगतम् ११०

शुष्कं च तज्जलं सर्वं पर्पटीसंनिभं भवेत्
विचूर्ण्य भावयेत्सम्यक्त्रिवेलं त्रिफलारसैः १११

कर्पूरस्य रजस्तत्र दशमांशेन निक्षिपेत्
अञ्जयेन्नयने तेन सर्वदोषहरं हि तत्
सर्वरोगहरं चूर्णं चक्षुषोः सुखकारि च ११२

प्रसादनाञ्जने सौवीराञ्जनम्
अग्नितप्तं हि सौवीरं निषिञ्चेत्त्रिफलारसैः
सप्तवेलं तथा स्तन्यैः स्त्रीणां सिक्तं विचूर्णितम् ११३

अञ्जयेत्तेन नयने प्रत्यहं चक्षुषोर्हितम्
सर्वानक्षिविकारांस्तु हन्यादेतन्न संशयः ११४

दृष्टिप्रसादनी नाम शलाका
त्रिफलाभृङ्गशुराठीनां रसैस्तद्वच्च सर्पिषा ११५

गोमूत्रमध्वजाक्षीरैः सिक्तो नागः प्रतापितः
तच्छलाका हरत्येव सर्वान्नेत्रभवान्गदान् ११६

प्रत्यञ्जनम्
गतदोषमपेताश्रु संपश्यन्सम्यगम्भसि
प्रक्षाल्याक्षि यथादोषं कार्यं प्रत्यञ्जनं ततः ११७

अञ्जने नेत्रधावननिषेधः
न वाऽनिर्गतदोषेऽक्ष्णि धावनं संप्रयोजयेत्
प्रत्यञ्जनं तीक्ष्णतप्ते नेत्रे चूर्णं प्रसादनम् ११८

नयनामृताञ्जनम्
शुद्धे नागे द्रुते तुल्यं शुद्धं सूतं विनिक्षिपेत्
कृष्णाञ्जनं तयोस्तुल्यं सर्वमेकत्र चूर्णयेत् ११९

दशमांशेन कर्पूरं तस्मिंश्चूर्णे प्रदापयेत्
एतत्प्रत्यञ्जनं नेत्रगदजिन्नयनामृतम् १२०

सर्पविषहरमञ्जनम्
जयपालभवां मज्जां भावयेन्निम्बुकद्रवैः
एकविंशतिवेलं तत्ततो वर्त्तिं प्रकल्पयेत् १२१

मनुष्यलालया घृष्ट्वा ततो नेत्रे तयाऽञ्जयेत्
सर्पदष्टविषं जित्वा संजीवयति मानवम् १२२

नेत्रज्योतिर्वर्द्धकोपदेशः
भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्दीयते यदि
जाता रोगा विनश्यन्ति तिमिराणि तथैव च १२३

दृष्टिवर्द्धकोपायः
शीताम्बुपूरितमुखः प्रतिवासरं यः कालत्रयेण नयनद्वितयं जलेन
आसिञ्चति ध्रुवमसौ न कदाचिदक्षिरोगव्यथाविधुरतां भजते मनुष्यः १२४

ग्रन्थकर्तृकृतं नम्रनिवेदनम्

ग्रायुर्वेदसमुद्रस्य गूढार्थमणिसंचयम्
ज्ञात्वा कैश्चिद् बुधैस्तैस्तु कृता विविधसंहिताः १२५

किञ्चिदर्थं ततो नीत्वा कृतेयं संहिता मया
कृपाकटाक्षनिक्षेपमस्यां कुर्वन्तु साधवः १२६

ग्रन्थाध्ययनफलम्
विविधगदार्तिदरिद्रनाशनं या हरिरमणीव करोति योगरत्नैः
विलसतु शार्ङ्गधरस्य संहिता सा जन हृदयेषु सरोजनिर्मलेषु १२७

उपसंहारः
ग्रल्पायुषामल्पधियामिदानीं कृतं समस्तश्रुतिपाठशक्त्या
तदत्र युक्तं प्रतिबीजमात्रमभ्यस्यतामात्महितं प्रयत्नात् १२८

इति श्रीशार्ङ्गधरसंहितायामुत्तरखराडे नेत्रप्रसादनविधिर्नाम
त्रयोदशोऽध्यायः समाप्तः १३

समाप्तेयं शार्ङ्गधर संहिता

## परिशिष्टम्

तत्र प्रथमं परिशिष्टम्
अथ यकृद्रोगाधिकारः १

यकृत्स्थानम्
अधो दक्षिणतो ज्ञेया हृदयाद् यकृतः स्थितिः
तत्रत्यरोगाणां दुःखप्राचुर्यम्

व्याधयो बहवस्तत्र भवेयुर्भूरि दुःखदाः
तन्म्लाने रोगी लक्षणम्

म्लाने तस्मिन् पुरीषस्याप्रवृत्तिः स्वल्पपित्तता
पाण्डुत्वं कर्दमाभत्वञ्चोदन्याविलमूत्रता

उद्गारसदनाध्मानच्छर्दनोत्क्लेशनान्यपि
प्रातस्तिक्तास्यता नाड्याः काठिन्यं वह्निमन्दता

देहस्य च मृदाभत्वं रसना मलसंयुता
लिङ्गान्येतानि जायन्ते तत्राप्याकृष्टिवद् व्यथा

यकृद्वृद्धौ रोगिलक्षणम्
गते यकृति संवृद्धिं वेदना तत्र जायते
उरोऽस्थ्नि दक्षिणे स्कन्धे सक्थ्नि चाप्यपसव्यगे

दक्षिणस्य भवेज्जाड्यं बाहोस्तिक्तरसास्यता
विवर्णत्वं पुरीषस्य कासो लोहितमूत्रता

अरतिर्बलहानिश्च ज्वरो बद्धाल्पविट्कता
पीताक्षत्वं च पार्श्वेन शेते सव्येन चातुरः

तोदभेदौ तथा दाहः कामलाऽप्यस्य जायते

निद्रानाशस्तृषाशोथस्तथा सत्त्वस्य संक्षयः

यकृद्विद्रधेर्दुःसाध्यता
विद्रधिर्यकृति स्याच्च प्रायेण प्राणनाशनः
तेन भाग्यबलात् कोऽपि जन्तुष्वेकः प्रमुच्यते

यकृद्रोगनिदानम्
मद्यातिपानादत्युष्णगुर्वन्नस्य निषेवणात्
वेगरोधाद्दिवास्वप्नान्निशि चापि प्रजागरात्

अतिव्यवायभाराध्वसेवनादभिघाततः
तथाऽन्यै कर्मभिर्घोरैर्यकृद्रोगा भवन्ति हि

चिकित्सा
प्लीहोद्दिष्टाः क्रियाः सर्वा यकृद्रोगे समाचरेत्
प्रातर्मूत्रेण संस्वेदः प्लीहवत् तत्र चेष्यते

क्षारं विडङ्गकृष्णाभ्यां पूतिकस्याम्बुनिःसृतम्
पिबेत् प्रातर्यथावह्नि यकृत्प्लीहप्रशान्तये

जलौकाभिर्हरेद्रक्तं क्षारं वा तत्र पातयेत्
शिग्रुत्वग्राजिकाचूर्णैर्लेपस्तत्र च युज्यते

तोयेन प्रस्थमानेन महाद्रावककर्षकम्
मेलयित्वाऽथ तत्स्थानमूर्वङ्घ्र्याद्यञ्च मर्दयेत्

पीतमूल्यभयाधात्रीद्राक्षारग्वधसिन्धुजैः
रेचयेद्रसचूर्णेन तैलेनैरण्डजेन वा

यकृद्विद्रधिचिकित्सा
विद्रधिं यकृति ज्ञात्वा हिक्काश्वासव्यथादिभिः

शस्त्रं त्रिकूर्चकं तत्र प्रयुञ्ज्याच्छस्त्रकोविदः

पाययित्वा सुरां पूर्वं बलसत्त्वोपयोगिनीम्
अग्रोपहरणीयोक्तं समाहृत्य जलादिकम्

सत्येनाप्यनृतेनापि वचसाश्वास्य चातुरम्
ईश्वरं मनसा ध्यात्वा सर्वापद्विनिवारणम्

क्षिप्रहस्तो बली धीरः स्थिरचित्तो विचक्षणः
बहुशो दृष्टकर्मा च कृतकर्माऽभयो भिषक्

शस्त्रं शस्त्रगुणोपेतं परिगृह्य त्रिकूर्चकम्
सवेदनं शोथयुतं भित्त्वा चर्म सलोहितम्

अन्तः प्रवेशयेदाशु विद्रधिर्भिद्यते यथा
बहिर्नयेत्ततः शस्त्रं तस्य नाडिकया विना

अवधानेन तत्कार्य्यं नानिलोऽन्तर्यथा विशेत्
ततो जलाभिषेकाद्यैः शस्त्रपातव्यथाकुलम्

समाश्वास्यापसव्येन पार्श्वेन शाययेत्तु तत्
सक्षीरमतसीकल्कं साज्यं तत्र च लेपयेत्

अहिफेनासवं सम्यङ्मात्रया परियोजयेत्
क्षीरं मांसरसञ्चैव पाययेद्बलसाधनम्

ततो मासद्वयं यावदातुरः प्राप्तजीवितः
सुखं तिष्ठेत् त्यजेच्छ्रान्तिं भुञ्जीत लघु पोषणम्

विद्रधिं महतीं प्राज्ञः शस्त्रमुत्पलपत्रकम्
युञ्ज्यान्नोपक्रमेज्जन्तुं सञ्जातानेकविद्रधिम्

## अथ हृद्रोगाधिकारः २

आवरणिकादि हृद्रोगाणां लक्षणानि
आवरणिकः
आमवाताद् वृक्कदोषात् शीतार्द्रत्वनिषेवणात्
हृत्कोष्ठावरणी क्षिप्रं पीड्यते अकृतात्मनः

तत्र दाहोष्णताशोफा गौरवं महती व्यथा
कोष्ठसंवेपनं कासो दौर्बल्यं श्वासकृच्छ्रता

नासामार्गेण रक्तस्य स्रुतिर्वह्नेश्च मन्दता
शाखासु शोफा धमनी भवेद्विषमगामिनी

नाम्नावरणिको ह्येष व्याधिर्विद्वद्भिरुच्यते
जातमात्रश्चिकित्स्योऽय नैवोपेक्ष्यः कदाचन

कौष्ठिकः
आमवातादभीघातात्तथावरणिकाद् गदात्
हृत्कोष्ठे जायते शोथो गद एष हि कौष्ठिकः

ज्वरो दाहोऽरुचिः कम्पो वैवर्ण्यं वह्निसंक्षयः
श्वासः कासा राजयक्ष्मा कोष्ठे पूयस्य सञ्चयः

मूर्च्छाक्षेपः प्रलापश्च नाडी विषमवाहिनी
गदाद् घोरतरादस्माद् भाग्यात् कोऽपि प्रमुच्यते

पृथुकः
शोणितस्य गतौ कोष्ठे व्याहतायामनात्मनः
तत्पेशी पृथुतां याति मिथ्याहारविहारतः

हृद्वेपथुर्व्यथा तत्र दौर्बल्यं श्वासकृच्छ्रता
अरतिर्भ्रममोहौ च चिह्नानि पृथुके गदे

आयामिका
हृत्कोष्ठे प्रसृतिर्नाम्ना व्याधिरायामिका मता
श्वासः शोथोः भ्रमो मूर्च्छा हृत्कम्पो वह्निमन्दता

जलोदरमनिद्रत्वं बलमांसपरिक्षयः
एभिरन्यैश्च विज्ञेयश्चिह्नैरायामिका गदः

परिक्षयः
क्षयात् सञ्जायते घोरो व्याधिर्नाम्ना परिक्षयः
कोष्ठपेश्याः क्षयः श्वासो दौर्बल्यं सदनं भ्रमः

हृद्वेपथुर्वह्निमान्द्यं क्रमाच्छोफश्च जायते
एतैरन्यैश्च विज्ञेयश्चिह्नैर्व्याधिः परिक्षयः

मेदः सूत्रम्
हृत्कोष्ठपेशी सूत्रेषु मेदःकणचयो गदः
मेदः सूत्राख्यया प्रोक्तो मुनिभिस्तत्त्ववेदिभिः

मन्दं मन्दं व्रजेन्नाडी भवेद्धृदयवेपथुः
अवसादो भ्रमो मूर्च्छा स्नायूनां बलसंक्षयः

हृद्वृत्तेर्वाऽपि सम्भेदान्मृत्युश्च सहसा भवेत्
जातमात्रश्चिकित्स्योऽय व्याधिः परमदारुणः

विक्षेपिका
हृत्कोष्ठाक्षेपको व्याधिर्नाम्ना विक्षेपिका मता
जातेऽस्मिन् महति व्याधौ कोष्ठदेशेऽप्युरोऽस्थ्यधः

सव्यांसास्थ्नि सव्यबाहौ ग्रीवायां पृष्ठदेशतः
वेदना जायते तीव्रा मर्मप्राणप्रपीडिनी

तोदभेदौ समाकर्षो दाहस्तत्र च जायते
मुहुर्मुहुः श्वासरोधः शीता त्वक् स्वेदनिर्गमः

आध्मानानाहमोहाश्च वैवर्ण्यं कृशताऽरुचिः
क्रमादिन्द्रियविध्वंसो मरणं चाप्यनात्मनः

हृद्रोगचिकित्सा
घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते

हरीतकीवचारास्नापिप्पलीनागरोद्भवम्
शटीपुष्करमूलोत्थं चूर्णं हृद्रोगनाशनम्

पुटदग्धं हरिणशृङ्गं पिष्टं गव्येन सर्पिषा पिबतः
हृत्पृष्ठशूलमचिरादुपैति शान्तिं सुकष्टमपि

तिलाज्यगुडविपक्वं चूर्णं गोधूमपार्थोत्थम्
पिबति पयोभुक् स भवति जितसकलहृदामयः पुरुषः

पिप्पल्यादिचूर्णम्
पिप्पल्येला वचा हिङ्गु यवक्षारोऽथ सैन्धवम्
सौवर्चलमथो शुण्ठी अजमोदेति चूर्णितम्

दध्ना मद्येनासवेन काञ्जिकेन घृतेन वा
पाययेच्छुद्धदेहं हि वातिके हृदयामये

शीताः प्रदेहाः परिषेचनानि तथा विरेको हृदि पित्तदुष्टे
द्राक्षासिताक्षौद्रपरूषकैः स्याच्छुद्धे च पित्तावहमन्नपानम्

पिष्ट्वा पिबेद् वाऽपि सिता जलेन यष्ट्याह्वयं तिक्तकरोहिणीञ्च
वचानिम्बकषायाभ्यां वान्तं हृदि कफोत्थिते

वातहृद्रोगहृच्चूर्णं पिप्पल्याद्यं प्रपाययेत्
त्रिदोषजे लङ्घनमादितः स्यादन्नञ्च सर्वेषु हितं विधेयम्

हीनातिमध्यत्वमपेक्ष्य चैव कार्य्यं त्रयाणामपि कर्म शस्तम्
हिङ्गूग्रगन्धाविडविश्वकृष्णाकुष्ठाभयाचित्रकयावशूकम्

पिबेत् ससौवर्चलपुष्कराढ्यं यवाम्भसा शूलहृदामयघ्नम्
पाठां वचां यवक्षारमभयामम्लवेतसम्

दुरालभां चित्रकञ्च त्र्यूषणञ्च बलात्रयम्
शटीं पुष्करमूलञ्च तिन्तिडीकं सदाडिमम्

मातुलुङ्गस्य मूलानि श्लक्ष्णचूर्णानि कारयेत्
सुखोदकेन मद्यैर्वा प्लुतान्येतानि पाययेत्

अर्शः शूलञ्च हृद्रोगं गुल्मञ्चाशु नियच्छति
क्रिमिजे च पिबेन्मूत्रं विडङ्गामयसंयुतम्

हृदि स्थिताः पतन्त्येवमधस्तात् क्रिमयो नृणाम्
यवान्नं वितरेच्चास्मै सविडङ्गमतः परम्

अथोरस्तोयाधिकारः ३

सम्प्राप्तिः
उरस्येकतरे पार्श्वे पार्श्वयोर्वाऽप्यपां चयः
उरस्तोयं गदो नाम प्रायशः प्राणनाशनः

लक्षणम्
कृच्छ्राच्छ्वासः कफस्रावो नीलावोष्ठौ तथा मुखम्
शोथः पादे धरा क्षुद्रा विषमा वेगवाहिनी

मूत्राल्पत्वं भवेच्चापि स ना न शयनक्षमः

स्वास्थ्यं किञ्चित् समासीनो लभतेऽस्मिन् महागदे

ग्रन्थान्तरे उरस्तोयनिदानम्
श्वासोऽतिकृच्छ्रः कफसंस्रवश्च नीलौ तथोष्ठौ वदनेक्षणं च
अस्वेदनञ्चाल्पपुरीषमूत्रे श्वासेन दीनः शयने न शक्तः

मन्देन्द्रियो मन्दबलाग्नि कान्तिः क्षीणाऽतिनाडी द्रुतगामिनी च
हृदि व्यथा पादयुगे च शोथो लिङ्गान्यमून्यत्र भवन्ति रोगे

चिकित्सा
भेषजं श्लेष्महरणं मूत्रस्यापि प्रवर्त्तनम्
उरस्तोये गदे योज्यं विविच्य भिषजा सदा

पिपासानिग्रहः कार्यः शीताम्भोऽनलसेवनम्
यत्नतः परिहर्त्तव्यमभिष्यन्द्यखिलं तथा

पादावशिष्टं यत्तोयं तत् तृषायां पिबेन्मनाक्
पयसा वा शृतोष्णेन शान्तिं कुर्यात् सदा तृषः

वर्षाभूस्वरसं वाऽपि यवक्षारसमायुतम्
पिबेन्नित्यमुरस्तोयी सायं प्रातरतन्द्रितः

श्वयथौ मूत्रकृच्छ्रे च कासे श्वासे हृदामये
भेषजं गदितं यद्यत् तत् तदत्र प्रयोजयेत्

नैवं व्याधिः शमं यायान्निखिलैर्यदि कर्मभिः
कुर्य्याच्छस्त्रक्रियां तर्हि लघुहस्तो भिषग्वरः

समुद्रवस्वोर्मध्ये वा महीध्रग्रहयोरथ
पर्शुकास्थ्नोर्ग्रहदिशा शस्त्रं नाम त्रिकूर्चकम्

प्रवेश्यावहितो रक्षन् यकृत्प्लीहानमेव च
निःशेषं निर्हरेदम्बु व्याधिरेवं प्रशाम्यति

## अथौपसर्गिकोपदंशाधिकारः ४

तस्य निदानलक्षणादीनि
बहुसङ्करसेवाभ्यां सञ्जातो जननेन्द्रिये
व्रणः कष्टतरो घोरो नानारोगप्रकाशकः

विषोपदंशः पापोपदंशः इत्येवमीरितः
स एव हि बुधैः पूर्वैः कथितश्चौपसर्गिकः

व्याधिः स्त्रंकमति स्त्रीतः पुंसि तस्यां ततस्तथा
अपत्येषु च जायेत कुलजोऽसौ सुदारुणः

उपदंशो द्विधा प्रोक्तो मुख्यगौणप्रभेदतः
इन्द्रियस्यादिमो दोषो मुख्योऽन्यो दाहिकस्तथा

आरभ्य च क्रियाकालं सप्ताहत्रयमध्यतः
व्रणो विषोपदंशस्य जायते जननेन्द्रिये

भवेद् दीर्घतरं कालं यावन्तं समतीत्य यः
तथा कृच्छ्रतरः स स्याद् बहुदुःखप्रदायकः

द्विधा पापोपदंशस्य व्रणः स्यात् कठिनो मृदुः
आद्यः संक्रामकः कृच्छ्रः सर्वदेहप्रतापनः

अपरो न च संक्रामेत् कञ्चिद्देहं न दूषयेत्
एष साध्यतरः प्रोक्तो न च कष्टो यथादिमः

पुंसो मेढ्रस्य मुण्डे च चर्मण्यावरके तथा
भगद्वारे भगोष्ठे च जायन्ते पिडकाः स्त्रियाः

समन्तात् कठिनास्तास्तु विदीर्णा रसवाहिकाः
दृढमूला मध्यनिम्ना ज्वरब्रध्नादिदायिकाः

मुख्योपदंश इत्यस्मिन् शान्तेऽपि पुनरेव हि
विकृतिं विविधां कुर्य्यात् तद्विषं देहसंस्थितम्

गौणोपदंशः
त्वग्विकाराच्चिरोगौ च केशलोम्नाञ्च संचयः
ग्रन्थिपीनसकुष्ठानि गौणोपदंशलक्षणम्

त्वग्विकारादयो गौणोपदंशेन लक्ष्यन्ते

विषोपदंशः
विषं पापोपदंशस्य श्लेष्मग्रन्थिषु संसृतम्
ब्रध्नरोगं सञ्जनयेत् सज्वरं बहुदुःखदम्

चिकित्सा
पिडिकामुपदंशस्य दहेत् क्षारनिपाततः
व्याधिस्तेन शमं याति न कश्चिद् व्यापदोऽपराः

कर्षं शोधितसूतस्य काठिन्यास्तद्द्वयं तथा
यत्नतो मर्दयेत् तावद् यावत् सूतो न दृश्यते

अस्य गुञ्जाद्वयं खादेत् प्रत्यहं त्रिः पुटस्थितम्
दन्तवेष्टव्यथायाञ्च लालास्रावे च तत् त्यजेत्

रसचूर्णस्य कर्पूररसस्यापि निषेवणात्
अनेन विधिनैवासौ गदो घोरः प्रशाम्यति

पलार्द्धप्रमितं चूर्णं तोये पञ्चशरावके
क्षिप्त्वा विलोड्य सम्यक् च चतुर्यामान्ततः परम्

स्वच्छांशमूद्ध्र्वगञ्चास्य गृह्णीयादतियत्नतः
इदं चूर्णोदकञ्चाम्लनाशनं व्रणमेहनुत्

द्विपले चूर्णतोयेऽस्मिन् रसचूर्णस्य माषकम्
क्षिप्त्वा सम्मिश्रयेत्तावद् यावत् कृष्णप्रभं जलम्

कृष्णद्रवेण चानेन क्षालनं व्रणहृत् परम्
उपदंशे विशेषेण शस्तमेतन्महौषधम्

सार्धद्विपलमानेऽस्मिन् निःक्षिपेन्नवरक्तिकम्
कर्पूररसमेतेन कृत्वा पीतद्रवौषधम्

व्रणं पापोपदंशस्य क्षालयेत्तेन वारिणा
एतच्च परमं प्रोक्तमौषधं हि बुधैरिह

विद्रधौ या क्रिया प्रोक्ता ब्रध्नरोगेऽपि सा हिता
गौणोपदंशे विषमे पित्तघ्नञ्चास्त्रशोधनम्

सरं भेषजमन्नञ्च पानञ्चापि निनिर्दिशेत्

अनन्ताद्यं घृतम्
अनन्तामलकीद्राक्षाः काकोलीयुगलं वरीम्
एलाद्वयं विदारीञ्च मधूकं मधुकं मुराम्

त्रिफलां स्वर्णपर्णाञ्च बीजं गोक्षुरसम्भवम्
दशमूलं तालमूलद्यं त्रिवृतामिन्द्रवारुणीम्

नीलिनीं शूकशिम्ब्याश्च बीजं कर्षप्रमाणतः
कल्कीकृत्य पचेत् प्रस्थे सर्पिषः सारिवाऽम्भसा

घृतमेतदनन्ताद्यमुपदंशविनाशनम्

रसायनं परं वृष्यमस्रदोषनिषूदनम्

भेषजं कुष्ठशमनं वातरक्तहरं तथा
गौणे मुख्ये च संयोज्यमुपदंशे यथायथम्

विशेषतः वर्ज्यम्
पापप्रमेही वातास्त्री कुष्ठी पापोपदंशवान्
न भजेदङ्गनां नापि तद्वदिन्यङ्गना नरम्

अथागन्तुजपक्षाघाताधिकारः ५

पक्षाघातो द्विधा ज्ञेयो दोषागन्तुजभेदतः
दोषजः कथितः पूर्वमधुनागन्तुजं शृणु

आगन्तुजोऽपि द्विविधः पक्षाघातः प्रकीर्त्यते
आद्यः पारदसम्भूतो द्वितीयो नागजः स्मृतः

पारदपक्षाघातस्य निदानम्
रससंस्पर्शसातत्यात् तद्धर्मस्य च सेवनात्
पक्षाघातो भवेद् यस्तु स ज्ञेयः पारदोद्भवः

पारदपक्षाघातस्य लक्षणम्
आदौ बाह्वोर्बलध्वंसस्ततः कम्पः प्रजायते
वेपेते सक्थिनी चापि कायः सर्वस्ततः परम्

गदी चलति नृत्यन् वै दृढं द्रव्यं न धारयेत्
स्पष्टं प्रभाषितुञ्चापि चर्वितुञ्च न च क्षमः

ततस्तस्यारतिर्निद्रा प्रलापो बलसंक्षयः
हृल्लासो वह्निनाशश्च दन्तध्वंसः क्वचित् स्रुतिः

शान्तिर्भवति कम्पस्य विधृतेऽङ्गेरसायने

नागामयस्य लिङ्गानि शृणुरभ्रां समासतः

पारदपक्षाघातस्य चिकित्सा
मुख्यं चिकित्सितञ्चास्य निदानपरिवर्जनम्
निदानसेविनो व्याधिर्नौषधाद् विनिवर्त्तते

स्वेदसञ्जननं सर्वं मूत्रकृच्च विरेचनम्
रक्तदोषहरं चात्र शर्मदं भेषजं मतम्

गन्धकं परमं प्राहुर्भेषजं पारदामये
नेपालनिम्बतोयेन सेव्यो लौहोऽस्य शान्तये

नागपक्षाघातस्य निदानम्
चित्रकृत्प्रमुखा ये हि नागैः कर्म प्रकुर्वते
ये वा व्यवहरन्त्यस्य पात्रं तेषां ततो गदः

अस्य लक्षणम्
अङ्गुलीस्तु समारभ्य मणिबन्धं ततोऽखिलम्
व्याधिर्व्याप्नोति दौर्बल्यं तत्रैकं लक्षणं महत्

अंसे प्रकोष्ठे तोदश्च बाह्वोश्च परिशीर्णता
नीलिमा दन्तवेष्टेच शूलं चिह्नानि चास्य वै

अस्य चिकित्सा
स्वेदनं भेदनञ्चापि कुष्ठंघ्नं यच्च भेषजम्
तत्सर्वमिह संसेव्यं कृत्वा हेतुविवर्जनम्

अथ गदोद्वेगाधिकारः ६

गदोद्वेगस्य स्वरूपम्
विना व्याधिं व्याधिशङ्का गदोद्वेग इतीरितः

पदार्थत्वाभाववत्त्वादपदार्थगदश्च सः

अपदार्थगदस्य गिदोद्वेगस्यां निदानम्
कायेन मनसा भूयाञ्श्रमः शोको बलक्षयः

नैराश्यं मानहानिश्च महोद्वेगो महाभयम्
दुरदृष्टं बीजदोषः सत्त्वस्याभाव एव च
अपदार्थगदस्यैते हेतवः कथिता बुधैः

तस्य लक्षणम्
अद्भुतस्य गदस्यास्य लक्षणान्यद्भुतानि च
असम्भाव्यान्यचिन्त्यानि महोत्पातभयानि च

कोऽप्येवंमन्यते नूनमुदरं भुजगोऽविशत्
कोष्ठेभ्रमत्यसौ नित्यं भुङ्क्ते यद् भुज्यते मया

निर्यास्यति पथा केन केनोपायेन नङ्क्ष्यति
किं विधास्यति नो जाने दश्ये वाऽह दुरात्मना

कोऽपि वा मनुते भेको ममैको मूर्ध्नि संस्थितः
विघट्टयति मस्तिष्कं मारयिष्यति मां ध्रुवम्

कोऽपीत्थं चिन्तयेच्चित्रं कायः काचमयो मम
सञ्जातोऽयमतो रक्ष्यः सदाघातात् प्रयत्नतः

इत्येवं बहुरूपाभिर्व्यर्थचिन्ताभिराकुलः
अपदार्थगदीशुष्येत् सदा भीतः सदाऽसुखी

बहुधा बोधितोऽप्येष सान्त्वितोऽपि पुनः पुनः
भ्रमं चित्ताद् दूरीकर्तुं न शक्नोति न साध्वसम्

यश्चास्य कथयेद् भ्रान्तिं तस्मै द्रुह्यति नित्यशः
प्रीयते च गदोद्वेगी व्याधेः सत्यत्ववादिनि

गदोद्वेगवता कोष्ठे किस्मंश्चिदनुभूयते
सुतीव्रा वेदना प्रायः पाककोष्ठे विशेषतः

जिह्वा स्यात् कफलिप्ताऽस्य पूतिः श्वासो निरेति च
उत्क्लेशश्च तथा वान्तिरित्थञ्च जीर्णलक्षणम्

प्राखर्य्यं स्पर्शशक्तेश्च द्युतिमल्लोहितास्यता
हृदयोदरकम्पश्च पाण्डुत्वमुदरामयः

हृदि साङ्घातिको व्याधिः केन वाऽप्यनुभूयते
गदोद्वेगवताऽन्येन पुरुषत्वस्य संक्षयः

ज्वरः सततकोऽन्येन दुष्प्रतीकार्य्य एव च
किमाश्चर्य्यं वेपनाद्यं जायते च तदा तदा

इत्थं बहुविधाकारा व्याधयः कल्पनाकृताः
भ्रमरूपाः प्रजायन्ते निःसत्त्वानाममेधसाम्

शक्यन्ते व्याधयो वक्तुं नैते निरवशेषतः
बुद्धिमद्भिर्लक्षणीया यथास्वं दोषलक्ष्म च

प्रायशः षोडशादर्वाङ् न च पञ्चाशतः परम्
व्याधिरेष प्रदृश्येत हेतुस्तत्र मनोगतिः

मासि मासि रजः स्त्रावात् सर्वे शुध्यन्ति धातवः
अतः स्नायुगदः स्त्रीणामेष प्रायो न जायते

गदोद्वेगस्य चिकित्सा

सान्त्वनाश्वासनस्नेहहर्षणैः परिचर्य्यया
अपदार्थगदाक्रान्तं चिकित्सेत् तर्षणेन च

पाचनं वह्निकृद् यच्च यद् वातस्यानुलोमनम्
पित्तहृन्नातिकफकृत् तद् युञ्ज्यादत्र भेषजम्

वातव्याध्युदितान्यत्र तैलानि च घृतानि च
युक्त्या युञ्ज्याद्भिषक् प्राज्ञो भेषजञ्च रसायनम्

गदो मिथ्येति न वदेद्भिषगस्य कदाचन
स यद् ब्रवीति वृत्तान्तं शृणुयादवधानवान्

अथ शैशवसंन्यासाधिकारः ७

शैशवसंन्यासस्य निदानं लक्षणञ्च
दुष्टस्तन्यस्य पानाच्च सदा शीतगृहे स्थितेः

वातातपविहीने वा दुष्टानिलविदूषिते
पानाशनविहारैश्च दोषलैर्बहुभिः शिशुः

संन्यासाख्येन रोगेण पीड्यते क्रिमिभिस्तथा
उत्तारनयनः स स्यादाक्षिप्ताङ्गस्त्वसंज्ञकः

दारुवत् पतितो भूमौ दृढकायो मृतोपमः
नाम्ना शैशवसंन्यासो गदोऽय शिशुपीडनः

क्रिया सद्यःफला चात्र रेचनश्च हितं मतम्
शैशवसंन्यासस्य चिकित्सा

व्याधौ शैशवसंन्यासे निदानानां निराकृतौ
विदध्यात् सर्वथा यत्नं कर्मदोषहरं तथा

कुर्य्याच्च रुबुतैलेन रसचूर्णेन वा पुनः
रेचनं शिशुसंन्यासे स्वेदस्तत्रोदरे हितः

अरोगिण्याः शिशुं धात्र्याः स्तन्यं शुद्धं प्रपाययेत्
स्तन्यस्य शोधनं वाऽपि कुर्य्याद् यस्याः पिबेत् स तत्

क्रिमिजे शिशुसंन्यासे क्रिमीणां हरणं हितम्
कणामधुयुतं सूतं मूर्च्छायां प्राशयेद्भिषक्

अथ योषाऽपस्माराधिकारः ८

योषाऽपस्मारस्य निदानम्
शोणितस्य क्षयाद्वाऽपि तथाधिक्यादजीर्णतः
कोष्ठरोधान्मनोभङ्गादत्युद्वेगाच्च शोकतः

रजोऽभावाच्च योषाणां जरायुविकृतेस्तथा
अशक्तेरपि नैष्ठुर्यात् पत्युरस्नेहतस्तथा

वैधव्यजन्यादाधेश्च योषाऽपस्मारसंज्ञकः
गदः प्रजायते कृच्छ्रो मनोदेहप्रतापनः

योषितामेव बाहुल्याद् यत एष भवेद् गदः
अपस्मारप्रकृतिकस्तेनास्यैषाऽभिधा मता

कालोऽस्य यौवनं व्याधेर्नार्वाग् द्वादशवर्षतः
परं पञ्चाशतो वाऽपि व्याधिरेष प्रजायते

अस्य पूर्वरूपम्
हृद्रुजा जृम्भणं सादो वर्ष्मणो मनसोऽपि च
भवेद् भविष्यति गदे योषाऽपस्मारसंज्ञके

अस्य लक्षणम्
वैचित्यं बुद्धिविभ्रान्तिर्हास्यं क्रन्दनमेव च
उच्चैः क्रोशः प्रलपनं ज्योतिर्द्वेषस्तथा भ्रमः

औद्धत्यं श्वासकृच्छ्रञ्च कण्ठामाशयवेदना
प्राबल्यं स्पर्शशक्तेश्च क्वचिदङ्गे सदा व्यथा

अलीकवर्त्तुलोत्थानमाकण्ठमुदरादपि
सदल्पबुद्धिर्मूर्च्छा च व्याधावस्मिन् प्रजायते

अस्य चिकित्सा
यद् धातुपोषकं पानमन्नमौषधमेव च
कोष्ठशुद्धिकरञ्चापि तत्तदत्र प्रयोजयेत्

मूर्च्छायां शीततोयेन सेकः शिरसि चक्षुषोः
शिरो विरेचनं वाऽपि प्रयोज्यं तन्निवृत्तये

अत्र प्रयोजयेत् सर्वं मूर्च्छाऽपस्मारभेषजम्
जरायुदोषं निखिलं प्रतिकुर्य्याद् यथाविधि

योषाऽपस्मरणं सान्त्वैः प्रियदानाच्च शाम्यति
बृहद्भूतभैरवरसोऽप्यत्र देयः

## अथ तत्त्वोन्मादाधिकारः ९

स्वरूपम्
अहो मम महद् भाग्यं लब्धा यद् ब्रह्मणः कृपा
इत्येवं भ्रमजो मोहस्तत्त्वोन्माद इतीरितः

तत्त्वोन्मादो हर्षमौढ्यं ब्रह्ममोहश्च स स्मृतः
वृथाधीप्रभवो व्याधिरयं सद्भिर्निरूपितः

किं रूपं कुत्र वा ब्रह्म नैतज्ञानाति कोऽप्यहो
पुराणैर्दर्शनैर्वाऽपि न लब्धं ब्रह्मदर्शनम्

एके सकर्तृकं विश्वं वदन्त्यन्ये निरीश्वरम्
ब्रह्माण्डं ब्रह्मतर्केण व्याकुलं बहुधा वृथा

मानं दुरूहं सत्तायामास्तां दूरे दयादिकम्
अनिर्णीतमनिर्णेयं तदेवमवधारय

मदर्थं ब्रह्म कुर्वेतज्ञह्येनं मम वैरिणम्
धनं देहि यशो दहि देहि राज्यमकण्टकम्

विशालनेत्रां सुदतीं पीनोन्नतपयोधराम्
नितम्बिनीं क्षीणमध्यां स्मरकेलिकलाविदाम्

नित्यं नर्मप्रियां तन्वीं रम्भोरु रसिकेश्वरीम्
मद्व्रतां नित्यसन्तुष्टां सुन्दरीं देहि कामिनीम्

इत्थमर्थनमात्रेण बह्म भीतं ससम्भ्रमम्
भ्रान्तबुद्धे न मन्यस्व प्रार्थितं साधयिष्यति

कदाचित् प्रार्थना काऽपि यदि ते सफला भवेत्
विद्धि तत् काकतालीयं तत्र ब्रह्म न कारणम्

न स्तवैर्हृष्यति ब्रह्म नापि द्वेष्टि च निन्दया
अस्तिवादी प्रियो नास्य नास्तिवादी न चाप्रियः

न मूर्खेऽनादरस्तस्य बहुमानो न पण्डिते
धनिनो वा भयं नास्य न दरिद्रे च ताडनम्

श्वपाके यवने वाऽपि ब्राह्मणे वेदपारगे

मद्यपे गणिकासक्ते मालातिलकधारिणि

शुचौ वाऽप्यशुचौ साध्व्यां वेश्यायां बालवृद्धयोः
सर्वत्रैव समं ब्रह्म विश्वरूपं सनातनम्

एवम्भूतस्य तस्येयमिति मत्प्रीयते कृतिः
तत्त्वोन्माद्यति यस्तस्य व्याधिरुन्माद एव हि

प्रायशो बुद्धिहीनानामसतां नीचचेतसाम्
व्याधिरेषोऽभिजायेत कदाचिन्महतामपि

तत्त्वोन्मादस्य निदानम्
अतिप्रगाढाच्चित्तस्य धर्माद्यभिनिवेशनात्
व्याधिस्तत्त्वोन्मदो नाम जायते वातकोपतः

तस्य लक्षणम्
ब्रह्ममोहे प्रमूढत्वं स्थिराऽस्पन्दा कनीनिका
चक्षुरुन्मीलितं सुप्तिर्गतिरोधोऽथ वाग्मिता

दम्भोग्रभावौ विक्षेपो हास्यं क्षैव्यञ्च रोदनम्
एवम्भूतानि लिङ्गानि तत्त्वोन्मादे भवन्ति हि

तत्त्वोन्मादचिकित्सा
स्नायुस्थैर्य्यकरं यद् यत् तथा वातानुलोमनम्
भेषजं पानमन्नञ्च तत्तदत्र प्रयोजयेत्

शतधौतघृताभ्यङ्गोऽसमे च मधुसर्पिषी
आज्यं सलिलमिश्रञ्च ब्रह्ममोहे परौषधम्

कदाचित् ताडनाद्यैश्च ब्रह्ममोहः प्रशाम्यति
गदे त्वप्रकृते तस्मिन् प्रहार एव भेषजम्

अपस्मारहरं यच्च वातव्याधिहरं तथा
घृततैलादिकं सर्वं ब्रह्ममोहे प्रशस्यते

अथ मस्तिष्क स्नायुविकाराधिकारः १०

रूक्षाल्पलघ्वन्नरविप्रतापैः शोकाध्वचिन्ताप्रमदाप्रसङ्गैः
मस्तिष्कजः स्नायुचयो नराणां संशुष्कतां दुर्बलतां च याति

शक्तेर्लघुत्वं सकलेन्द्रियाणां कान्तिप्रणाशो मनसश्च दैन्यम्
निद्राविनाशो हृदये प्रकम्प इत्यादयः स्युर्विविधा विकाराः

अथ स्नायुशूलाधिकारः ११

स्वरूपम्
स्नायुष्वतीव या घोरा तच्छाखास्वपि वा पुनः
वेदना स्नायुशूलाख्या सा भवेत् प्राणपीडनी

व्याधेः स्थानम्
बाह्वोः शीर्ष्णस्तथा सक्थ्नोरन्यस्याङ्गस्य वा पुनः
त्वचो निम्नस्थितास्वेव वस्नसासु गदो भवेत्

शूलोऽय निखिलाङ्गेषु भवेत् तीव्ररुजाकरः
विशिष्टाङ्गभवस्यास्य विशिष्टाख्या च वर्त्तते

ऊर्ध्वभेदार्द्धभेदौ चाप्यधोभेदस्तथैव च
मुण्डमुण्डार्धकस्फिग्जगदानामभिधाः क्रमात्

तत्रोर्ध्वभेदस्य निदानम्
बलरक्तक्षयाद्वाऽपि वृक्कमस्तिष्कदोषतः
अजीर्णाद् दशनव्याधेरूर्ध्वभेदो गदो भवेत्

लक्षणम्

ललाटेऽक्षिपुटे निम्ने गण्डे नस्योष्ठ एव च
जिह्वापार्श्वेऽधरे दन्ते शूलवद् दाहवच्च या

एकस्मिन् प्रायशः पार्श्वे वेदना मुखमण्डले
ऊर्ध्वभेदाख्यया सोक्ताऽगदङ्कारैः क्रमैधितिः

अनुपशयः
शीतानिलस्य संस्पर्शाद् देहकम्पाच्च वर्द्धते
स्नायुभेदस्य विकृतेरङ्गभेदे भवेद् गदः

अर्द्धभेदस्य निदानम्
आर्द्रस्थानस्थितेश्चापि शीतयोगाद् बलक्षयात्
अर्द्धभेदः प्रजायेत दुष्टवाताम्बुसेवनात्

अर्द्धभेदस्यलक्षणम्
याऽर्द्ध व्याप्य भवेत् तीव्रा वेदना मुखमण्डले
वामे च प्रायशः पार्श्वे साऽर्द्धभेदः प्रकीर्त्यते

बाणेनेव शिरो विद्धं व्यथतेऽतिसुदारुणम्
कदाचित् क्रममालम्ब्य विरामश्चात्र वा महान्

बाहुल्येन च नारीणां व्याधिरेष प्रजायते
प्रादुर्भावो वयःस्थस्य यौवने ह्यधिको मतः

अधोभेदस्य निदानम्
विड्रोधाच्छ्रमाच्छीताद् दौर्बल्यादामवाततः
आर्द्रस्थानस्थितेर्गर्भदोषात् स्यान्निम्नभेदकः

अधोभेदस्य लक्षणम्
स्फिच्यूरुजानुसन्ध्योश्च पश्चिमे च क्वचित् पदे
जङ्घायां वाऽपि यच्छूलमधोभेदः स उच्यते

एकस्मिन् प्रायशः सक्थि शूलोऽय स्यान्निशाबली
बाहुल्येनैव वयसि प्रौढ एव प्रजायते

स्नायुशूलस्य चिकित्सा
यदग्नेर्दीपनं किञ्चिद् यद् वा स्याद् बलवर्द्धनम्
वातानुलोमनं यच्च स्नायुशूले तदौषधम्

प्रयोज्यं दारुगरलमर्धभेदप्रशान्तये
विरतौ तत् प्रयोक्तव्यं न प्रकोपे कदाचन

मदिरामृतसाराख्यं लौहं चोदः कुपीलुजः
सेव्यान्येतानि विधिना स्नायुशूलस्य शान्तये

स्वेदसेकप्रलेपांश्च स्नायुशूलेषु योजयेत्
तीव्रं विरेचनञ्चात्र विदध्यान्मलसञ्चये

घृततैलादिकं योज्यमनिलामयनाशनम्
स्नायुशूलेषु सर्वेषु भेषजञ्च रसायनम्

अथ ताण्डवरोगाधिकारः१२

हिमवच्छिखरे रम्ये सिद्धर्षिगणसेविते
सुगन्धिसुमनःशोभिफलवद्बहुपादपे

श्रुतद्विजकले शान्तैः श्वापदैर्बहुभिर्वृते
वटमूले समासीनमात्रेयं ज्ञानसागरम्

आयुर्वेदमहाचार्य्यं तपोदीप्तकलेवरम्
उरभ्रो भक्तिमानग्रे कृताऽञ्जलिरभाषत

कथं ताण्डवरोगस्य जन्म चिह्नानि कानि च

कथञ्च स्यात् प्रतीकारः सर्वं मे कृपया वद

श्रुत्वैतां प्रार्थनां धीरशिष्याय शिष्यवत्सलः
वचनैर्वक्तुमारेभे व्यक्तार्थैस्तदृषीश्वरः

निदानम्
प्रीतोऽस्मि भक्तिमन् वत्स ब्रुवे यच्छ्रोतुमिच्छसि
यद् दक्षायावदत् पूर्वं ब्रह्मा लोकपितामहः

अप्यातङ्कादतिक्रोधादतिहर्षाद्बलक्षयात्
कर्षणात् स्वप्नरोधाच्च विड्बन्धात् क्रिमिसञ्चयात्

आशानाशादभीघातात् स्त्रीणामृतुविपर्य्ययात्
कशेरुकाभञ्जनच्चात्युग्रभावात् प्रजायते

व्याधिस्ताण्डवनामा स प्राणिनां क्लेशकृत् परः
अङ्गानां ताण्डवादस्य ताण्डवाख्या बुधैः कृता

कैशोरे वयसि प्रायः स्त्रीणाञ्चापि विशेषतः
व्याधिरेषोऽभिजायेत वृद्धानाञ्च बलक्षयात्

ताण्डवरोगलक्षणम्
वामबाहुं समारभ्य प्राय आदौ ततोऽपरम्
ततः पादौ ततोऽङ्गानि चालयेत् ताण्डवामयः

मुष्टिना किमपि द्रव्यं सम्यग्धारयितुं क्षमः
समर्पयितुमास्ये वाऽप्यदनीयं न ताण्डवी

नृत्यन्निव चलत्येष बीभत्सैर्मुखचेष्टितैः
अधीरः सततं तिष्ठेन्निद्रायां कम्पवर्जितः

ताण्डवचिकित्सा
बृंहणं रेचनञ्चैव वह्नेर्बलविवर्द्धनम्
औषधं पानमन्नञ्च प्रयोज्यं ताण्डवे गदे

क्रिमिसञ्चयसम्भूते कार्य्यं क्रिमिविनाशनम्
रजोरोधभवे व्याधौ रजसस्तु प्रवर्तनम्

श्यामामनन्तां मधुकं त्रिवृतां चन्दनद्वयम्
एलाद्वयं तथा धात्रीं क्वाथयित्वा जलं पिबेत्

अनेन प्रशमं याति ताण्डवाख्यो गदो ध्रुवम्
ताण्डवारिलौहमपि देयम्

अथ क्लोमरोगाधिकारः १३

प्लीहक्षुद्रान्त्रयोर्मध्यमन्नपाकादिकर्मणि
सहायभूतमध्यास्ते क्लोम तच्च तिलाभिधम्

गुर्वतिस्निग्धभोज्यैश्चाप्यविघातादिभिस्तथा
वृद्धिस्तस्य मृदुत्वञ्च तत्र शोणितसञ्चयः

विद्रधिर्वा भवेत्तत्र व्याधयोऽन्ये च दारुणाः
एवं विकृतिमापन्ने तिलके वह्नि संक्षयः

उत्क्लेशो वमनं कार्श्यं पाण्डुता सदनं भ्रमः
ऊर्ध्वोदरे व्यथा तीव्रा काठिन्यमपि चोष्णता

शूलाध्मानप्रसेकाश्च विद्रधौ महती च तृट्
शिला चाप्यश्मरी तुल्या सुकष्टाऽप्यत्र जायते

क्लोमचिकित्सा

यद् वह्नेर्दीपनं यच्च मारुतस्यानुलोमनम्
अन्नपानौषधं सर्वं तत्तत् क्लोमातुरे हितम्

यो यः समाश्रयेद् व्याधिः क्लोम्नि तं तमवेक्ष्य च
क्रियां संसाधयेद् वैद्यो यथादोषं बलाबलम्

अभयादिक्वाथैः सुरेन्द्रमोदकैः शशिशेखररसैः सुरेन्द्राभ्रवटौ
च तथा वातपित्त प्रशमकानि भेषजानि क्लोमरोगशान्तये प्रयोज्यानि

## अथ वृक्कामयाधिकारः १४

पूर्वरूपम्
त्वग्रूक्षोष्णा वेगवती धमनी कठिना तथा
निद्रानाशो वह्निमान्द्यं शोथोऽक्षिण च मुखे पदे
वृक्कामयस्य पूर्वाणि रूपाण्याहुभिषग्वराः

वृक्कामयस्य लक्षणम्
रक्ताल्पत्वान्मुखस्य स्यात् पाण्डुत्वं कटिवेदना
त्वक् शुष्का स्वेदहीना च धमनी द्रुतगामिनी

वह्निमान्द्यमजीर्णञ्च भक्तद्वेषो व्यथोदरे
अम्लोद्गारस्तथा छर्दिर्हृद्वेपः श्वासकृच्छ्रता

मूत्राल्पत्वं सदा वेगो विशेषान्निशि जायते
मूत्रकाले च शिश्नाग्रे मनाग् दाहोऽनुभूयते

वृक्कयोर्विकृतिश्चास्मिन् विशेषाज्जायते गदे
यकृत्प्लीहहृदाञ्चापि सा सदैव प्रजायते

कर्णनादो दृष्टिदोषः शिरोग्रीवांऽसवेदना
शाखासु गौरवं मूर्च्छा वृक्करोगस्य लक्षणम्

वृक्कामयनिदानम्
रक्तस्य परिवृत्त्या हि जायते वृक्कवैकृतम्

अस्य चिकित्सा
यन्मूत्रलं शोणितशोधनञ्च यत् पोषणं वह्निविवर्धनञ्च
वृक्कस्य रोगे परियोजयेत् तद् व्याधेर्बलं वीक्ष्य भिषग् विधिज्ञः

रसो विवर्धयेद् व्याधिमतस्तं नेह योजयेत्
रसायनाधिकारोक्तान्यौषधान्यपि योजयेत्

न चास्ति शमने किञ्चिन्निर्दिष्टमस्य भेषजम्
सर्वतोभद्रा वटी चापि देया

अथौपसर्गिकमेहाधिकारः १५

बहुसङ्करसम्भोगप्रक्लिन्नेपि यया पुमान्
स्त्रिया सङ्गम्य सम्मूढो गदमाप्नोति दारुणम्

मूत्रनाड्यन्तरस्थाना त्वगस्य श्लेष्मवाहिनी
व्रणिता वाहरेत्क्लेदं व्रणमेहः स उच्यते

औपसर्गिकमेहश्च तस्य नामान्तरं मतम्
मेह आगन्तुकश्चापि स केश्चित् परिपठ्यते

आरभ्य सङ्गमनिशां सङ्ख्यया याच सप्तमी
एतद्व्यवहिते काले प्रायशो जायते गदः

कण्डूः शिश्नाग्रतस्तस्य समुत्थानं मुहुर्महुः
तीव्रवेदनया वापि मुहुर्मूत्रप्रवर्त्तनम्

स्फीतिर्लिङ्गस्य लौहित्यं कोषे ब्रध्ने च वेदना

कदाचित् क्लेदसंरुद्धमार्गत्वादतिरुक्स्रवेत्

मूत्रं दाहेन घोरेण द्विधारं वा प्रवर्त्तते
क्षरेद्वा क्षतजं मेढ्रान्मूत्रकाले कदाचन

सन्ततं तनुरास्रावं स्रवेदादौ ततोऽतनुः
स तावत् पुनराशुष्यन् पीतिमानं प्रयाति च

काले लघ्वीं व्यथां कुर्य्याद् व्याधिञ्च दुष्प्रतिक्रियाम्
आमवातादिरोगाद्या ज्ञेयाश्चास्य ह्युपद्रवाः

औपर्गिकमेहस्य चिकित्सा
व्रणमेही त्यजेद् यत्नाद् व्यवायं सोऽहितो यतः
स्त्रियाश्च परिभुक्ताया आमयं जनयेच्च तम्

भेषजं पानमन्नञ्च निषेवेतानुलोमनम्
व्रणघ्नं मूत्रजननं क्रियामुग्रां विवर्जयेत्

कोष्णे जात्या वराया वा क्वाथे शिश्नं निमज्जयेत्
वेदनोपशमस्तेन व्याधेश्च बलसंक्षयः

आभानिर्यासतोयञ्च यवक्षारयुतं पिबेत्
सजलं क्षीरमामं वा व्रणमेहनिवृत्तये

पिबेद्वा शारिवाक्वाथं सक्षारनरसारकम्
श्यामामनन्तां कट्वीञ्च बीजं गोक्षुरसम्भवम्

गन्धाश्मनरसाराभ्यां क्वाथयित्वा जलं पिबेत्
एकं सुरप्रियफलं मेहमागन्तुकं हरेत्

वराभापिप्पलीनाञ्च व्रणमेहनिवृत्तये

कुर्यादुत्तरबस्तिञ्च कषायेण प्रयत्नतः
महाभ्रवटिकौ कन्दर्परसश्चात्र प्रयोज्यः

अथ शीर्षाम्बुरोगाधिकारः १६

निदानं सम्प्राप्तिश्च
मद्यातिपानादतिशैत्ययोगाद्विरुद्धभोज्यादनिलप्रदोषात्
दुष्टाम्बुपानादभिघाततश्च तथाऽन्त्रमध्ये क्रिमिसम्भवाच्च

शिरोगतस्नेहवृतौ क्रमेण सञ्चीयते तोयमतिप्रभूतम्
शीर्षाम्बुनामागद एष पूर्वैः प्रकीर्त्तितः कृच्छ्रतरो भिषग्भिः

प्रायशः शैशवे व्याधिर्विविधाहितसेवनात्
तथा दन्तोद्गतेरेष बाहुल्येनाभिजायते

तस्य पूर्वरूपम्
जिह्वा लिप्ताऽतिनिद्रत्वं दौर्बल्यं श्वासपूतिता
गाढविट्ता च तस्मिंस्तु भविष्यति भविष्यति

तस्य लक्षणम्
शिरसो वेदना घोरा श्रुतेर्दृष्टेश्च तीक्ष्णता
मूत्राल्पत्वं कृष्णविट्त्वं धमनी वेगवाहिनी

त्वग्रूक्षोष्णा तथा छर्दिर्विषमा च कनीनिका
कोपित्वं मुखवैवर्ण्यं निद्रायां दन्तघर्षणम्

कण्डूरोष्ठस्य नासाया आक्षेपो रक्तनेत्रता
पक्षाघातः प्रलापश्च शीर्षाम्बुगदलक्षणम्

ग्रन्थान्तरे शीर्षाम्बुनिदानञ्च
दुष्टं जलन्त्वतिहिमं विकृतं समीरं

क्लिन्नं विरुद्धमशनं भजतां शिशूनाम्
शीर्षेऽभिघातपतनात् क्रिमिदोषतश्च
सञ्चीयते शिरसि तोयमनल्पमात्रम्

पूर्वरूपम्
पूर्वरूपं भवत्यस्य निद्राधिक्यं बलक्षयः
दुर्गन्धिश्वासवायुश्च काठिन्यं शकृतस्तथा

लक्षणम्
तीव्रा रुजा मूर्द्धनि सर्वदैव
मूत्राल्पताच्छर्दिरथोष्णता च

वैवर्ण्यमास्यस्य मलस्य कार्ष्ण्य
मालोहितं स्यादपि नेत्रयुग्मम्

नासौष्ठकण्डूयनपक्षघातावाक्षेपकश्चैव रदप्रघर्षः
वेगं च धत्ते धमनी प्रकामं शीर्षाम्बुरोगस्य तु चिह्नमेतत्

चिकित्सा
भेषजं रेचनं यच्च यन्मूत्रस्य प्रवर्त्तनम्
रक्तदोषहरं यच्च तच्छीर्षाम्बुगदे शुभम्

मुण्डयित्वा शिरस्तच्च छादयेदुष्णवाससा
पाययेन्नारिकेलस्य स्नेहञ्चापि निरन्तरम्

सेवयेद्रसचूर्णञ्च स्तोकमात्रं विचक्षणः
पीतमूलद्यं त्रिवृच्छ्यामे पथ्यामामलकीं शटीम्

अनन्तां मधुकं मुस्तां धान्याकं कटुरोहिणीम्
हरिद्रे द्वे त्रिजातञ्च क्वाथयित्वा यथाविधि

यवक्षारेण सहितं पाययेदस्य शान्तये
सलिलशोषणचूर्णैं कुङ्कुमाद्यं घृतम्

बह्निभास्वरोरसैः रसतैलञ्चात्र प्रयोज्यम्
नैव शान्तिं गते व्याधौ मस्तिष्कात् सलिलं हरेत्
त्रिकूर्च्चकेन लघुना यत्नतः कुशलो भिषक्

अथ मस्तिष्कवेपनाधिकारः १७

निदानं लक्षणञ्च
शिरस्यभिहते तैस्तैर्मूर्च्छाहृल्लासवान्तयः
जडत्वं स्पन्दनं ह्रासो दौर्बल्यं चलचित्तता

वेपथुः कर्णनादश्च मलिनत्वं मुखस्य च
पृथुत्वं तारकायाश्च धमनी बलवर्जिता

शीतलत्वं शरीरस्य वैकृतं वचनस्य च
तथा पक्षवधः स्याच्च गदोऽसौ शीर्षवेपनः

अस्य चिकित्सा
मनः स्थैर्यकरं कर्म कार्यं मस्तिष्कवेपने
शिरस्युष्णेऽतिशीतेन तोयेन सेचनं हितम्

मस्तिष्कवेपनध्वंसि दन्तीस्नेहेन रेचनम्
सजला बललाभाय मृतसञ्जीवनी सुरा

प्रयोक्तव्या यथामात्रं बल्यमन्यच्च भेषजम्
बह्व्यूष्मणा हरेच्छैत्यमङ्गानां कुशलो भिषक्

त्रिवृतां स्वर्णपत्रीञ्च मुस्तकं मधुकं बलाम्
हरिद्रे द्वे नागरञ्च त्रिफलां कटुरोहिणीम्

क्वाथयित्वा प्रयोक्तव्यं शीर्षवेपनशान्तये
बलाक्वाथेन सिन्दूरं शीर्षवेपथुनाशनम्
वातव्याधिहरं सर्वं भेषजं तस्य शान्तिकृत्

## अथ मस्तिष्कचयापचयाधिकारः १८

निदानं लक्षणं च
देहस्वभावाद् दिष्ट्या च वर्द्धते मस्तुलुङ्गकः
करोटिरपि बालानां यूनाञ्चापि कदाचन

मस्तिष्कस्य करोटेश्च यदि वृद्धिर्द्वयोर्भवेत्
न चिह्नं दृश्यते किञ्चित् प्रायशः समवर्द्धनात्

मस्तिष्कस्यैव चेद् वृद्धिर्न करोटेस्तथा भवेत्
तदा निपीडनात् तस्य जायन्ते विविधा रुजः

शिरसोऽतिरुजा तीव्रा दौर्बल्यं भ्रममूर्च्छने
पक्षाघातस्तथाक्षेपस्ततो मरणमेव च

ह्रासमायति मस्तिष्कं देहदोषाददृष्टतः
एकपार्श्वे ह्रसेत् तच्चेन्न शीघ्रं जीवनक्षयः
समन्ताद्ध्रासतस्तस्य प्राणान्तस्त्वरया भवेत्

वृद्धेश्चिकित्सा
मस्तुलुङ्गस्य संवृद्धिर्जायते मरणाय हि
नौषधं तत्र चेत् सेव्यं तथाऽपि च रसायनम्
पेयमत्र पञ्चगव्यं घृतं मधुयुतं तथा

ह्रासस्य चिकित्सा
मस्तिष्कस्य यदि ह्रासो मरणायैव जायते
तथाऽप्यत्र सदा सेव्यं भेषजं परिबृंहणम्

अत्र वातामयोक्तानि तैलानि च घृतानि च
अपस्मारगदोक्तानि तथा सेव्यानि सर्वदा
तथा चन्दनादिक्वाथः प्रयोज्यः

अथांशुघाताधिकारः १९

निदानं लक्षणञ्च
चण्डांशोरंशुना शीर्ष्णि तप्ते चण्डेन जायते
अंशुघाताभिधो व्याधिः प्राणिनां प्राणपीडनः

तृष्णाऽतिघोरा त्वग्रूक्षा भ्रमो नेत्रस्य रक्तता
मूत्रवेगश्च मूर्च्छायो हृल्लासो विषमा धरा

श्वासकृच्छ्रे स्पर्शहानिराक्षेपश्चात्र सम्भवेत्
प्रायः कारावरुद्धानां भटानां जायते च सः

नीलिमा हस्तपादस्य धमन्याः क्षणलुप्तता
विक्षेपणञ्च गात्राणां मरणायांशुघातिनः

अस्य चिकित्सा
अस्यारिष्टलक्षणम्
अङ्गावरणवासांसि दूरे निक्षिप्य यत्नतः
प्रच्छाये प्रवहद्वाते गन्धाढ्ये मनसः प्रिये

विविक्ते व्यक्तनभसि विहङ्गगणनादिते
शाययेत् सुखशय्यायामंशुघातिनमञ्जसा

ततस्तस्य हरेत् खेदं तालवृन्तभवानिलैः
शीताम्बुसेकं कुर्य्याच्च चन्दनाम्बु च पाययेत्

नाधिकं पाययेदम्बु सहसा कुशलो भिषक्
आच्छादयेत्सर्वमङ्गं शीततोयार्द्रवाससा

सहस्त्रधारया स्नानमंशुघातगदापहम्
दन्त्युद्भवेन तैलेन रेचनं हितमुच्यते

अत्युष्णेनाम्भसा सिक्तं वस्त्रमूर्णामयं पृथु
ततो निहृततोयञ्च श्रीवासपृषतावृतम्

उष्णमेव च घाटायां निधायान्येन वाससा
शुष्केण वाऽपि कदलीदलैर्नातिदृढं हि तत्

बद्ध्वाऽतिदाहं यावच्च संरक्षेदतियत्नतः
अनेन विधिना मूर्च्छा नश्यत्येव हि सत्वरम्

अङ्गानामूष्मणो नाशे धमन्याश्च व्यतिक्रमे
स्वेदो विधेयो योज्या च मृतसञ्जीवनी सुरा

अंशुघाते प्रकर्त्तव्यो विधिर्मूर्च्छानिषूदनः
अंशुघाते निवृत्तेऽपि मिथ्याहारविहारिणः

अपस्मारादयः प्रायो जायन्ते बहवो गदाः
तन्मुक्तोऽतो हितं नित्यं सेवेताबललाभतः

मनः प्रीतिप्रदं कर्म विदधीत निरन्तरम्
रत्नेश्वरो रसः महाशिशिरपानकमत्र प्रयोज्यम्

अथ बाधक स्त्रीरोगा रोगाधिकारः २०

लक्षणम्
रक्तमाद्री तथा षष्ठ्यङ्कुरो जलकुमारकः
बाधका इति चत्वारः प्रजाजननबाधकाः

रक्तमाद्र्या लक्षणम्

व्यथा कटच्यां तथा नाभेरधः पार्श्वे स्तनेऽपि च
रक्तमाद्रीप्रदोषेण जायते फलहीनता

मासमेकं द्वयं वाऽपि ऋतुयोगो भवेद् यदि
रक्तमाद्रीप्रदोषेण फलहीना तदा भवेत्

षष्ठ्या लक्षणम्
नेत्रे हस्ते भवेज्ज्वाला योनौ चैवं विशेषतः
लालासंयुक्तरक्तञ्च षष्ठीबाधकयोगतः

मासैकेन भवेद् यत्र ऋतुस्नानद्वयं तथा
मलिना रक्तयोनिः स्यात् षष्ठीबाधकयोगतः

अङ्कुरस्य लक्षणम्
उद्वेगो गुरुता देहे रक्तस्रावो भवेद् बहुः
नाभेरधो भवेच्छूलं चाङ्कुरः स तु बाधकः

ऋतुहीना चतुर्मासं त्रिमासं वा भवेद् यदि
कृशाङ्गा करपादे च ज्वाला चाङ्कुरयोगतः

जलकुमारस्य लक्षणम्
सशूला च सगर्भा च शुष्कदेहाऽल्परक्तिका
जलकुमारदोषेण जायते फलहीनता

या कृशाङ्गी भवेत् स्थूला बहुकालमृतुस्तथा
गुरुस्तनी स्वल्परक्ता जलकुमारदूषणात्

गर्भे जातेऽपि तस्य पतनं स्यात्
बाधकस्य चिकित्सा

रसाञ्जनं विडं वह्निं शीतेन पयसा सह

पीत्वा बाधकरोगेण सद्यो नारी प्रमुच्यते

मरिचेन प्रजावत्या मूलं शीताम्भसा सह
पीत्वा बाधकनिर्मुक्ता नारी गर्भं दधाति हि

अन्तर्भवन्ति व्यापत्सु योनेः सर्वेऽपि बाधकाः
अतस्तासां विधानेन भिषगेतानुपाचरेत्

योनिरोगवती नारी कुर्य्यान्नातिरतौ मतिम्
भूयसीं विकृतिं योनेर्यतः सा जनयेद् ध्रुवम्

## अथ योनिकण्ड्वधिकारः २१

निदानम्
योनौ बलासे संक्रुद्धे जरायुविकृतेस्तथा
वस्तिद्वारेऽबुदे जाते दुर्नामगदतोऽपि च

योनेः शिराणां प्रसृतेर्वातवत्याश्च योषितः
रजः प्रवृत्तिसमये पुरुषेणातिसङ्गमात्

गर्भप्रागुद्भवे चापि योनिकण्डूः प्रजायते
वार्धक्य एव नारीणां सा बाहुल्येन संभवेत्

लक्षणम्
योनौ कण्डूश्च तोदश्च रौक्ष्यं शुष्कत्वमेव च
योनिकण्डूगदस्यैतल्लक्षणं भिषजो विदुः

उष्णानुपशयो व्याधिः शीतोपशय एष हि

तस्याश्चिकित्सा
योनिकण्डूगदे देयमादौ स्निग्धविरेचनम्
भेषजं रक्तदोषघ्नं बलदायि रसायनम्

अतस्तु सारिवां लोध्रं त्रिवृतामिभपिप्पलीम्
क्वाथयित्वा पिबेत् तोयं योनिकण्डूप्रशान्तये

योनिकण्डूगदे योनौ शीततोयाभिषेचनम्
स्नेहस्वेदश्च कर्त्तव्यो वस्तिश्चोत्तरसंज्ञितः

योनिव्यापद्गदोक्तानि भेषजानीह योजयेत्
तथा च
शिवकरी वटौ टङ्कणादिचूर्णमपि देयम्

अथ योन्याक्षेपाधिकारः २२

निदानं लक्षणञ्च
मारुते विगुणे योनौ स्पर्शस्यातिप्रवृद्धता
विक्षेपणं मुखस्यास्यास्तत्स्पर्शे तीव्रवेदना

योन्याक्षेपवती नारी न सहेत रतिक्रियाम्
यदि गच्छेद्बलाद् भर्त्ता तां साति व्यथिताभवेत्

नोपसर्पति भर्त्तारं सदा साध्वसविह्वला
पत्या तिरस्कृता दुःखान् मृत्युमात्मन इच्छति

उद्वेगो वह्निहानिश्च निद्राऽल्पत्वं तथा क्रमात्
बस्तिदाहो व्यथा पृष्ठेऽशक्तिश्चङ्क्रमणेऽपि च

दौर्बल्यं वर्णहानिश्च तथोत्साहस्य सङ्क्षयः
योन्याक्षेपगदस्यैताः प्रोक्ता आकृतयो बुधैः

चिकित्सा
नागदेन गदः साध्यः शस्त्रेणायं प्रसाध्यते
शस्त्रं प्रयोजयेदत्र भिषक् शस्त्रविशारदः

पाययित्वा सुरां तीव्रां गदिनीं सव्यशायिनीम्
उत्तानामथवा कृत्वा योनौ शस्त्रं प्रवेश्य च

ह्रीमन्तं त्वरयाच्छिद्य मुखं योनेर्विदार्य च
तूलेनारुध्य बध्नीयाल्लघुहस्तचिकित्सकः

अवरोधे तु मूत्रस्य वर्त्तयेत् तच्छलाकया
वेदनां वारयेद् वैद्यः फणिफेनप्रयोगतः

पुनर्घस्त्रद्वयान्ते तां पाययित्वा सुरां भिषक्
तूलं निःसार्य योनिस्थं मुखं योनेः प्रसार्य च

तदधः कर्त्तनं कुर्यादङ्गुल्यर्धप्रमाणतः
इत्येवं कर्मणा व्याधिर्योन्याक्षेपः प्रशाम्यति

## अथ जरायुरोगाधिकारः २३

निदानम्
नैरन्तर्येण गर्भस्य सम्भवात् स्रावतोऽस्य च
शैत्यादार्द्राभिवासाच्च पापोपदंशतस्तथा

अतिव्यवायतः पापमेहिना सह सङ्गमात्
जरायुरोगो जायेत लक्ष्माण्यस्य निशामय

लक्षणम्
ज्वरोऽग्निमान्द्यमास्यस्य नीलत्वं त्रिकतोदनम्
व्यथा निम्नोदरे बस्तावुष्णत्वं गौरवं तथा

मुहुर्मूत्रप्रवृत्तिश्च योनितः क्लेदसंस्रुतिः
मलस्यातिप्रवृत्तिश्च ततस्तद्रोध एव च

दुर्नामानि च दौर्बल्यं शिरोरुग् वमथुस्तथा

जरायुरोगे जायन्ते आकारा एवमादयः

चिकित्सा
जरायुरोगे प्रथमं देयं स्निग्धं विरेचनम्
हितोऽत्रोत्तरबस्तिश्च सुखोष्णेनाम्भसा तथा

अधोदेहस्य सलिले चोष्णे संमज्जनं हितम्
अतसीबीजकल्केन तप्तेन सह सर्पिषा

पुटलेपो हितः प्रोक्त उदराधो मनीषिभिः
नारिकेलजतैलेन रससिन्दूरसेवनम्

जरायुरोगं शमयेत् तथा पथ्यानुवर्त्तनम्
प्रमदानन्दो रसः शारिवादि चूर्णञ्च सेवेत

अथाण्डाधारगदाधिकारः २४

निदानम्
रमणातिशयाच्छैत्यादभिघाताद्विषादपि
अण्डाधारगदः कृच्छ्रो जायते चाहिताशनात्

लक्षणम्
उदरोरुव्यथा कृच्छ्रा मूत्रस्याल्पत्वरक्तते
ज्वरारोचकहृल्लासा अरतिर्बलसंक्षयः

धमनी वेगिनी क्षुद्रा जिह्वा रक्तोज्ज्वला तथा
अण्डाधारगदस्यैताः प्रोक्ता आकृतयो बुधैः

चिकित्सा
बलप्रवर्द्धकं यद् यत् पवनस्यानुलोमनम्
अण्डाधारगदे तत्तत् प्रयोक्तव्यं भिषग्वरैः

पटोलादिक्वाथः योषिद्वल्लभो रसः चन्दनाद्यं चूर्णमपि प्रदातव्यम्
विषञ्च मधुना देयमण्डाधारगदे हितम्

अथौजोमेहाधिकारः २५

निदानं लक्षणञ्च
अभिघाताग्निमान्द्यामवाताजीर्ण विषूचिका
विषमज्वरशोथाद्यैर्यक्ष्मकासादिभिस्तथा

वृक्कयोः शोणितस्रोतोविकृतेरस्रदोषतः
लसीकाशुक्रपूयास्रैर्युक्ते मूत्रे तथा नृणाम्

स्त्रीणां गर्भागमे चैव कटुकक्षारवर्ज्जितैः
मधुरौजस्करद्रव्यभक्षणैरतिमात्रतः

गुरुपर्युषितानाञ्च भोजनादतिभोजनात्
नवधान्यादिगोधूमहंसडिम्बातिसेवनात्

दूषिते शीतले तोये स्नानपानावगाहनात्
एभिर्निदानैरन्यैश्च दूषितादोजसो भवेत्

ओजोमेहः सः विज्ञेय आयुर्बलनिकृन्तनः
शारीरिकश्रमवशात् तथाऽन्येनैव हेतुना

द्रुतं शोणितसञ्चारात् प्रवृत्तेश्च विपर्ययात्
ओजोविकृतिमापन्नं हंसाण्डश्वेतभागवत्

पिष्टतण्डुलवद्वाऽथ सह मूत्रेण संस्रवेत्
मेदःक्षयो भवेत्तत्र ज्वरारोचकयोस्तथा

शोथेग्निमान्द्ये सञ्जाते गदोऽसाध्यो न संशयः
अन्यथा कृच्छ्रसाध्योऽसौ यत्नाज्जीवति मानवः

चिकित्सा
विचार्य दोषदूष्यादीन् निदानं परिवर्ज्जयेत्
चिकित्सेत गदाक्रान्तं दोषदूष्यानुसारतः

अयःप्रधानमगदं हितमत्र विशेषतः
वर्ज्जनीयं रसोद्भूतमौषधं शिवमिच्छता

ओजोह्रासजदौर्बल्यं दूरीकुर्यात् प्रयत्नतः
चन्दनादिक्वाथः अजमोदादिचूर्णम्

चन्दनासव इत्यादिकं देयम्
यथा चन्दने नलदं द्राक्षा गुडूची मधुकं शटी

धात्री च क्वाथ एतेषामोजोमेदोपशान्तिकृत्
तथा हारिद्रमाञ्जिष्ठमेहादीनां परौषधम्

सोपद्रवाणां कथितः कृपार्द्रेणैव शम्भुना
दाडिमाद्यं घृतं चन्द्रप्रभा नाम वटी तथा

मुक्तावङ्गेश्वरश्चैव वसन्तकुसुमाकरः
चन्दनाद्यासवोऽरिष्टो देवदारुसमुद्भवः

प्रमेहमिहिरं तैलं तथा मेहाधिकारिकम्
अगदं चात्र युञ्जीत नित्यं कुशलमिच्छता

## योन्यङ्कुरवृद्ध्यधिकारः २६

निदानम्
दुष्टवातेन रक्तस्य दोषाच्च करकर्मणा
योन्यङ्कुरस्य संवृद्धिर्जायते परमोत्कटा

चिकित्सा
रोगिणीं चेतनाहीनां कृत्वा च्छिन्द्याद् भगाङ्कुरम्
बध्नीयादपि बन्धन्या पथ्येनैताञ्च वर्त्तयेत्

अथ लसिकामेहाधिकारः २७

निदानं लक्षणं च
मधुराणां फलानाञ्च मूलानाञ्च गुडोद्भुवाम्
द्रव्याणाञ्चातियोगाच्च तथैवातिपरिश्रमात्

मानसश्रमशीलानां वर्ज्जयित्वा तु कायिकम्
गुरुपर्य्युषितक्लिन्नाभिष्यन्दिद्रव्यभोजनात्

आनूपमत्स्यमांसादि भोजनादतिभोजनात्
एभिर्निदानैः सन्दुष्टो यकृत् पक्वाशयस्तथा

वृक्कयोर्मूत्रकोषे च जनयित्वा क्षतं ततम्
मूत्रमार्गेण तरलं पूयरक्तादिसन्निभम्

समेदस्कं सलसिकं नराणां स्रावयेन्मुहुः
सालक्तकपयस्तुल्यं मूत्रं सम्यक् प्रवर्त्तयेत्

कदाचिज्जायते मूत्रं पूयरक्तादिभिर्घनम्
स्थूलसूत्रनिभं तस्मादधिका जायते व्यथा

दोषदूष्यादिभेदेन मूत्रस्य ह्रासवर्द्धने
तथा वर्णविभेदश्च जायते मेहिनः सदा

वातिकस्य लक्षणम्
वातजे लसिकामेहे चाम्लगन्धि सशोणितम्
आमिक्षाजलवन्मूत्रं मुहुर्मूत्रयते नरः

विश्लिष्टाः सन्धयस्तस्मिन् मलं सम्यङ् न निःसरेत्

पैत्तिकमाह
घनं सपूयं मूत्रञ्च पैत्तिकेऽधिकपूतिमत्
जायते चास्य वैरस्यं सन्तापः करपादयोः

श्लैष्मिकमाह
श्लैष्मिके लसिकामेहे मूत्रं शुक्लं तथाविलम्
तथा पर्युषिते तस्मिन्नुपर्यच्छमधो घनम्
क्षुन्नाशो वङ्क्षणकटिव्यथा सम्यक् प्रजायते

द्वित्रिदोषजमाह
द्वित्रिदोषभवे मेहे मिश्रं लक्षणमीक्ष्यते

साध्यासाध्यम्
सुसाध्योऽसौ भवेद्यूनामल्पकालभवो गदः
नो चेदसाध्यो दुःसाध्यो भवेदेव न संशयः

कदाचित् प्रबलीभूय प्रशाम्येत् पथ्यसेवनात्
ततः पुनर्वर्द्धमानः कालात् कालवशं नयेत्

चिकित्सा
तिन्दु बिल्वं विडङ्गञ्च व्याघ्री धात्री च जाम्बवी
बब्बूलं लोहितञ्चैव खदिरं रक्तचन्दनम्

एषां क्वाथो हरेन्मेहं लसिकाख्यं सुदारुणम्
तथा माञ्जिष्ठमेहादिनानोपद्रवसंयुतम्

सोमनाथरसो हेमनाथो वङ्गेश्वरस्तथा
चन्द्रप्रभाख्यागुटिका तथैव चन्दनासवः

तैलं पल्लवसाराख्यं श्रीगोपालाभिधं तथा
युञ्ज्याद् युक्त्यनुसारेण व्याधौ चास्मिन् प्रयत्नतः

## अथ सोमरोगाधिकारः २८

निदानं लक्षणं च
स्त्रीणामतिप्रसङ्गाद्वा शोकाच्छ्रमविवर्जनात्
आभिचारिकदोषाच्च गरदोषात्तथैव च

आपः सर्वशरीरेभ्यः क्षुभ्यन्ति प्रस्रवन्ति च
तस्मात्ताः प्रच्युताः स्थानान्मूत्रमार्गे व्रजन्ति च

प्रसन्ना विमलाः शीताः ससिता नीरुजः सिताः
स्रवन्ति चातिमात्रन्तु दौर्बल्यं गतिहीनता

शिरसः शिथिलत्वं च मुखतालुविशोषणम्
सोमरोग इति ज्ञेयो देहे सोमक्षयान्नृणाम्

सोऽतिक्रान्तंक्रमेणैव स्रवेन्मूत्रमभीक्ष्णशः
मूत्रातिसारमप्येवं तमाहुर्बलनाशनम्

तेन तृष्णाऽभिभूतोऽसौ जलं पिबति चाधिकम्
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः
भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते सदा

चिकित्सा
कदलीनां फलं पक्वं धात्रीफलरसं मधु
शर्करापयसा पीतमपां धारणमुत्तमम्

कदलीनां फलं पक्वं विदारीञ्च शतावरीम्
क्षीरेण पाययेत् प्रातरपां धारणमुत्तमम्

धात्रीफलस्य रसकं मधुना च पिबेत् सदा
बहुमूत्रक्षयं कुर्य्यात् क्षारेण वासकस्य च

तालकन्दञ्च तरुणं खर्जूरं कदलीफलम्
पयसा पाययेत् प्रातर्मूत्रातीसारनाशनम्

माषचूर्णं समधुकं विदारी शर्करा मधु
पयसा पाययेत् प्रातः सोमरोगविनाशनम्
अहिफेनप्रयोगेण मूत्ररोधो भवेद् ध्रुवम्

कदल्यादिघृतं धात्रीघृतं प्रमेहमिहिरतैलं पल्लवसारतैलं सोमनाथ हेमनाथ
तारकेश्वररसाश्च वसन्तकुसुमाकररसादीनि भेषजानि चात्र प्रयोज्यानि

अथ शातातपोक्तपापजरोगकथनाधिकारः २९
महापापोद्भवा रोगाः
कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा
मूत्रकृच्छ्राश्मरीकासा अतीसारभगन्दरौ

दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम्
इत्येवमादयो रोगा महापापोद्भवाः स्मृताः

उपपापोद्भवा रोगाः
जलोदरयकृत्प्लीहशूलरोगव्रणानि च
श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः
रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः

पापसमुद्भवा रोगाः
दण्डापतानकश्चित्रवपुः कम्पविचर्च्चिकाः
वल्मीक पुण्डरीकाद्या रोगाः पापसमुद्भवाः

अतिपापोद्भवा रोगाः

अर्श आद्या नृणां रोगाः अतिपापाद्भवन्ति हि

रोगाणां पापोद्भवत्व निर्देशः
न पापेन विना दुःखं व्याधयो दुःखदा यतः
अतो रोगा हि निखिला पापादेव भवन्ति हि

## अथ ध्वजभङ्गाधिकारः ३०

क्लीबस्य लक्षणं भेदाश्च
क्लीबः स्यात्सुरताशक्तस्तद्भावः क्लैब्यमुच्यते
तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते

मानसमाह
तैस्तैर्भावैरहृद्यैश्च रिरंसोर्मनसि क्षते
ध्वजः पतत्यतो नृणां क्लैब्यं समुपजायते
द्वेष्यस्त्रीसम्प्रङ्गाच्च क्लैब्यं तन्मानसं स्मृतम्

दोषजमाह
कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः
पित्ताच्छुक्रक्षयो दृष्टः क्लैब्यं तस्मात्प्रजायते

शुक्रक्षयजमाह
अतिव्यवायशीली यो न च वाजिक्रियारतः
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम्

मेढ्ररोगजमाह
महता मेढ्ररोगेण चतुर्थी क्लीबता भवेत्

शिराच्छेदजमाह
वीर्य्यवाहिच्छिराच्छेदान्मेहनानुन्नतिर्भवेत्

शुक्रस्तम्भनिमित्तकमाह
बलिनः ज्ञुब्धमनसो निरोधाद्धि बलस्य च
षष्ठं क्लैब्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तकम्

सहजमाह
जन्मप्रमृति यत्क्लैब्यं सहजं तद्धि सप्तमम्
ग्रसाध्यं सहजं क्लैब्यं मर्मच्छैदाच्च यद् भवेत्

स्त्रीनपुंसकलज्ञणम्
स्त्रीणामपि भवेत् क्लैब्यं रेतः ज्ञरणरोधकम्
क्लीबास्तृप्तिं न गच्छन्ति नार्य्यः पुंसङ्गमेन च

ग्रन्थान्तरे क्लैव्य निदानम्
बीजध्वजोपघाताभ्यां जरया शुक्रसंज्ञयात्
क्लैब्यं सम्पद्यते तस्य शृणु सामान्यलज्ञणम्

संकल्पप्रवणो नित्यं प्रियां वश्यामपि स्त्रियम्
न याति लिङ्गशैथिल्यात् कदाचिद् याति वा यदि

श्वासार्त्तः स्विन्नगात्रश्च मोघसंकल्पचेष्टितः
म्लानशिश्नश्च निर्वीर्य्यः स्यादेतत् क्लैब्यलज्ञणम्

शोकचिन्ताभयत्रासात् स्त्रीणां चातिनिषेवणात्
वातादीनां च वैषम्यात् क्लैब्यं समुपजायते

चतुष्पादाभिगमनात् शेफसश्चाभिघाततः
रेतसश्च प्रतीघाताद् ध्वजभङ्गः प्रवर्त्तते

क्लैब्यचिकित्सा
क्लैब्यानामिह साध्यानां कार्य्यो हेतुविपर्ययः
मुख्यं चिकित्सितं यस्मान्निदानपरिवर्जनम्

हरजभुजगलौहं चाभ्रकं वङ्गचूर्णं कनकविजययष्टी शाल्मली नागवल्ली
घृतमधुसितदुग्धं पुष्पधन्वा रसेन्द्रो रमयति शतरामा दीर्घमायुर्बलञ्च

कनकादिक्वाथेन भावयित्वा घृतादिभिर्योजयेत्
अश्वगन्धाघृतं चैवामृतप्राशघृतं बृहत्

चन्द्रोदयः सिद्धसूतो मकरध्वज एव च
स्वल्पचन्द्रोदयः कामद्रोपकश्चैव कामिनीः

दर्पघ्नः पूर्णचन्द्रः शाल्मलीकल्परसायनम्
कामाग्निदीपनञ्चैव तैलं वै चन्दनादिकम्

ध्वजभङ्गे शुभं च श्रीमदनानन्दमोदकम्
वाजीकरणवृष्योक्तं भेषजञ्च रसायनम्
विशेषेण प्रदातव्यं क्लैब्यदोषप्रशान्तये

## अथ ज्वरातिसाराधिकारः ३१

ज्वरातिसारलक्षणम्
पित्तज्वरे पित्तभवोऽतिसारस्तथाऽतिसारे यदि वा ज्वरः स्यात्
दोषस्य दूष्यस्य समानभावाज्ज्वरातिसारः कथितो भिषग्भिः

अन्यच्च ज्वरातिसारयोरुक्तं निदानं यत् पृथक् पृथक्
भवेत्तन्मेलनाद्रोगो ज्वरातीसारसञ्ज्ञकः

चिकित्सा
ज्वरातिसारयोरुक्तं भेषजं यत् पृथक् पृथक्
न तन्मिलितयोः कार्य्यमन्योन्यं वर्द्धयेद्यतः

प्रायो ज्वरहरं भेदि स्तम्भनं त्वतिसारनुत्
अतोऽन्योन्यविरुद्धत्वाद् वर्द्धनं तत् परस्परम्

अन्यच्च
अनुलोमनं ज्वरघ्नं ग्राहकमतिसारहृद् भवति
पृथगुक्तमौषधं तज्ज्वरातिसारे विरुद्धमन्योऽन्यम्

ततस्तौ प्रतिकुर्वीत विशेषोक्तचिकित्सितैः
ज्वरातिसारिणामादौ कुर्याल्लङ्घन पाचने

प्रायस्तावामसम्बन्धं विना न भवतो यतः
ज्वरातिसारपेयादिक्रमः स्याल्लङ्घिते हितः
ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः

अन्यच्च
अतस्तौ प्रतिकुर्वीत विशेषोक्तचिकित्सितैः
लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः

समुदीर्णदोषनिचयं तत्पाचयेत्तथा शमयेत्
लङ्घनमुभयोरुक्तं मिलिते कार्यं विशेषतस्तदनु
उत्पलषष्ठकसिद्धं लाजामण्डादिकं सकलम्

यथा
पृश्निपर्णीबलाबिल्वधनिकानागरोत्पलैः
ज्वरातिसारयोर्वाऽपि पिबेत्साम्लं शृतं नरः

देयो हितानुपानेन रसो गगनसुन्दरः
अतीसारे ज्वरे चापि शुभा च कनकप्रभा

अथ विविधरोगाधिकारः ३२

वातबलासकज्वर लक्षणम्
नित्यं मन्दज्वरो रूक्षः शूनकस्तेन सीदति
स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी

प्रलेपकज्वरलक्षणम्
प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण वा
मन्दज्वरविलेपी च सशीतः स्यात् प्रलेपकः

अर्द्धाङ्गज्वरस्य लक्षणम्
विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते
तेनार्द्धं शीतलं देहे चार्द्धञ्चोष्णं प्रजायते

रसगतज्वरस्य लक्षणम्
गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ
रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते

रक्तगतज्वरस्य लक्षणम्
रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ
प्रलापः पिडिका तृष्णा रक्तप्राप्ते ज्वरे नृणाम्

मांसगतस्य ज्वरस्य लक्षणम्
पिण्डिकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता
उष्मान्तर्दाहविक्षेपो ग्लानिः स्यान्मांसगे ज्वरे

मेदोगतज्वरस्य लक्षणम्
भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता

अस्थिगतज्वरस्य लक्षणम्
भेदोऽस्थ्ना कूजनं श्वासो विरेकश्छर्दि रेव च
विक्षेपणञ्च गात्राणामेतदस्थिगते ज्वरे

मज्जगतज्वरस्य लक्षणम्
तमः प्रवेशनं हिक्का कासः शैत्यं वमिस्तथा
अन्तर्दाहो महाश्वासो मर्म्मभेदश्च मज्जगे

शुक्रगतज्वरस्य लक्षणम्
मरणं प्राप्नुयात् तत्र शुक्रस्थानगते ज्वरे
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः

प्राकृतविकृतज्वरयोर्लक्षणे
वर्षाशरद्वसन्तेषु वाताद्यः प्राकृतः क्रमात्
वैकृतोऽन्य स दुःसाध्यः प्राकृतश्चानिलोद्भवः

वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्
कुर्य्यात् पित्तञ्च शरदि तस्य चानुबलः कफः

तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद् भयम्
कफो वसन्ते तमपि वातपित्तं भवेदनु

अन्तर्वेगबहिर्वेगयोर्ज्वरयोर्लक्षणे
अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः
सन्ध्यस्थिशूलमस्वेदो दोषवर्च्चोविनिग्रहः

अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत्
सन्तापो ह्यधिको बाह्यस्तृष्णादीनाञ्च मार्दवम्
बहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च

आमज्वरस्य लक्षणम्
लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकाः
तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता

क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवाञ्ज्वरः
आमज्वरस्य लिङ्गानि न दद्यात्तत्र भेषजम्
भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्

पच्यमानज्वरस्य लक्षणम्

ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम्

निरामज्वरलक्षणम्
क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्दवम्
दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम्

आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः
मध्यं द्वादशरात्रन्तु जीर्णज्वरमतः परम्
बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः

यो द्वादशेभ्यो दिवसेभ्य ऊर्ध्वं दोषत्रयेभ्यो द्विगुणेभ्य ऊर्ध्वम्
नृणां तनौ तिष्ठति मन्दवेगो भिषग्भिरुक्तो ज्वर एष जीर्णः

यः स्यादनियतात्कालाच्छीतोष्मभ्यां तथैव च
वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः

ज्वरस्योपद्रवाः
श्वासो मूर्च्छाऽरुचिश्छर्दिस्तृष्णाऽतीसारविड्ग्रहाः
हिक्काकासाङ्गदाहाश्च ज्वरस्योपद्रवा दश

ज्वरमुक्तेःपूर्वरूपम्
दाहः स्वेदो भ्रमस्तृष्णा कम्पविड्भेदसंज्ञिताः
कूजनं गात्रवैगन्ध्यमाकृतिज्वरमोक्षणे

त्रिदोषजे ज्वरे ह्येतदन्तर्वेगे च धातुगे
लक्षणं मोक्षकाले स्यादन्यस्मिन् स्वेददर्शनम्

अभिन्यासज्वरस्य लक्षणम्
दोषास्तीव्रतरा भवन्ति बलिनः सर्वेऽपि यत्र ज्वरे
मोहोऽतीव विचेष्टता विकलता श्वासो भृशं मूकता

दाहश्चिक्कणमाननञ्च दहनो मन्दो बलस्य क्षयः
सोऽभिन्यास इति प्रकीर्त्तित इह प्राज्ञैर्भिषग्भिः पुरा

तथा च
त्रयः प्रकुपिता दोषा उरःस्रोतोऽनुगामिनः
आंमातिवृद्ध्या ग्रथिता बुद्धीन्द्रियमनोगताः

जनयन्ति महाघोरमभिन्यासं ज्वरं दृढम्
श्रुतौ नेत्रे प्रसुप्तिः स्यान्न चेष्टां काञ्चिदीहते

न च दृष्टिर्भवेत्तस्य समर्था रूपदर्शने
न घ्राणं न च संस्पर्शं शब्दं वा नैव बुध्यते

शिरो लोठयतेऽभीक्ष्णमाहारं नाभिनन्दति
कूजति तुद्यते चैव परिवर्त्तनमीहते

अल्पं प्रभाषते किञ्चिदभिन्यासः स उच्यते
प्रत्याख्यातः स भूयिष्ठः कश्चिदेवात्र सिध्यति

जलसंत्रासरोगमाह
बुद्धिस्थानं यदा श्लेष्मा केवलः प्रतिपद्यते
तदा बुद्धौ निरुद्धायां श्लेष्मणाधिष्ठितो नरः

जाग्रत्सुप्तोऽथवात्मानं मज्जन्तमिव मन्यते
सलिलात्त्रस्यति तदा जलत्रासं तु तं विदुः

श्लेष्मघ्नं तत्र कर्तव्यं शोधनं शमनादिकम्
आहारस्य विधानेन यावत्स प्रकृतिं व्रजेत्

अण्डह्रासरोगमाह
स्वनिदानैः प्रकुपितो वायुर्विगुणतां गतः

अण्डकोषवहां नाडीं प्राप्योर्ध्वं प्रतिकर्षति

समेहनौ तदाऽदृश्यौ भवतो वृषणौ किल
अण्डह्रास इति प्रोक्तो रोगोऽय भृशदारुणः

नाभिभ्रंशरोगमाह
नाभिस्थाने शिराग्रन्थिर्यश्च स्फुरति सर्वदा
तिर्यगूर्ध्वमधश्चेत्स विचलेद्वायुना सदा

तदा स्युर्वातजा रोगा वान्तिरूर्ध्वगते भवेत्
अधोगते त्वतीसारो मन्दाग्नित्वं ज्वरस्तथा

तिर्यग्गतेऽग्निमान्द्यं च वातजाश्चापरे गदाः
पिडिकोद्वेष्टनं चैव भृशं स्यात्कटिवेदना

शुक्रदोषमाह
वातपित्तश्लेष्मशोणितकुणपगन्ध्यनल्पग्रन्थिपूतिपूयक्षीणरेतसः प्रजोत्पादने न समर्था भवन्ति तत्र वातवर्णवेदनंवातेनै पित्तवर्णवेदनं पित्तेनै श्लेष्मवर्ण-वेदनंश्लेष्मणौ शोणितवर्णपित्तवेदनं रक्तेनै कुणपगन्ध्यनल्पं च रक्तेनै ग्र-न्थिभूतं श्लेष्मवाताभ्यौं पूयपूतिनिभं श्लेष्मपित्ताभ्यौंक्षीणं शुक्रं प्रागुक्तं पि-त्तमारुताभ्यौं पूयमूत्रपूरीषगन्धिसर्ववर्णवेदनं सन्निपातेनेति
तेषु कुणपगन्धिग्रन्थिपूतिक्षीणरेतसः कृच्छ्रसाध्याः
मूत्रपूरीषगन्धिरेतसस्त्वसाध्यौः साध्यमन्यच्चेति

आर्त्तवदोषमाह
आर्त्तबमपि त्रिभिर्दोषैः शोणितचतुर्थैः पृथग्द्वन्द्वैः समस्तैश्चोपसृष्टमबीजं भवति तदपि दोषवर्णवेदनादिभिर्विज्ञेयम्
तेषु कुणपग्रन्थिपूतिपूयक्षीणमूत्रपुरीषप्रकाशमसाध्यं साध्यमन्यद् भवति

स्नायुकरोगमाह
शाखासु कुपिता दोषाः शोथं कृत्वा विसर्पवत्

भिन्दन्ति तत्क्षते तत्र सोष्ममांसं विशोष्य च

कुर्युस्तन्तुनिभं जीवं वृत्तं सितद्युतिं बहिः
शनैः शनैः क्षताद् याति छेदात्कोपमुपैति च

तत्पाताच्छोफशान्तिः स्यात्पुनः स्थानान्तरे भवेत्
स स्नायुक इति ख्यातः क्रियोक्ता तु विसर्पवत्

बाह्वोर्यदि प्रमादेन जङ्घयोस्त्रुटयते क्वचित्
सङ्कोचं खञ्जतां चैव छिन्नस्तन्तुः करोत्यसौ

रक्ताक्षोरक्तकान्तिः समधिकदहनः सर्वजः सर्वलिङ्गो
रोगोऽसावष्टधेत्थं मुनिभिरभिहितः स्नायुकस्तन्तुकीटः

वातेन श्यावरूक्षः सरुगथ दहनान्नीलपीतः सदाहो
यः श्वेतः श्लेष्मणा स्यात्पृथुगरिमयुतो दोषयुग्माद् द्विलिङ्गः

फिरङ्गरोगमाह
फिरङ्गसंज्ञके देशे बाहुल्येनैव यद् भवेत्
तस्मात्फिरङ्ग इत्युक्तो व्याधिर्व्याधिविशारदैः

निदानम्
गन्धरोगः फिरङ्गोऽय जायते देहिनां ध्रुवम्
फिरङ्गिणोऽङ्गसंसर्गात्फिरङ्गिण्याः प्रसङ्गतः

व्याधिरागन्तुजो ह्येष दोषाणामत्र संक्रमः
भवेत्तल्लक्षयेत्तेषां लक्षणैर्भिषजांवरः

फिरङ्गस्त्रिविधो ज्ञेयो वाह्यश्चाभ्यन्तरोऽपरः
वहिरन्तर्भवश्चापि तेषां लिङ्गानि च ब्रुवे

तत्र बाह्यः फिरङ्गः स्याद्विस्फोट सदृशोऽल्परुक्
स्फुटितो व्रणवद् वैद्यैः सुखसाध्योऽपि वा स्मृतः

सन्धिष्वाभ्यन्तरः सः स्यादामाघातोपमत्यथः
शोथं च जनयेदेव कष्टसाध्यो बुधैः स्मृतः

उपद्रवानाह
कार्श्यं बलक्षयो नासाभङ्गो वह्नेश्च मन्दता
अस्थिशोषोऽस्थिवक्रत्वं फिरङ्गोपद्रवा अमी

साध्यासाध्यत्वमाह
बहिर्भवो भवेत्साध्यो नवीनो निरुपद्रवः
आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः

बहिरन्तर्भवो जीर्णः क्षीणस्योपद्रवैर्युतः
व्याप्तो व्याधिरसाध्योऽयमित्याहुर्भिषजः पुरा

फिरङ्गचिकित्सा
फिरङ्गसंज्ञकं रोगं रसः कर्पूरसंज्ञकः
अवश्यं नाशयेदेतदूचुः पूर्वचिकित्सकाः

लिख्यते रसकर्पूरप्राशने विधिरुत्तमः
अनेन विधिना खादेन्मुखे शोथं न विन्दति

गोधूमचूर्णं सन्नीय विदध्यात्सूक्ष्मकूपिकाम्
तन्मध्ये निक्षिपेत्सूतं चतुर्गुञ्जामितं भिषक्

ततस्तु गुटिकां कुर्यात् यथा न दृश्यते बहिः
सूक्ष्मचूर्णैर्लवङ्गस्य तां वटीमवधूलयेत्

दन्तस्पर्शो यथा न स्यात्तथा तामम्भसा गिलेत्

ताम्बूलं भक्षयेत्पश्चाच्छाकाम्ललवणांस्त्यजेत्
श्रममातपमध्वानं विशेषात् स्त्रीनिषेवणम्

पारदरोगनिदानम्
शुद्धो रसोऽमृतं साक्षादशुद्धस्तु स्मृतो विषम्
अयुक्तियुक्तो रोगाय युक्तियुक्तो रसायनः

विधिवत्सेव्यमानोऽय निहन्ति सकलामयान्
तस्य मिथ्योपचारेण भवन्त्येते महागदाः

पीनसो नासिकाभङ्गो दन्तपातः शिरोव्यथा
भगन्दरो विसर्पश्च नेत्ररोगो मुखामयः

कोठः कण्डूस्त्वचावर्णहानिर्नासादिषु क्षतम्
कुष्ठोपदंशचिह्नानि गात्रेषु विविधानि हि

ग्रन्थिवच्छोथकाठिन्यं सरुजं फलकोषयोः
पक्षाघातो ग्रन्थिवातः प्रदाहोऽस्थ्नाञ्च दारुणः

जाड्यं मनोविकारश्च सर्वे कृच्छ्रतमा गदाः
भवन्ति तत्र कर्तव्यं यथायुक्तञ्च भेषजम्

शीतलानिदानम्
देव्या शीतलयाक्रान्ता मसूर्यः शीतला बहिः
ज्वरयेयुर्यथा भूताधिष्ठितो विषमज्वरः

ताश्च सप्तविधाः ख्यातास्तासां भेदान् प्रचक्ष्महे
ज्वरपूर्वा बृहत्स्फोटैः शीतला बृहती भवेत्

बृहतीशीतलालक्षणम्
सप्ताहान्निस्सरत्येव सप्ताहात्पूर्णतां व्रजेत्

ततस्तृतीयसप्ताहे शुष्यति स्खलति स्वयम्

कोद्रवालक्षणम्
वातश्लेष्मसमुद्भूता कोद्रवा कोद्रवाकृतिः
कश्चित्तां प्राह पक्वेति सा तु पाकं न गच्छति

जलशूकवदङ्गानि सा विध्यति विशेषतः
सप्ताहाद्वा दशाहाद्वा शान्तिं याति विनौषधम्

पाणिसहालक्षणम्
ऊष्मणा सूक्ष्मजारूपा सकण्डूः स्पर्शनप्रिया
नाम्ना पाणिसहा ख्याता सप्ताहाच्छुष्यति स्वयम्

सर्षपिकालक्षणम्
चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी
नाम्ना सर्षपिका ज्ञेयाऽभ्यङ्गमत्र विवर्जयेत्

राजिकालक्षणम्
किञ्चिदूष्मनिमित्तेन जायते राजिकाकृतिः
एषा भवति बालानां सुखं च शुष्यति स्वयम्

मसूरिकालक्षणम्
कोठवज्जायते षष्ठी लोहितोन्नतमण्डला
ज्वरपूर्वा व्यथायुक्ता ज्वरस्तिष्ठेद्दिनत्रयम्
स्फोटानां मेलनादेषा बहुस्फोटाऽपि दृश्यते

द्वितीय मसूरिकालक्षणम्
एकस्फोटा च कृष्णा च बोद्धव्या चर्मजाभिधा

शीतलायाः शमनोपायः
शीतलासु क्रियाकार्या शीतला रक्षया सह

बध्नीयान्निम्बपत्राणि परितो भवनान्तरे

कदाचिदपि नो कार्यमस्पृश्यस्य प्रवेशनम्
स्फोटेष्वधिकदाहेषु रक्षा रेणूत्करो हितः

चन्दनं वासको मुस्तं गुडूची द्राक्षया सह
एषां शीतकषायस्तु शीतलाज्वरनाशनः

जपहोमोपहारश्च दानस्वस्त्ययनार्चनैः
विप्रगोशम्भुगौरीणां पूजनैस्ताः शमं नयेत्

स्तोत्रं च शीतलादेव्याः पठेच्छीतलिनोऽन्तिके
ब्राह्मणः श्रद्धया युक्तस्तेन शाम्यन्ति शीतलाः

ग्रन्थान्तरात् अथोष्णवातलक्षणम्
व्यायामाध्वातपैः पित्तं बस्तिं प्राप्यानिलावृतम्
बस्तिं मेढ्रं गुदञ्चैव प्रदहेत् स्रावयेदधः

मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा
कृच्छ्रात्पुनः पुनर्जन्तोरुष्णवातं वदन्ति तम्

चिकित्सा
शृतशीतपयोऽन्नाशी चन्दनं तण्डुलाम्बुना
पिबेत्सशर्करं श्रेष्ठमुष्णवाते सशोणिते

ब्रध्नस्य निदानं लक्षणञ्च
अत्यभिष्यन्दिगुर्वन्नशुष्कपूत्यामिषाशनात्
करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु
ज्वरशूलाङ्गसादाढ्यं तं ब्रध्नेति विनिर्दिशेत्

चिकित्सा

भृष्टश्चैरण्डतैलेन सम्यक्कल्कोऽभयाभवः
कृष्णासैन्धवसंयुक्तो ब्रध्नरोगहरः परः

अजाजी हपुषा कुष्ठं गोमेदं बदरान्वितम्
काञ्जिकेन तु संपिष्टं तल्लेपो ब्रध्नजित्परः

कालज्वरस्य निदानं लक्षणं च
प्रणष्टवह्नेरबलस्य जन्तोर्ज्वरो यदा धातुचयेषु लीनः
प्लीहोदरार्त्तिं कुरुते सशोथं तया स कालज्वरसंज्ञितः स्यात्

सुदुःसहं प्राप्य विकारमेनं दिने दिने कार्श्यमुपैति मर्त्यः
कृष्णच्छविस्तस्य च पाण्डुभावो विलूनकेशोऽनियतज्वरेण

कालज्वरेण सुचिरं परिपीडितस्य जायेत चोत्कटतमस्त्वतिसाररोगः
घ्राणाच्च रक्तपतनन्त्वपि दन्तवेष्टादेतावुपद्रवकरौ मुहुरुद्भवेताम्

ग्रन्थिकज्वर प्लेग निदानं लक्षणं च
कफोणि कक्षा गल वङ्क्षणेषु यो ग्रन्थिशोथार्त्तिकरो नराणाम्
ज्वरः प्रजायेत समस्तदोषात् तं ग्रन्थिकाख्यं ज्वरमामनन्ति

ज्वरः सुतीव्रः पुरतो हि भूम्ना पुनश्च कुत्राप्यथवा स मन्दः
सर्वाङ्गरुक् शीतमतिप्रकम्पो मूर्च्छा प्रलापो वमथुः पिपासा

स्वेदो भृशं स्वप्नविघात तन्द्रा खराऽतिजिह्वा शिथिलाङ्गता च
ग्लानिप्रमोहौ श्रुतिनेत्र सुप्तिर्निस्पन्दभावं धमनी च धत्ते

असाध्यलक्षणम्
सोऽय ज्वरो ग्रन्थिकनामधेयो निहत्य शक्तिं सकलेन्द्रियाणाम्
असंशयं हन्त्यतिसार जुष्टं विनष्टसंज्ञं रुधिरं वमन्तम्

प्रदुष्टवातोदकभूमिभागे जीवाणवस्ते विष वज्रकल्पाः

उन्दूरदेहं पुरतः प्रविश्य निहन्युराखून् मरणाग्रदूतान्

विषेण तीव्रेण विषरगणदेहाः पानाय नीरस्य विदूरभूमिम्
धावन्ति मूर्च्छन्ति नयन्ति दूरं विषं पिपासाकुल मूषिकास्ते

जीवाणुवाहिनां तस्मान्मूषिकाणां शरीरतः
देहाद् देहान्तरं यान्ति कीटा ग्रन्थिज्वरप्रदाः

मन्थरज्वरः मिधुरज्वरःि पूर्वरूपम्
स्वल्पकासोऽरुचिस्तृष्णा प्रलापो दाहवाञ्ज्वरः
अङ्गानां गौरवं ग्लानिरस्थिभेदो विनिद्रता

रूपम्
ज्वरो दाहो भ्रमो मोहश्चातिसारो वमिस्तृषा
अनिद्रा च मुखं रक्तं तालु जिह्वा च शुष्यति

ग्रीवामध्ये तु दृश्यन्ते स्फोटकाः सर्षपोपमाः
एतच्चिह्नं भवेद्यत्र स मधुरक उच्यते
दण्डकज्वरस्य निदानं लक्षणं च

सन्ध्यस्थिकण्ठे ज्वरितस्य यस्य दण्डाभिघातप्रभवा रुजेव
रुजा प्रजायेत निशादिनेषु ज्वरं तमाहुः किल दण्डकाख्यम्

दिनद्वयं दिनैकं वा विश्रम्यासौ प्रवर्त्तते
सर्व्वदेहचरः शोथः प्लीहा चाप्यत्र जायते

स प्रतिश्याय कासार्त्तो ज्वरी प्रमुच्यते ज्वरात्
अष्टमे दिवसे प्रायो वातश्लेष्मसमुद्भवात्

रसाज्ञानलक्षणम्
भुञ्जानस्य नरस्यान्नं मधुरप्रभृतीन् रसान्

रसना यन्न जानाति रसाज्ञानं तदुच्यते

पाचकपित्तस्य वैगुरयमस्य व्याधेर्निदानमित्येके भाषन्ते
सङ्क्रामकतरुणशोथविशेषः बिरी बेरी

निदानम्
वातश्लेष्मकरैर्भोज्यैः क्लिन्न शुष्कान्नभोजनैः
संयोगाद् विषतुल्यानां स्नेहानां च निषेवणैः

निःसारतराडुलाहारैः प्राग्वातैर्हिमशीकरैः
आर्द्रभूमौ चिरं वासाज्जनाकीर्ण स्थलेषु च

क्षीणशोणितमांसाग्नेर्दौर्बल्यं हृदि जायते
यकृत्प्लीह्नोर्विकारश्च क्रमतः परिवर्द्धते

प्रजायते ततः शोथो रोगः सङ्क्रामको नवः
तस्य लक्षणमप्यग्रे समासेनाभिधीयते

पूर्वरूपम्
अल्पत्वादस्य रोगस्य प्राग्रूपं न च लक्ष्यते
दृश्यते केवलं तत्र वह्निसादो विवर्णता

लक्षणम्
जङ्घास्थिनि यदा शोथो जायते हृत्प्रवेपते
तदा तन्तु विजानीयाच्छोथं सङ्क्रामकं नवम्

स्नायूनां मांसपेशीनां क्रिया सम्यङ् न वर्तते
जङ्घायां प्रथमं भूत्वा शोथः सर्वतनौ व्रजेत्

विड्भेदः श्वासकृच्छ्रत्वमथवा विड्विबद्धता
स्वल्पत्वमस्य जायेत मूत्रस्य रुधिरस्य च

वेदना सर्वगात्रेषु जानुयुग्मे च दुःसहा
नानाप्रकारं जानीयादिमं व्याधिं विचक्षणः

वातरोगेण तुल्यानि वीक्ष्य लिङ्गानि कानिचित्
वातरोगमिमं केचिन्मन्यन्ते भ्रान्तिहेतुतः

तीव्रज्वरविशेषोऽय न चासौनूतनामयः
इत्यादीनि प्रभाषन्ते केचिदन्ये भिषग्विदः

नवाविर्भूतरोगोऽय शोथः सङ्क्रामको नवः
स वङ्गान् भूयसा हन्ति स्वच्छतण्डुलभोजिनः

गोधूमरोटिकाहाराः पञ्चनदादिवासिनः
सङ्क्रामकमिमं शोथं लभन्ते प्रायशो नहि

वाराणस्यादिदेशेषु रोगस्यास्य प्रकोपतः
प्रजानान्तु सहस्राणि तूर्णं मृत्युमुखं ययुः

असाध्यलक्षणम्
सव्यथं हृदयं यस्य क्षीणस्य स्पन्दते द्रुतम्
रक्तपूर्णं शिराकोष्ठं स शीघ्रं विजहात्यसून्

अनेन शोथेन निपीड्यमानः कष्टातिकष्टं शिरसो विकारम्
आन्ध्यं सुदुःखं त्वथवाऽभ्युपैति घोरांस्तथाऽन्यान् नयनामयांश्च

मृत्योर्भयं वितनुते जनमण्डलेषु प्रध्वंसने जनपदं प्रतिकूलदैवात्
शोथो ह्ययं बहुरुजस्तरुणः कदाचिद् हृद्रोगरक्तवमनैः सहसाऽतिदुःखैः

कफाश्रितवायोर्लक्षणम्
प्राक्सञ्चितं यस्य बलासजालमन्वेति भूयः प्रबलः समीरः
तेनावृतस्तं प्रविधाय शुष्कं कुर्यात् प्रवृद्धोऽथ विकारवृन्दम्

त्वक्स्फोटनं पाणिपदीक्षणानां दाहोऽतिशोषो वदनस्य तोदः
हृत्कम्पदौर्बल्यमतिश्रमत्वं भ्रान्तिर्मृषोद्भावनजल्पनं च

वैस्वर्यमालस्यमथाविपाको ह्युदासचिन्ताऽरुचिगात्रभङ्गाः
निद्राक्षयो मूत्रपुरीषबन्धस्तमः प्रवेशो गमनेष्वशक्तिः
श्लेष्मान्वितोऽय कथितः समीरः

अथ नेत्रादिपरीक्षाऽधिकारः ३३

नेत्रं स्यात्पवनाद्रूक्षं धूम्रवर्णं तथाऽरुणम्
कोटरान्तःप्रविष्टं च तथा स्तब्धविलोकनम्

हरिद्राखण्डवर्णं वा रक्तं वा हरितं तथा
दीपद्वेषि सदाहञ्च नेत्रं स्यात्पित्तकोपतः

चक्षुर्बलासबाहुल्यात्स्निग्धं स्यात्सलिलप्लुतम्
तथा धवलवर्णञ्च ज्योतिहीनं बलान्वितम्

नेत्रं द्विदोषबाहुल्यात्स्याद् दोषद्वयलक्षणम्
त्रिदोषलिङ्गसङ्घेन तं मारयति रोगिणम्

त्रिदोषदूषितं नेत्रमन्तर्मग्नं भृशं भवेत्
त्रिलिङ्गं सलिलस्रावि प्रान्तेनोन्मीलयत्यपि

जिह्वापरीक्षा

शाकपत्रप्रभा रूक्षा स्फुटना रसनाऽनिलात्
रक्ता श्यावा भवेत्पित्ताल्लिप्ताऽद्रा धवला कफात्

परिदग्धा खरस्पर्शा कृष्णा दोषत्रयेऽधिके
सैव दोषद्वयाधिक्ये दोषद्वितयलक्षणा

मूत्रपरीक्षा

वातेन पाराडुरं मूत्रं रक्तं नीलञ्च पित्ततः
रक्तमेव भवेद्रक्ताद्धवलं फेनिलं कफात्

पुरीषपरीक्षा
वातान्मले तु दृढता शुष्कता चापि जायते
पीतता जायते पित्ताच्छुक्लता श्लेष्मतो भवेत्
सन्निपाते च सर्वाणि लक्षणानि भवन्ति हि

विशेषतः
त्रुटितं फेनिलं रूक्षं धूमलं वातकोपतः
वातश्लेष्मविकारेण जायते कपिशं मलम्

बद्धं सुत्रुटितं पीतं श्यामं पित्तानिलाद् भवेत्
पीतश्वेतं श्लेष्मपित्तादीषत् सान्द्रं च पिच्छिलम्

श्यामत्रुटित पीताभं बद्धश्वेतं त्रिदोषतः
दुर्गन्धः शीतलश्चैव विष्ठोत्सर्गो यदा भवेत्

तदा जीर्णं मलं वैद्यैर्दोषज्ञैः परिभाष्यते
कपिलं गुटिकायुक्तं यदि वर्चोऽवलोक्यते

प्रक्षीणमलदोषेण दूषितः परिकथ्यते
वातस्य च मलं कृष्णं ततः पित्तस्य पीतविट्

रक्तवर्णं मलं किञ्चिन्मलं श्वेतं कफोद्भवम्
आमं वा श्लेष्मजं प्राहुर्मिश्रितं द्वन्द्वजं भवेत्

अपक्वं स्यादजीर्णे तु पक्वं स्वच्छं मलं भवेत्
अत्यग्नौ पिरिडतं शुष्कं मन्दाग्नौ तु द्रवीकृतम्
दुर्गन्धं चन्द्रिकायुक्तमसाध्यं मललक्षणम्
इति प्रथमं परिशिष्टम्

# द्वितीयं परिशिष्टम्
## अथ सपरिशिष्टशार्ङ्गधरसंहितोक्तरोगाणां पथ्यापथ्यविवेचना

### १ ज्वरे पथ्यापथ्यम्

रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः

मुद्गान् मसूरांश्चणकान् कुलत्थान् समकुष्ठकान्
यूषार्थे यूषसात्म्यानां ज्वरितानां प्रदापयेत्

पटोलपत्रं वार्त्ताकुं कुलकं कारवेल्लकम्
कर्कोटकं पर्पटकं गोजिह्वां बालमूलकम्

पत्रं गुडूच्याः शाकार्थं ज्वरितानां ज्वरापहम्
मांसार्थमेणलावादीन् युक्त्या दद्याद्विचक्षणः

कुक्कुटांश्च मयूरांश्च तित्तिरिक्रौञ्चवर्त्तकान्
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः

लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत्
भिषङ्मात्राविकल्पज्ञो दद्यात् तानपि कालवित्

द्राक्षादाडिमखर्जूरप्रियालैः सपरूषकैः
तर्पणार्हस्य दातव्यं तर्पणं ज्वरनाशनम्

कृशोऽल्पदोषो यः क्षीणकफो जीर्णज्वरान्वितः
विबन्धासृष्टदोषश्च रूक्षः पित्तानिलज्वरी

पिपासार्त्तः सदाहश्च पयसा स सुखी भवेत्
जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम्

तदेव तरुणे पीतं विषवद्धन्ति मानवम्
व्यायामञ्च व्यवायञ्च स्नानं चङ्क्रमणन्तथा

ज्वरमुक्तो न सेवेत यावन्नो बलवान् भवेत्
जन्तोर्ज्वरविमुक्तस्य स्नानं कुर्यात् पुनर्ज्वरम्

तस्माज्ज्वरविमुक्तोऽपि स्नानं विषमिव त्यजेत्
बलवर्णाग्निवपुषां यावन्न प्रकृतिर्भवेत्
तावज्ज्वरेण मुक्तोऽपि वर्जनीयानि वर्जयेत्

२ अतीसारे पथ्यापथ्यम्
अतीसारेऽपि पथ्यादि ज्ञेयं सर्वमजीर्णवत्
स्नानावगाहावभ्यङ्गं गुरुस्निन्धद्रवाशनम्
व्यायाममग्निसन्तापमतीसारी विवर्जयेत्

३ ग्रहणीरोगे पथ्यापथ्यम्
सुजरं दीपनं वह्नेरन्नं पानञ्च नित्यशः
सेवेत मतिमानत्र विपरीतं विवर्जयेत्

शालि प्रत्नं मसूरञ्च यवं मांसरसन्तथा
मद्गुरञ्च तथा शृङ्गीं तक्रं बिल्वञ्च दाडिमम्

शृङ्गाटकं छागदुग्धं वार्ताकुञ्च कशेरुकम्
ग्रहणीगदवान् नित्यं भुञ्जीतैवंविधानि च

दिवास्वप्नं सुरां तीक्ष्णां रात्रौ जागरणन्तथा
गुरु चान्नमभिष्यन्दि यत्नतः परिवर्जयेत्

४ अजीर्णाग्निमान्द्ययोः पथ्यापथ्यम्
दुर्जरं सन्त्यजेत् सर्वं निशायामशनन्तथा
अजीर्णी मन्दवह्निश्च भक्षयेत् सुजरं लघु

५ अर्शोरोगे पथ्यापथ्यम्
वातानुलोमनं यद् यत् सरं वह्निप्रदीपनम्
सुजरं पुष्टिदं तत् तदन्नपानं हितं मतम्

वेगावरोधं स्त्रीपृष्ठयानमुत्कटमासनम्
यथास्वं दोषलञ्चान्नमर्शसः परिवर्जयेत्

६ क्रिमिरोगे पथ्यापथ्यम्
प्रत्यहं कटुकं तिक्तं भोजनं कफनाशनम्
क्रिमीणां नाशनं रुच्यमग्निसन्दीपनं परम्

क्षीराणि मांसानि घृतानि चापि दधीनि शाकानि च पर्णवन्ति
अम्लञ्च मिष्टञ्च रसं विशेषात् क्रिमीञ्जिघांसुः परिवर्जयेद्धि

७ कामला हलीमक पाण्डुरोगेषु पथ्यापथ्यम्
पुराणयवगोधूमशालयश्च पुनर्नवा
मुद्गाढकी मसूराणां यूषो जाङ्गलजो रसः

पटोलं वृद्धकूष्माण्डं तरुणं कदलीफलम्
मत्स्येषु मद्गुरः शृङ्गी तक्रं धात्र्यभया घृतम्

रसोनः पक्वमाम्रञ्च वार्त्ताकुरमृता निशा
इत्याद्यानि गदे पाण्डौ हितान्युक्तानि पण्डितैः

धूमपानं वेगरोधः स्वेदनं मैथुनं सुरा
दिवास्वप्नो मृदशनं रामठं माषसर्षपौ

तीक्ष्णाम्ललवणाध्याशगुर्वन्नानि जलं बहु
पत्रशाकानि शिम्बी च गदे पाण्डौ न शर्मणे

८ रक्तपित्ते पथ्यापथ्यम्

पुराणाः शालिगोधूमयवा मुद्गमसूरकौ
चणकस्तुवरी वृद्धकूष्माण्डं कदलीफलम्

पटोलमपि वेत्राग्रं फलं पनसतालयोः
बिल्वदाडिमखर्जूरं धात्री द्राक्षा उदुम्बरम्

परूषं नारिकेलञ्च कपित्थञ्च कशेरुकम्
गव्यं माहिषमाजं वा सर्पिश्छागं पयस्तथा

शशैणहरितच्छागा बकपारावतादयः
एक्षवं शीतसलिलं चन्दनं चन्द्ररश्मयः

मनोऽनुकूलमाख्यानं श्रुतिरम्यञ्च कीर्तनम्
पीनोन्नतस्तनश्रोणिरम्याणां सुखवेश्मनाम्

रूपयौवनमत्तानामाश्लेषा रमणं विना
एवंविधानि सर्वाणि हितानि रक्तपित्तिनाम्

तीक्ष्णं विदाहि विष्टम्भि पानान्नं कौपमम्बु च
ताम्बूलं दधि वार्ताकुर्मत्स्यो माषश्च सर्षपः

रसोनक्षारनिष्पावकुलत्थाश्च गुडः सुरा
हस्त्यश्वयानं व्यायामः क्रोधः स्वप्नविपर्ययः

व्यायामोऽध्वाटनं पाठः सन्तापो वह्निभास्वतोः
रक्तस्रावो धूमपानं लोभश्चपलता तथा

एवंविधानि सर्वाणि वर्जनीयानि नित्यशः
निदानं रक्तपित्तस्य यत्किञ्चित् सम्प्रकाशितम्
जीवनारोग्यकामैस्तन्न सेव्यं रक्तपित्तिभिः

९ कासरोगे पथ्यापथ्यम्
शालिषष्टिकगोधूम श्यामाकयवकोद्रवाः
माषमुद्गकुलत्थानां रसः सर्पिः पुरातनम्

वास्तूकं वायसीशाकं वार्त्ताकुर्बालमूलकम्
छागं दुग्धं घृतं छागं सुखोष्णसलिलं मधु

धन्वानूपभवानाञ्च मांसं मांसाशिनान्तथा
द्राक्षादाडिमखर्जूरफलान्यत्र हितानि च

वस्तिर्नस्यमसृङ्मोक्षो व्यायामो दन्तघर्षणम्
आतपो दुष्टपवनो रजोमार्गनिषेवणम्

विष्टम्भीनि विदाहीनि रूक्षाणि विविधानि च
शकृन्मूत्रोद्गारकासवमिवेगविधारणम्

मत्स्यः कन्दः सर्षपश्च दुष्टाम्भस्तुम्बुपोदिका
रात्रौ जागरणं ग्राम्यधर्म्मः कासेऽहितानि च

१० यक्ष्मणि पथ्यापथ्यम्
गोधूमश्चणको मुद्गो रक्तशालि पुरातनः

छागं मांसं पयश्छागं छागं सर्पिश्च शर्करा
मत्स्यण्डिका च मदिरा कस्तूरी सितचन्दनम्

हर्म्यं स्त्रजः स्मरकथा युवतीनाञ्च दर्शनम्
मणिमुक्तादिभूषाणां धारणं पवनो मृदुः

धात्र्याम्रपनसानाञ्च फलानि वकुलं फलम्
गीतं हास्यं चन्द्ररश्मिर्गिरः श्रुतिसुखप्रदाः

एवंभूतानि सर्वाणि शुभान्युक्तानि शोषिणाम्
रूक्षान्नपानं विषममशनञ्च विदाहि यत्

कटुतिक्तकषायाम्लशाकमाषरसोनकाः
शिम्बी मत्स्यश्च ताम्बूलं व्यायामो वेगधारणम्

साहसानि च कर्माणि श्रमः स्वेदनमञ्जनम्
उच्चैः सम्भाषणं मार्गसेवनं निशि जागरः

विशेषतो निधुवनं कर्मौरस्यमथेतरत्
निदानत्वेन गदितं यच्च हेतुचतुष्टयम्

सर्वाण्येतानि नियतं वर्जनीयानि यक्ष्मणि
यत् पथ्यं यदपथ्यं च रक्तपित्ते मयोदितम्

यक्ष्मण्यपि च तत् पथ्यमपथ्यञ्चापि तन्मतम्

शोकं स्त्रियः क्रोधमसूयताञ्च त्यजेदुदारान् विषयान् भजेच्च
तथा द्विजातींस्त्रिदशान् गुरूंश्च वाचश्च पुण्याः शृणुयाद् द्विजेभ्यः

११ हिक्काश्वासे पथ्यापथ्यम्
शालिषष्टिकगोधूमयवाः शस्ताः पुरातनाः
शशोऽहिभुक् तित्तिरश्च दक्षो धन्यमृगः शुकः

सर्पिः पुरातनं छागं दुग्धं मधु सुरा तथा
जीवन्तिका च वास्तूकं रसोनश्च पटोलकम्

द्राक्षा त्रुटिः पौष्करञ्च वार्युष्णं कटुकत्रयम्
हिक्काश्वासेषु जानीयादित्याद्यानि हितानि हि

विदाहि गुरुपानान्नं व्यायामाध्वनिषेवणम्

श्वासी हिक्की ग्राम्यधर्मं क्रोधं चिन्ताञ्च सन्त्यजेत्

१२ अरोचके पथ्यम्
रोचनं दीपनं वह्नेर्जिह्वाकण्ठविशोधनम्
पथ्यं शेषमपथ्यम्

१३ छर्दिरोगे पथ्यापथ्यम्
पुराणाः शालयो लाजा गोधूमश्च यवो मधु
शशलावमयूराद्याजाङ्गलाः पशुपक्षिणः

जम्बीरामलकीद्राक्षादाडिमं बीजपूरकम्
नारिकेलञ्च यद्बालं तत्तोयञ्च सिता सुरा

मनोज्ञगन्धसंसेवा चन्दनाद्यनुलेपनम्
शिरः स्नानं सुखास्या च हितानिच्छर्दिरोगिणाम्

यदुग्रमुद्वेगकरं कर्म द्रव्यमथापि वा
त्याज्यं तदखिलं छर्द्यां धीमतारोग्यकाङ्क्षिणा

१४ स्वरभेदे पथ्यापथ्यम्
बलपुष्टिप्रदं हृद्यं कफघ्नं स्वरशुद्धिकृत्
अन्नं पानञ्च निखिलं स्वरभेदे हितं मतम्

नात्राभिष्यन्दि संसेव्यं न च शीतक्रिया हिता
दिवास्वापो न कर्त्तव्यो न च वेगविधारणम्

१५ तृष्णारोगे पथ्यापथ्यम्
हृद्यं सुमधुरं शीतं सेवेत तृषयाऽदितः
उग्रमुद्वेगजननं त्यजेत् सर्वमतन्द्रितः

१६ मूर्च्छारोगे पथ्यापथ्यम्

यवो लोहितशालिश्च वार्ताकुश्चपटोलकम्
यूषो जाङ्गलमांसस्य रोहिताद्यास्तथा झषाः

धारोष्णं गोपयस्तक्रं स्नानं नद्या जलेऽमले
हितान्येतानि मूर्च्छायां संन्यासाख्ये तथा गदे

तीक्ष्णं द्रव्यं क्रिया तीक्ष्णा वेगानाञ्च विधारणम्
क्रोधशोकादिभिर्भावैरित्येतैर्वर्द्धते गदः

१७ मदात्यये पथ्यापथ्यम्
हिता मदात्यये प्रत्नाः शालिमुद्गयवाः सिता
पयः पटोलं खर्जूरं दाडिमं नारिकेलकम्

द्राक्षाधात्री विचित्रान्नं हृद्यं मद्यं परूषकम्
लावतित्तिरदक्षैणशशच्छागादिजो रसः

शिशिरः पवनो धारागृहं चन्द्रस्य रश्मयः
चन्दनालेपनं स्नानं प्रियालिङ्गनमेव च

ताम्बूलं धूमपानञ्च लवणं स्वेदनाञ्जने
वर्ज्यान्यखिलतीक्ष्णानि व्याधौ मद्यसमुद्भवे

१८ दाहे पथ्यापथ्यम्
शालयः षष्टिका मुद्गा मसूराश्चणका यवाः
धन्वमांसरसा लाजमण्डश्च लाजशक्तवः

शतधौतं घृतं दुग्धं नवनीतं पयोभवम्
सिता कूष्माण्डकं मोचं पनसं स्वादु दाडिमम्

पटोलं पर्पटं द्राक्षा धात्रीफलपरूषके
शिम्बी तुम्बी पयः पेटी खर्जूरं धान्यकं मिसिः

बालतालं प्रियालञ्च शृङ्गाटककशेरुके
मधूकपुष्पं ह्रीबेरं तिक्तानि निखिलानि च

शीताः प्रदेहा भूवेश्म सेकोऽभ्यङ्गोऽवगाहनम्
पद्मोत्पलदलक्षौम शय्याशीतलकाननम्

कथा विचित्रा गीतानि कामिनी परिरम्भणम्
उशीरचन्दनालेपशीताम्भः शिशिरोऽनिलः

सुधांशुरश्मयः स्नानं मणयो मधुरा रसाः
एवं चान्यानि दाहेषु सेव्यानि सुखमीप्सुभिः

विरुद्धान्यन्नपानानि क्रोधो वेगविधारणम्
गजाश्वयानमध्वा च क्षारं पित्तकराणि च

व्यायामश्चातपस्तक्रं ताम्बूलं मधु रामठम्
व्यवायः कटुतिक्तोष्णान्यहितानीति निश्चितम्

१९ उन्मादे पथ्यापथ्यम्

रक्तशालिर्यवो मुद्गो गोधूमः कौर्ममामिषम्
धन्वोद्भवरसो द्राक्षा कपित्थं नारिकेलकम्

वास्तूकञ्च तथा ब्राह्मी कूष्माण्डस्य फलं महत्
पटोलं धारोष्णपयः शतधौतं तथा हविः

पुरातनं नूतनं च सुशीतमनुलेपनम्
हितान्युक्तान्यथोन्मादे विरुद्धमशनं सुरा

उष्णाशनं तीक्ष्णवीर्यं पत्रशाकं कठिल्लकम्
तिक्तानि निखिलान्येव व्यवायो निशि जागरः

निद्रातृष्णाक्षुधादीनां बलाद् वेगविधारणम्
सर्वाणि क्रूरकर्माणि मतानि न शुभाय च

२० अपस्मारे पथ्यापथ्यम्
सर्पिः पुरातनं मुद्गो गोधूमा रक्तशालयः
कूर्मामिषं धन्वरसो दुग्धं ब्राह्मीदलं वचा

पटोलं वृद्धकुष्माण्डं वास्तूकं स्वादु दाडिमम्
शोभाञ्जनं नारिकेलं परूषामलके तथा

एवंविधानि चान्यानि सुखदानि स्मृतिक्षये
चिन्ता शोको भयं क्रोधस्त्वशुचीन्यशनानि च

मद्यं मत्स्यो विरुद्धान्नं तीक्ष्णोष्णगुरुभोजनम्
आयासोऽतिव्यवायश्च पूज्यपूजाव्यतिक्रमः

बिम्ब्याषाढफलं शाकं निद्राक्षुत्तृड्विनिग्रहः
तोयावगाहनं शैलद्रुमाद्यारोहणन्तथा
इत्यादीनि स्मृतिध्वंसे वर्जनीयानि यत्नतः

२१ आमवाते पथ्यापथ्यम्
वास्तूकशाकं सारिष्टं शाकं पौनर्नवं हितम्
पटोलं लशुनञ्चैव वार्ताकुं कारवेल्लकम्

यवान्नं कोरदूषान्नं पुराणं शालिषष्टिकम्
लावकानां तथा मांसं हितं तक्रेण संस्कृतम्

सितं च यूषं कौलत्थं कालायं चणकस्य च
रुच्यं दद्याद्यथासात्म्यमामवातहितञ्च यत्

दधि मत्स्यो गुडः क्षीरं दुष्टनीरमुपोदिका

विरुद्धमशनं पूर्वो वायुवेगस्य रोधनम्

निशायां जागरः शीततोयस्य परिषेवणम्
न हितान्यनिले सामे व्यवायातिशयोपि च

२२ शूलरोगे पथ्यापथ्यम्
पुराणाः शालयः क्षीरमुष्णं जाङ्गलजो रसः
पटोलं कारवेल्लञ्च द्राक्षा पक्वाम्रदाडिमौ

विडं शालिञ्च पत्राणि तप्ताम्भो देवपुष्पकम्
अनुलोमकराण्यत्र सर्वाण्येव हितानि वै

व्यायामं मैथुनं मद्यं लवणं कटुवैदलम्
वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान्नरः

२३ उदावर्त्तानाहयोः पथ्यापथ्यम्
सुजरञ्च सरं यद् यदन्नं पानञ्च पुष्टिदम्
उदावर्ते तथानाहे सेव्यं वर्ज्यं यतोऽन्यथा

२४ हृद्रोगे पथ्यापथ्यम्
पुरातनो रक्तशालिर्जाङ्गला मृगपक्षिणः
कुलत्थमुद्गयूषाश्च पटोलं कदलीफलम्

रसालं वृद्धकूष्माण्डं दाडिमञ्च हरीतकी
द्राक्षा तक्रं सैन्धवञ्च हितानि हृदयामये

वेगरोधो व्यवायश्च व्यायामो निशि जागरः
सह्यविन्ध्यसमुद्भूतसरितां सलिलन्तथा

मेषीपयो जलं दुष्टं गुरुतिक्ताम्लभोजनम्
पत्रशाकञ्चाध्यशनं न हितानि हृदामये

२५ उदररोगे पथ्यापथ्यम्
अब्दोत्पन्ना रक्तशालिर्यवमुद्गकुलत्थकाः
माक्षिकञ्च सुरा सीधुर्जाङ्गला मृगपक्षिणः

रसोनमार्द्रकं तक्रं कुलकं शिग्रुजं फलम्
पुनर्नवा कारवेल्लं ताम्बूलैले पयस्तथा

लघ्वन्नं दीपनं तिक्तं वीक्ष्य दोषानलौ बलम्
युञ्ज्यादुदरिणे वैद्य इत्याद्यानि यथातथम्

पयोऽतिपानं गुर्वन्नं स्नेहनं धूमसेवनम्
औदकानूपमांसानि पत्रशाकं तिलो दधि

लवणाशनमुष्णानि विदाहीन्यम्बु दोषवत्
महेन्द्राद्रि भवानाञ्च सरितां सलिलन्तथा

व्यायामश्च व्यवायश्च स्नानं चङ्क्रमणन्तथा
एवंविधानि चान्यानि त्याज्यान्युदरिभिः सदा

२६ गुल्मे पथ्यापथ्यम्
वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम्
न खादेच्चालुकं गुल्मी मधुराणि फलानि च

२७ मूत्राघाते पथ्यापथ्यम्
मूत्रकृच्छ्रेऽश्मरीरोगे यत्पथ्यं च प्रयुज्यते
मूत्राघातेषु सर्वेषु तद्युञ्ज्याद् देशकालवित्

२८ मूत्रकृच्छ्रे पथ्यापथ्यम्
अन्नपानमनुग्रं यन्मूत्रलञ्चानुलोमनम्
हितमत्र विजानीयाद्विपरीतं सुखाय न

२९ अश्मर्याम् पथ्यापथ्यम्
व्रणक्रियां हते शल्ये पथ्येनैनाञ्च वर्त्तयेत्

३० प्रमेहे पथ्यापथ्यम्
श्यामाककोद्रवोद्दालगोधूमचणकाढकी
कुलत्थाश्च हिता भोज्ये पुराणा मेहिनां सदा

जाङ्गलं तिक्तशाकञ्च यवान्नञ्च श्रमो मधु
एतदन्यच्छर्कराद्यंश्लेष्मलञ्च न शर्मणे

३१ सोमरोगे पथ्यापथ्यम्
यवगोधूममांसानि क्षीरमुद्धृतसारकम्
व्यायामो भ्रमणञ्चापि हिताय सोमरोगिणाम्

एक्षवञ्चाम्बुपानञ्च फलमामसुखासनम्
अहिताय विनिर्दिष्टं भिषग्भिः शास्त्रकोविदैः

३२ स्थौल्ये पथ्यापथ्यम्
पुराणशालयो मुद्गकुलत्थोद्दालकोद्रवाः
लेखना बस्तयश्चैव सेव्या मेदस्विना सदा

श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनैः

अस्वप्नञ्च व्यवायञ्च व्यायामं चिन्तनानि च
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणातिप्रवर्द्धयेत्

प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम्
उष्णमन्नस्य मण्डं वा पिबन् कृशतनुर्भवेत्

स्नानं रसायनं शालीन् गोधूमान् सुखशीलताम्

क्षीरेक्षु विकृतीर्माषान् सौहित्यं स्नेहनानि च
स्वभावस्थत्वमन्विच्छन् मेदस्वी परिवर्जयेत्

३३ शोथरोगे पथ्यापथ्यम्
पुराणाः शालयो मुद्गा यवाः शिम्बी पुनर्नवा
रक्तशिग्रुरसोनौ च माणमूलं पटोलकम्

ताम्रचूडमयूरादिखगानामामिषैरसम्
शृङ्गीमद्गुरयोर्यूषो यूषः कूर्मामिषोद्भवः

निम्बपत्रं हरिद्रा च तिक्तानि दीपनानि च
इत्याद्यानि विजानीयाद्धितानि श्वयथौ भिषक्

गुर्वन्नंमद्यमम्लञ्च शीततोयं विदाहि च
दिवास्वापं मैथुनञ्च शोथरोगीः परित्यजेत्

३४ वृद्धिरोगे पथ्यापथ्यम्
अनभिष्यन्दि पानान्नं नातिशीता क्रिया तथा
वृद्धिरोगे हिताय स्याद्विपरीतं विवर्ज्जयेत्

३५ गलगण्डादिरोगे पथ्यापथ्यम्
यवमुद्गपटोलानि कटुरूक्षञ्च भोजनम्
छर्दिं शोणितमोक्षञ्च गलगण्डे प्रयोजयेत्
वातकफवृद्धिकरा योगा अपथ्याः

३६ अर्बुदरोगे पथ्यापथ्यम्
पुराणघृतपानञ्च जीर्णलोहितशालयः
यवा मुद्गाः पटोलञ्च रक्तशिग्रुः कठिल्लकम्

शालिञ्चशाकं वेत्राग्रं रूक्षाणि च कटूनि च
दीपनानि च सर्वाणि गुग्गुलुश्च शिलाजतु

गलगण्डे गण्डमालाऽपचीग्रन्थ्यर्बुदान्तरे
यथादोषं यथाऽवस्थं पथ्यमेतत् प्रकीर्त्तितम्

दुग्धेक्षुविकृतिः सर्वा मांसं चानूपसम्भवम्
पिष्टान्नमम्लं मधुरं गुर्वभिष्यन्दकारि च
अर्बुदेऽपथ्यमेतद्धि वर्ज्यमर्बुदरोगिभिः

३७ श्लीपदरोगे पथ्यापथ्यम्
कफघ्नं सारकं पानमन्नं वह्निकरञ्च यत्
नाभिष्यन्दकरं पथ्यं हेयमन्यद्विजानता

३८ विद्रधिव्रणरोगे पथ्यापथ्यम्
जीर्णशाल्योदनं स्निग्धं जीवन्ती च पुनर्नवा
पटोलं मुद्गयूषश्च हितान्येतानि सन्ततम्

अम्लं दधि च शाकं च मांसमानूपमौदकम्
क्षीरं गुरूणि चान्नानि व्रणे च परिवर्जयेत्

३९ व्रणशोथे पथ्यापथ्यम्
शोथे यान्यन्नपानानि भेषजानि हितानि च
तानि सर्वाणि जानीयाद् व्रणे स्युः शर्मणे सदा

आगन्तुजव्रणे पथ्यापथ्यम्
शारीरव्रणवच्चात्र क्रिया कार्या भिषग्वरैः

४१ भग्नाधिकारे पथ्यापथ्यम्
मांसं मांसरसः क्षीरं सपिर्यूषः कलायजः
बृंहणञ्चान्नपानञ्च देयं भग्नाय जानता

लवणं कटुकं क्षारमम्लं मैथुनमातपम्
व्यायामञ्च न सेवेत भग्नो रूक्षान्नमेव च

४२ नाडीव्रणे पथ्यापथ्यम्
यद्वायोरानुलोम्याय यच्चाग्निबलवृद्धये
यच्चास्रशुद्ध्यै तत्पथ्यमतोऽन्यच्चात्र गर्हितम्

४३ भगन्दरे पथ्यापथ्यम्
सर्षपः शालिमुद्गौ च विलेपी जाङ्गलो रसः
पटोलं शिग्रु वेत्राग्रं पत्तूरं बालमूलकम्

तिलसर्षपयोस्तैलं तिक्तवर्गो घृतं मधु
एवंविधानि चान्यानि भगन्दरहितानि हि

विरुद्धान्यन्नपानानि विषमाशनमातपम्
व्यायामं मैथुनं युद्धं पृष्ठयानं गुरूणि च
संवत्सरं परिहरेदुपरूढव्रणो नरः

४४ उपदंशे पथ्यापथ्यम्
रक्तशालि यवं मुद्गं घृतं शिग्रुफलन्तथा
पटोलं तिक्तवर्गञ्च निषेवेतोपदंशवान्

दिवानिद्राञ्च गुर्वन्नं वेगसन्धारणं गुडम्
मद्यमायासमम्लञ्च वर्जयेदुपदंशवान्

पापप्रमेही वातास्री कुष्ठी पापोपदंशवान्
न भजेदङ्गनां नापि तद्वदिन्यङ्गना नरम्

४५ शूकदोषे पथ्यापथ्यम्
शूकरोगेषु पथ्यानि सर्पिः शालिर्यवो वचा
मुद्गयूषो दाडिमञ्च पटोलं बालमूलकम्

शिग्रुं कर्कोटकं चैव वेत्राग्रं च कठिल्लकम्
पत्तूरं सैन्धवं तैलं कूपस्य सलिलन्तथा

धारणं मूत्रवेगस्य दिवानिद्रा च मैथुनं
व्यायामो गुरुभोज्यञ्च न हितानि तथा गुडाः

४६ कुष्ठेषु पथ्यापथ्यम्
पुराणाः शालयो मुद्गा आढक्यश्च मसूरकाः
यवा निम्बस्य पत्राणि पटोलं बृहतीफलम्

चक्रमर्ददलं मेषशृङ्गञ्च हिलमोचिका
कोषातकी च वेत्राग्रं पक्वं तालं पुनर्नवा

गोखरोष्ट्राश्वमहिषीमूत्रं सर्पिर्वि रेचनम्
निखिलानि च तिक्तानि कुष्ठरोगे हितानि च

पापं कर्म दिवानिद्रा विरुद्धविषमाशनम्
व्यायामो वेगरोधश्च सूर्य्यरश्मिश्च मैथुनम्

गुरुद्रवनवान्नानां भोजनञ्च गुडो दधि
दुग्धं मद्यमामिषं च मत्स्यो माषस्तिलस्तथा

इक्षुरम्लं मूलकञ्च विष्टम्भि च विदाहकृत्
एवंविधानि चान्यानि कुष्ठे वर्ज्यानि नित्यशः

४७ क्षुद्ररोगे पथ्यापथ्यम्
वातानुलोमनं यच्च शकृन्मूत्रप्रवर्त्तनम्
शोधनं शोणितस्यापि त्रिदोषघ्नानि यानि च

द्रव्याणि क्षुद्ररोगेषु हितान्येवंविधानि च
विपरीतानि सर्वाणि वर्जनीयानि यत्नतः

४८ विस्फोटे पथ्यापथ्यम्
रक्तदोषहरं यद् यद् यद् यत्पित्तप्रणाशनम्

सर्वमत्र प्रयोक्तव्यं विविच्य भिषजा सदा

४९ मसूरिकारोगे पथ्यापथ्यम्
यथातथं प्रतीकार्य्या ज्वरकासादयश्च ते
उच्चैस्तमे प्रशस्ते च मसूरीरोगपीडितः

शुष्के गृहे वसेन्नित्यं गुरूष्णवसनावृतः
शीतं वातं जलं शीतं वह्नितापं तथातपम्

त्यजेत् कान्तां दिवास्वापं यात्रां रात्रौ च जागरम्
किञ्चिदुष्णाम्बुना स्वेदः रोमान्तीज्वरनाशनः

पूर्वं लङ्घनवान्तिरेचनशिरावेधाः शशाङ्कोज्ज्वला
जीर्णा षष्टिकशालयोऽपि चणका मुद्गा मसूरा यवाः

सर्वेऽपि प्रतुदाः कपोतचटका दात्यूहक्रौञ्चादयो
जीवञ्जीवशुकादयोऽपि कुलकं काठिल्लमाषाढकम्

इत्थं सर्वदशाविभागविहितं पथ्यं यथादोषतः
संयुक्तं मुदमातनोति नितरां नृणां मसूरीगदे

रतं खेदं श्रमं तैलं गुर्वन्नं क्रोधमातपम्
दुष्टाम्बु दुष्टपवनं विरुद्धान्यशनानि च

निष्पावमालुकं शाकं लवणं विषमासनम्
कट्वम्लं वेगरोधञ्च मसूरीगदवांस्त्यजेत्

५० विसर्पे पथ्यापथ्यम्
तिक्तवर्गोऽखिलश्चैव पानान्नमविदाहकम्
द्रव्यं शोणितसंशुद्धिकरं चन्दनलेपनम्

अनुद्वेगकरं कर्म विसर्पे परमं हितम्
विपरीतं विजानीयात् क्लेशदं गदवृद्धिकृत्

५१ शीतपित्तादिषु पथ्यापथ्यम्
पुराणाः शालयः शस्ता यूषो मुद्‌गकुलत्थयोः
कर्कोटकं कारवेल्लं शिग्रुर्द्राक्षा च दाडिमम्

कटुतैलं तप्तनीरं निखिलं कफपित्तहृत्
ज्ञेयानि शीतपित्तादिगदेषु शुभदानि हि

गुर्वन्नपानं क्षीरेषु विकारान् मधुरं रसम्
अम्लञ्चाप्यौदकानूपजीवानामामिषं तथा

स्नेहं मद्यं नवीनञ्च मत्स्यं प्राग्दक्षिणानिलम्
पीतमम्बु दिवास्वापं शीतपित्तादिमांस्त्यजेत्

५२ उदर्दकोठादिरोगे पथ्यापथ्यम्
शालिमुद्गकुलत्थांश्च कारवेल्लमुपोदिकाम्
वेत्राग्रं तप्तनीरञ्च श्लेष्मपित्तहराणि च

कटुतिक्तकषायाणि सर्वाणीति गणः सखा
शीतपित्तोदर्दकोठरोगिणां स्याद्यथामतम्

क्षीरेक्षुजाता विविधा विकारा मत्स्यौदकानूपभवामिषाणि
नवीनमद्यं वमिवेगरोधः प्राग्दक्षिणाशापवनोऽह्नि निद्रा

स्नानं विरुद्धाशनमातपञ्च स्निग्धं तथाऽम्ल मधुरं व्यवायः
गुर्वन्नपानानि च शीतपित्तकोठामयोदर्दवतां विषाणि

५३ अम्लपित्ते पथ्यापथ्यम्
यवगोधूममुद्गाश्च पुराणा रक्तशालयः

जलानि तप्तशीतानि शर्करा मधुशक्तवः

कर्कोटकं कारवेल्लं पटोलं हिलमोचिका
वेत्राग्रं वृद्धकूष्माराडं रम्भापुष्पञ्च वास्तुकम्

कपित्थं दाडिमं धात्री तिक्तानि सकलानि च
ग्रम्लपित्तामये नित्यं सेवितव्यानि मानवैः

नवान्नानि समस्तानि कफपित्तकराणि च
वमिवेगं तिलान् माषान् कुलत्थास्तैलभन्नणम्

ग्रविदुग्धञ्च धान्याम्लं लवणाम्लकटूनि च
गुर्वन्नं दधि मद्यञ्च वर्जयेदम्लपित्तवान्

५४ वातरक्ते पथ्यापथ्यम्
यवषष्टिकनीवारकलायारुणशालयः
गोधूमश्चणको मुद्गस्तुवरी च मुकुष्ठकः

ग्रव्यजामहिषीणाञ्च गवां सर्पिः पयस्तथा
उपोदिका काकमाची वेत्राग्रं सुनिषरणकम्

वास्तूकं कारवेल्लञ्च कूष्माराडञ्च पुरातनम्
पटोलं तिक्तसङ्घश्च पथ्यानि वातशोणिते

माषं कुलत्थं निष्पावं कलायं मूलकं दधि
मद्यं मांसञ्च मत्स्यञ्च काञ्जिकं ज्ञारसेवनम्

दिवास्वप्नं वह्नितापं व्यायामं मैथुनन्तथा
कटूष्णगुर्वभिष्यन्दि लवणाम्लानि वर्जयेत्

५५ वातरोगेषु पथ्यापथ्यम्

संवत्सरोषिताः शालिषष्टिकास्तैलसर्पिषी
ग्राम्यानूपौदकानाञ्च यूषो माषकुलत्थयोः

नवीनतिलगोधूमवार्त्ताकुलशुनानि च
रोहितो मद्गुरः शृङ्गी वर्मी च कवयील्लिशौ

द्राक्षादाडिमजम्बीरपरूषकफलानि च
स्निग्धोष्णानि च भोज्यानि स्निग्धोष्णमनुलेपनम्

एवंविधानि सर्वाणि हितानि वातरोगिणाम्
तृणधान्यकलायञ्च चणको राजमाषकः

कठिल्लकञ्च निष्पावबीजं बिम्बीकशेरुकम्
शीतमम्बु विरुद्धान्नं व्यवायो भ्रमणं बहु

एवं विधानि सर्वाणि न हितान्यनिलामये
विशेषादर्दिताध्मानवतां स्नानं विगर्हितम्

५६ ऊरुस्तम्भे पथ्यापथ्यम्
भोज्याः पुराणा गोधूमकोद्रवोद्दालशालयः
जाङ्गलैरघृतैर्मांसैः शाकैश्चालवणैर्हितः

शाकैरलवणैर्दद्याञ्जलतैलाज्यसाधितैः
सुनिषण्णकनिम्बाद्यैर्जीर्णं शाल्योदनं भिषक्

प्रतारयेत् प्रतिस्त्रोतो नदीं शीतजलां शिवाम्
सरश्च विमलं शीतं स्थिरतोयं पुनः पुनः

गुरुशीतद्रवस्निग्धविरुद्धासात्म्यभोजनम्
त्यजेदम्लञ्च लवणमूरुस्तम्भगदार्दितः

५७ वेपथुवाते पथ्या पथ्यम्
वातव्याधिषु यत् पथ्यं यदपथ्यञ्च कीर्त्तितम्
ज्ञेयं वेपथुवाते तत् पथ्यञ्चापथ्यमेव च

५८ अचल वाते पथ्या पथ्यम्
अपस्मारे च मूर्च्छायां तथा वातामयेऽपि च
यत्पथ्यं यदपथ्यञ्च तत्तदेवात्र सम्मतम्

५९ स्खालित्ये पथ्यापथ्यम्
पथ्यमत्र विजानीयाद् द्रव्यं पुष्टिबलप्रदम्

६० खञ्जनिकाधिकारे पथ्यापथ्यम्
आरोग्यमिच्छता त्याज्यं खञ्जनी द्विदलाशनम्
निदानसेविनो यस्मान्न व्याधिर्विनिवर्त्तते

वातघ्नं पोषणं यच्च पानमन्नञ्च भेषजम्
प्रयोज्यमिह तत्सर्वं विविच्य भिषजा सदा

६१ मुखरोगे पथ्यापथ्यम्
अन्नपानादिकं यच्च सुजरं वह्निदीपनम्
व्रणदोषहरं तत्तन्मुखरोगे हितं मतम्

दन्तकाष्ठं स्नानमम्लं मत्स्यमानूपमामिषम्
दधि क्षीरं गुडं माषं रूक्षान्नं कठिनाशनम्

अधोमुखेन शयनं गुर्वभिष्यन्दकारि च
मुखरोगेषु सर्वेषु दिवा निद्राञ्च वर्जयेत्

६२ दन्तरोगेऽपथ्यम्
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम्
तथाऽतिकठिनं भक्ष्यं दन्तरोगी विवर्जयेत्

६३ गलरोगे पथ्यम्
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः

६४ कर्णरोगे पथ्यापथ्यम्
स्वेदो विरेको वमनं नस्यं धूमः शिराव्यधः
गोधूमाः शालयो मुद्गा यवाश्च प्रतनं हविः

लावोमयूरो हरिणस्तित्तिरो वनकुक्कुटः
पटोलं शिग्रु वार्ताकुः सुनिषण्णं कठिल्लकम्

रसायनानि सर्वाणि ब्रह्मचर्यमभाषणम्
उपयुक्तं यथादोषमिदं कर्णामये हितम्

दन्तकाष्ठं शिरः स्नानं व्यायामं श्लेष्मलं गुरु
कण्डूयनं तुषारञ्चकर्णरोगी परित्यजेत्

६५ नासारोगे पथ्यापथ्यम्
स्नेहः स्वेदः शिरोऽभ्यङ्गः पुराणा यवशालयः
कुलत्थमुद्गयोर्यूषो ग्राम्या जाङ्गलजा रसाः

वार्त्ताकुः कुलकं शिग्रुः कर्कोटं बालमूलकम्
लशुनं दधि तप्ताम्बु वारुणी कटुकत्रयम्

कट्वम्ललवणं स्निग्धमुष्णं च लघु भोजनम्
नासारोगे पीनसादौ सेव्यमेतद्यथाबलम्

स्नानं क्रोधं शकृन्मूत्रवातवेगाञ् शुचं द्रवम्
भूमिशय्यां च यत्नेन नासारोगी परित्यजेत्

६६ शिरोरोगे पथ्यापथ्यम्
शालि यवं मांसरसं वार्त्ताकुञ्च पटोलकम्

द्राक्षादाडिमखर्जूरफलानि च पयस्तथा

निशापानं नदीस्नानं गन्धद्रव्यनिषेवणम्
शिरोरोगेषु सर्वेषु हितमुक्तं यथायथम्

द्रव्याणि चातितीक्ष्णानि दुर्जराणि च यानि वा
तान्यनिष्टप्रदान्यत्र तीक्ष्णाश्च निखिलाः क्रियाः

६७ नेत्ररोगे पथ्यापथ्यम्
शालिर्मुद्गो यवो दुग्धं पटोलं चाप्युदुम्बरम्
द्राक्षादाडिमखर्जूरामलकान्यविदाहि च

पुष्टिदानि सुपाच्यानि हितानि नयनामये
विपरीतानि जानीयाद् वर्जनीयानि यत्नतः

६८ ध्वजभङ्गे पथ्यम्
शालिषष्टिकगोधूममसूरचणकादयः
हैयङ्गवीनदुग्धे च नवनीतं सुरा सिधु

चटको वर्त्तकश्चैव तित्तिरश्चरणायुधः
शशहरिणच्छागानां मांसानि कोमलानि च

द्राक्षाखर्जूरदाडिमजम्ब्वाम्रफलानि च
पथ्यान्येतानि वस्तूनि ध्वजभङ्गप्रशान्तये

६९ वाजीकरणे
सर्वं वृष्यम् पथ्यम्
यथा
यत् किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु
हर्षणं मनसश्चैव सर्वं तद् वृष्यमुच्यते

अपथ्यम्
अत्यन्तमुष्णकटुतिक्तकषायमम्लं क्षारञ्च शाकमथवा लवणाधिकञ्च
कामी सदैव रतिमान् वनिताऽभिलाषी नो भक्षयेदिति समस्तजनप्रसिद्धिः

७० शुक्रमेहे पथ्यापथ्यम्
अभिष्यन्द्यतितीक्ष्णञ्च पानान्नं वह्निसूर्ययोः
सन्तापं स्त्रीप्रसक्तिञ्च वेगरोधं प्रजागरम्

क्रोधं शोकं दिवानिद्रां लङ्घनञ्चातिचिन्तनम्
अत्यालस्यमसत्सङ्गं शुक्रमेहे विवर्जयेत्

अनुग्रं पोषणं शुक्रवर्द्धकं यद् भवेदिह
अन्नपानं शुभं ज्ञेयं विपरीतं न शर्मणे

७१ प्रदरे पथ्यापथ्यम्
क्षतघ्नं पोषणं यच्च तदन्नमिह शर्मणे
विपरीतं विजानीयाद् वर्ज्जनीयं विशेषतः

७२ योनिरोगे पथ्यापथ्यम्
बृंहणं पोषणं बह्नेर्दीपनञ्चानुलोमनम्
अन्नं पानं योनिरोगे सेवेतान्यद्विवर्जयेत्

७३ गर्भिण्याः पथ्यापथ्यम्
शालयः षष्टिका मुद्गा गोधूमा लाजशक्तवः
नवनीतं घृतं क्षीरं रसाला मधु शर्करा

पनसं कदली धात्री द्राक्षाऽम्ल स्वादु शीतलम्
कस्तूरी चन्दनं माला कर्पूरमनुलेपनम्

चन्द्रिका स्नानमभ्यङ्गो मृदुशय्या हिमानिलः
सन्तर्पणं प्रियाश्लेषो विहारश्च मनोरमः

प्रियङ्करं चान्नपानं गर्भिणीनां हितं सदा
स्वेदनं वमनं क्षारं कदन्नं विषमाशनम्
अपथ्यमिदमुद्दिष्टं गर्भिणीनां महर्षिभिः

७४ स्तनरोगे पथ्यापथ्यम्
तद्दोषशमनं पानमन्नमौषधमाचरेत्
बृंहणीयं विधिं कुर्याद् दृष्ट्वाऽदुग्धौ स्तनौ स्त्रियः

७५ सूतिकारोगे पथ्यापथ्यम्
व्यायामं मैथुनं क्रोधं शीतसेवाञ्च वर्जयेत्
प्रसूता युक्तमाहारं विहारञ्च समाचरेत्

७६ बालरोगे पथ्यापथ्यम्
यत्पथ्यं यदपथ्यं च नृणामुक्तं ज्वरादिषु
तत्तद्विधेयमौचित्याद् बालानां तेषु जानता

पूर्वं पथ्यमपथ्यञ्च मन्दाग्नौ यत्प्रकीर्त्तितम्
औचित्याद् योजयेज्जाते बालानां पारिगर्भिके

आगन्तून्मादवातानां पथ्यापथ्यं यदीरितम्
औचित्याद् योजयेत्तत्र बालेषु ग्रहरोगिषु

७७ विषरोगे पथ्यापथ्यम्
शालयः षष्टिकाश्चैव कोरदूषाः प्रियङ्गवः
मुद्गा हरेणवस्तैलं सर्पिश्चापि नवं क्वचित्

वार्त्ताकुः कुलकं धात्री जीवन्ती तण्डुलीयकम्
भोजनार्थे विषार्त्तानां हितं पटुषु सैन्धवम्

विरुद्धाध्यशनक्रोधक्षुद्भयायासमैथुनम्
वर्जयेद्विषमुक्तोऽपि दिवास्वप्नं विशेषतः

अथ प्रथमपरिशिष्टोक्तरोगाणां पथ्यापथ्यविवेचना
प्लीहयकृद्रोगयोः पथ्यापथ्यम्

जीर्णज्वरे हितं यद् यद् यद् यत्तत्राहितं मतम्
यकृत् प्लीहामये चापि तथा ज्ञेयं हिताहितम्

विशेषो यकृति
मद्यमग्न्यातपं श्रान्तिं गुर्वन्नं विषमाशनम्
तीक्ष्णाशनं दिवास्वापं निशि चापि प्रजागरम्

तौर्य्यत्रिकमथाध्मानं शोकचिन्ताभयानि च
क्रोधावेगं वेगरोधं यकृद्रोगी परित्यजेत्

उरस्तोयरोगे पथ्यापथ्यम्
ततो व्यवायमध्वानं व्यायामं शिशिरं जलम्
अहःस्वापं शुचं क्रोधं त्यजेद् वर्षं गदोत्थितः

गदोद्वेगे पथ्यापथ्यम्
हृद्यं स्निग्धञ्च पानान्नं सुपाच्यं देहपोषणम्
अपदार्थगदे प्रोक्तं शुभायान्यत्र शर्मणे

शैशवसंन्यासे पथ्यापथ्यम्
यवो लोहितशालिश्च वार्ताकुश्च पटोलकम्
यूषो जाङ्गलमांसस्य रोहिताद्यास्तथा झषाः

धारोष्णं गोपयस्तक्रं स्नानं नद्या जलेऽमले
हितान्येतानि मूर्च्छायां संन्यासाख्ये तथा गदे

तीक्ष्णं द्रव्यं क्रिया तीक्ष्णा वेगानाञ्च विधारणम्
क्रोधशोकाद्यभिभव इत्येतैर्वर्द्धते गदः

योषाऽपस्मारे पथ्यापथ्यम्
यद्धातुपोषकं पानमन्नमौषधमेव च
कोष्ठशुद्धिकरञ्चापि तत्तदत्र प्रयोजयेत्

तत्त्वोन्मादे पथ्यापथ्यम्
धारोष्णं गोपयः शस्तं शालयश्च पुरातनाः
यवमुद्गतिलाश्चापि निखिलं चानुलोमनम्

परिहासः प्रियैः सार्द्धं प्रियाभिश्च सहासनम्
इत्येतानि हितान्यत्र विपरीतान्यशर्मणे

स्नायुशूलाधिकारे पथ्यापथ्यम्
यत् पथ्यं यदपथ्यञ्च वातव्याधौ प्रकीर्त्तितम्
तथैव स्नायुशूलेषु निर्णीतं विबुधैरिति

ताण्डवरोगे पथ्यापथ्यम्
बृंहणं पानमन्नञ्च स्नानं स्रोतस्वतीजले
शयनं क्लेशशून्यं यत् कर्म तच्चेह शर्मणे
कर्षणाद्यखिलं प्रोक्तमशुभाय पुरातनैः

क्लोमरोगे पथ्यापथ्यम्
अनुग्राण्यन्नपानानि क्लोमामयनिपीडितः
सेवेतोग्राणि सर्वाणि यत्नतः परिवर्जयेत्

वृक्के पथ्यापथ्यम्
पथ्यैर्बल्यैः सुपाच्यैश्च भिषगेनं प्रयापयेत्

औपसर्गिकमेहे पथ्यापथ्यम्
भेषजं पानमन्नञ्च निषेवेतानुलोमनम्
व्रणघ्नं मूत्रजननं क्रियामुग्रां विवर्जयेत्

स्मरोन्मादे पथ्यापथ्यम्
हितं प्रकीर्तितञ्चात्र शुक्रमेहघ्नमौषधम्
वातानुलोमनं यच्च सुपाच्यं वह्निदीपनम्
अत्रान्नं योजयेत् प्राज्ञो विपरीतं विवर्जयेत्

शीर्षाम्बुरोगे पथ्यापथ्यम्
लघुपुष्टिकरं सर्वं पानमन्नं सरञ्च यत्
मस्तिष्काम्बुनि तत् पथ्यं विपरीतं हिताय न

मस्तिष्कवेपने पथ्यापथ्यम्
पयोमांसरसाद्यञ्च स्नायूनां बलवर्द्धनम्
अन्नपानादिकं यच्च सुजरं स्वादु सारकम्

शीर्षवेपथुरोगिभ्यो हितं तन्निखिलं मतम्
विपरीतं विजानीयात् कदाचन न शर्मदम्

मस्तिष्कचयापचये पथ्यापथ्यम्
मस्तिष्कस्य चये ह्रासे देहस्य पोषणं लघु
पानमन्नं सुखाय स्याद्विपरीतं न शर्मणे

अंशुघाते पथ्यापथ्यम्
अन्नपानादिकं स्निग्धं बलपुष्टिप्रदं सरम्
हितं स्यादंशुघातिभ्यो विपरीतं न शर्मणे

बाधके योनिरोगे पथ्यापथ्यम्
बृंहणं पोषणं वह्नेर्दीपनञ्चानुलोमनम्
अन्नपानं योनिरोगे सेवेतान्यद्विवर्जयेत्

योनिकण्ड्वधिकारे पथ्यापथ्यम्
यद् यद् वह्निकरं पाच्यं तथा वातानुलोमनम्
अन्नं पानञ्चात्र योज्यं विपरीतं सुखाय न

योन्याक्षेपाधिकारे पथ्यापथ्यम्
अत्र पथ्यं घृतं दुग्धं गोधूमचणकादयः
यूषश्छागादिसम्भूत उग्रवीर्यं हितं न हि

जरायुरोगे पथ्यापथ्यम्
जरायुरोगिणी नारी न च सेवेत पूरुषम्
न खादेदुग्रवीर्याणि नापि कुर्य्यादतिश्रमम्

अण्डाधारे पथ्यापथ्यम्
पथ्यमत्र हविर्दुग्धं शालि प्रत्नो यवस्तिलः
छागमांसरसश्चैव द्रव्यमुग्रं न शर्म्मणे

ओजोमेहे पथ्यापथ्यम्
लघु बल्यं पुराणञ्च धान्यं मुद्गयवादिकम्
वार्त्ताकुञ्च पटोलञ्च काकोदुम्बरकं तथा

कारवेल्लादिकं शस्तं वर्ज्जयेन्मधुरं गुरु
मांसं मत्स्यांस्तथाऽध्वानमातपाग्निनिषेवणम्
दूषितातिशीततोयस्नानपानावगाहनम्

लसिकामेहे पथ्यापथ्यम्
रक्तशाल्योदनं मुद्गं यवो वास्तूकमेव च
पालक्या चैव वेत्राग्रं कर्कोटी कदली तथा

हिमालयप्रदेशे च वासो वा सुस्थचित्तता
हितानेतान् निषेवेत गुर्वभिष्यन्दि भोजनम्

मत्स्यं मांसं तथा रौद्रसेवाऽध्वानं परिश्रमम्
वर्ज्जयेद् यत्नतो धीमानायुरारोग्यवृद्धये

पारदविकारे पथ्यापथ्यम्

वातरक्ते तथा कुष्ठे पथ्यानि यानि तानि च
शिवतेजोभवे रोगे निर्दिशेत् कुशलो भिषक्

इति पथ्यापथ्यविवेचनात्मकं द्वितीयं परिशिष्टं समाप्तम्

समाप्तश्चाऽयं ग्रन्थः